SARASVATĪBHAVANA-STUDIES

[ Vol. 45 ]

# DHARMASAMUCCAYA

OF

BHIKṢU AVALOKITA SINGH

EDITED BY

DR. VIJAYA SAṄKARA CAUBE
Research Associate,
Central Institute of Higher Tibetan
Studies ( Deemed University )
Sarnath, Varanasi

VARANASI
1993

Research Publication Supervisor—
Director, Research Institute
Sampurnanand Sanskrit University
Varanasi.

□

Published by—
Dr. Harish Chandra Mani Tripathi
Publication Officer,
Sampurnanand Sanskrit University
Varanasi-221 002.

□

Available at—
Sales Department,
Sampurnanand Sanskrit University
Varanasi-221 002.

□

First Edition—500 Copies
Price Rs. 250-00

□

Printed by—
Ghan Shyam Upadhyaya
Manager,
Sampurnanand Sanskrit University-Press
Varanasi.

सरस्वतीभवन-अध्ययनमाला

[ ४५ ]

भिक्षुणा अवलोकितसिंहेन समुद्भावितः

# धर्मसमुच्चयः

सम्पादकः

डॉ० विजयशङ्करचौबे

शोधसम्पृक्तः,

केन्द्रीय-उच्च-तिब्बती-शिक्षा-संस्थानम्

सारनाथ, वाराणसी

वाराणस्याम्

२०४९ तमे वैक्रमाब्दे १९१४ तमे शकाब्दे १९९३ तमे खैस्ताब्दे

अनुसन्धानप्रकाशनपर्यवेक्षकः—
निदेशकः, अनुसन्धान-संस्थानस्य
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालये
वाराणसी ।

□

प्रकाशकः—
**डॉ० हरिश्चन्द्रमणित्रिपाठी**
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी–२२१ ००२.

□

प्राप्ति-स्थानम्—
**विक्रय-विभागः,**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी–२२१ ००२.

□

प्रथमं संस्करणम्—५०० प्रतिरूपाणि
मूल्यम्—२५०–०० रूप्यकाणि

□

मुद्रकः—
**घनश्याम-उपाध्यायः**
व्यवस्थापकः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीय-मुद्रणालयस्य
वाराणसी ।

# समर्पणम्

यत्कृपालवतो धर्मदर्शनामृतमापिबम् ।
तस्मै *श्रीमदुपाध्यायजगन्नाथाय* सादरम् ॥
समर्प्यते मया सम्यक् सम्पाद्य च यथामति ।
अवलोकितसिंहस्य भिक्षोर्धर्मसमुच्चयः ॥

❀

# शिवसङ्कल्पः

अथेदमुपह्रियते पाठकहस्तेषु बौद्धभिक्षुणा केनचिन्नातिप्रसिद्धेन **अवलोकितसिंहा**ख्येन प्रणीतः कश्चिद् बौद्धसदाचारसङ्ग्रहात्मकः संस्कृतभाषोपनिबद्धो नातिविस्तृतो न चातिलघुः, नातिप्रसिद्धो न चात्यन्तलुप्तप्रचारः, नातिविशिष्ट-माहात्म्यो न चात्यन्तगुणवन्ध्यः, अत एव मध्यमकोटिगणनीयो बहुजन-हित-सुख-साधनोन्मीलनपरो लोककल्याणपथप्रदर्शको ग्रन्थविशेषो **धर्मसमुच्चयो** नाम सौगत-प्रस्थानगतः। नेदमविदितं विदुषां यदिह भारते वर्षे बहुधा बहुकालं प्राप्तप्रतिष्ठ-मपि; बहुभिः कुशलैर्मेधाविभिर्विशिष्टप्रतिभैः प्राचीनैर्मनीषिभिः प्रामाणिकग्रन्थ-प्रणयनादिभिरस्यां भूमौ बहुतिथेन कालेन बहुधा विततमपि, सौगतं धर्मदर्शनम् अन्तराले काले तथा लुप्तप्रचारं शिथिलप्रभावञ्च समजनि मूलोद्गमदेशे भारते यथा दार्शनिकधुरन्धरैः प्रणीता ग्रन्थतल्लजा अपि अध्ययनाध्यापनपरम्परा-तश्च्यावितकल्पाः समजनिषत। आधुनिकानां कति-कति पाश्चात्त्यविदुषां तदनु-वर्तिनां भारतीयविदुषां चैव महता समुद्यमेनैव बौद्धधर्मदर्शनसाहित्यमत्र पुना रूढमूलं भूत्वा समशितपूर्वां तेजस्वितामासाद्य पुनर्विद्वन्मण्डलेषु यथायथं राराज्यते। तस्यैवायं परिणामो यदेषु वर्षपूगेषु लुप्तकल्पा नैके ग्रन्थाः प्राकाश्यमुपनीता उपनीयन्ते च। प्रकृतोऽयं **धर्मसमुच्चय**ग्रन्थोऽप्येनामेव कोटिमाटीकते।

ग्रन्थस्यास्यापातपरिशीलनेनैव ऐदंयुगीनाः शीघ्रपठितारोऽपि वेत्तु-मुत्सहिष्यन्ते यद् बौद्धाचारबोधनप्रवृत्तोऽप्येष ग्रन्थो न बौद्धजनमात्रोपादेयः, किन्तु बौद्धेतराणामार्यानार्यप्रभेदभिन्नानां तत्तद्धर्मनाममुद्रामुद्रितानां समेषां मानवाना-मुपादेय इति। अत एव बौद्धपरिभाषाभाषितोऽपि बौद्धवेष्टनवेष्टितोऽप्यसौ ग्रन्थो वेदमार्गप्रतिष्ठ-मनु-याज्ञवल्क्यादिधर्मशास्त्रग्रन्था इव मानवमात्रस्य सदाचारो-पदेशाय अलमिति कथनं न दुष्यति। अत एवोभयमार्गविज्ञाः पाठकाः स्वयमेव पदे पदे परस्परसदृशान् भावान् द्रक्ष्यन्त्युभयत्रापि। एतादृशाः कतिपये समान-योगक्षेमाः सन्दर्भास्तरुणविदुषा सम्पादकेनापि क्वचित् क्वचिदादर्शिताः। तत्र स्थालीपुलाकनयेनायमेकः सुप्रसिद्धः प्रसङ्गः परीक्ष्यते --

विषयोपभोगरूपैः कामैः क्रियासमभिहारेण भुक्तैरपि मनुष्यः कदापि क्वापि न तृप्तेः पारं गन्तुमीष्टे, प्रत्युत पौनःपुन्यभोगेन कामा भोगतृष्णामेव वर्धयन्तीत्ययमर्थ एवं प्रतिपाद्यते धर्मसमुच्चयकारेण —

**तृप्तिर्नास्ति सदा कामैर्न कामाः शान्तये स्मृताः ।**
**तृष्णासहायसंयुक्ता ज्वलन्ति ज्वलनोपमाः ॥**

इममेवार्थमित्थमेव व्याचक्षाणः किल **मनु**रप्याह स्म —

**न जातु कामः कामानामुपभोगेन शाम्यति ।**
**हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥**

अन्तरं त्वियन्मात्रमेव यन्मनुवचने वैदिकयज्ञाग्निसंस्कारसम्भृतं हविरुपमानतया प्रयुज्यते, बौद्धसंस्कारानुगते धर्मसमुच्चये तु लौकिकोऽग्निरेव । अत्रेदमन्यदप्यस्मिन् मनुवचने विद्यमानं शब्दव्यङ्ग्यसौन्दर्यरहस्यमवधेयं सुधीभिः । अग्निपर्यायेषु बहुष्वन्येषु सत्सु अत्र मार्मिकः कृष्णवर्त्मशब्दप्रयोगो व्युत्पत्तिलभ्येनाग्नेर्मार्गस्य कृष्णत्वाभिधानेनेहोपमेयभूतस्य कामस्योपभोगपथस्यापि कृष्णत्वव्यञ्जनेन दोषकलङ्कभूयिष्ठतामुपबृंहयति ।

पद्यमिदं मनुस्मृताविवान्यत्र महाभारतादावप्युद्धृत इत्यप्यवधेयम् । बौद्धभिक्षुणा लेखकेन कुत इदमाहृतमिति निर्णयस्तु दुष्कर एव । महाभारतीयसुभाषितसगन्धानि भूयांसि पद्यान्यस्मिन् ग्रन्थेऽन्यत्राप्युपलभ्यन्त इति निदर्शितमेव सम्पादकमहोदयेन "सर्वे क्षयान्ता निचया ······" इत्यादीनां पद्यानां टिप्पणीषु । बौद्धाचार-वैदिकाचारपथयोर्यानि भूयिष्ठानि साम्यानि तेषामनुसन्धाने इमाष्टिप्पण्यो महदुपकरिष्यन्त्युभयपथसादृश्यमनुसन्धित्सून् सहृदयपाठकानिति विश्वसिमः । एवमेव सम्पादकमहोदयेन विदुषा **डॉ० विजयशङ्करचौबेमहोदयेन** बहुधा परिश्रम्येह सङ्कलितानां सदाचारोपदेशकसुभाषितानां भूयसां मूलभूतानि **अभिधम्मकोश-धम्मपद**-प्रभृतिबौद्धाकरग्रन्थवचनान्यपि तत्र तत्र प्रदर्शितान्येव ।

किञ्चान्यत् । बौद्धधर्मदर्शनेऽधीतिना आयुष्मता **श्रीविजयशङ्करेण** ग्रन्थेऽस्मिन् प्रयुक्तानां बौद्धधर्मगतानां विशिष्टानां पारिभाषिकशब्दानामर्थरहस्योद्घाटनेऽपि क्वचित्क्वचिदास्थितो भूयान् यत्न इति नितरां स्थाने । अन्यथा एतदनभिज्ञानां विदुषामपि पाठकानां 'कौसीद्य'–प्रभृतीनां शब्दानां ग्रन्थकर्त्रभिमतोऽर्थो ध्रुवं दुर्बोधोऽभविष्यत् । "**कुशलधर्मेष्वनुत्साहः कौसीद्यम्**" इत्य**भिधर्मकोश**-प्रमाणोपन्यासपूर्वकं यदि न व्याख्यास्यत सम्पादकेन, तर्हि बौद्धप्रस्थानेष्वकृतपरिश्रमैः शास्त्रान्तरेषु निष्णातैरपि पाठकैः कथंकारमस्य याथातथ्यमुद्घाटयिष्यत ।

ग्रन्थलेखकस्यास्य बौद्धभिक्षोरवलोकितसिंहस्य शेमुषी च प्रतिभा च पालिभाषया तथा संस्कृता यथा तद्भाषासंस्कारबलेन वा, पालिभाषानिबद्धपद्यच्छाया-लेखनजनितप्रमादेन वाऽत्र ग्रन्थे प्रयुक्ताः 'यो च मृत्युं न विन्दति', 'अलिप्तो पापकैर्धर्मैः' इत्यादयोऽसंस्कृता विकृतसन्धिप्रयोगाः सम्पातायाताः प्रतिभान्ति। एवमेव तत्र तत्र कतिपये छन्दःपाता अपि समापतिता विलोक्यन्ते। सम्पादकेन ग्रन्थारम्भ-स्थमेकमुदाहरणं तच्छोधनं चापि प्रदर्शितम् २४तमे पृष्ठे "समानस्य इति छन्दः-शुद्धिः" इति टिप्पणीमुखेन। सदाचारपूतस्य भिक्षोर्लेखकस्य सदाचारबोधनमात्र-प्रधाने ईदृशे ग्रन्थे सम्पातायाता दोषा न बहूकर्तव्या विद्वद्भिः पाठकैः; किन्तु "हसन्ति दुर्जनास्तत्र समादधति सज्जनाः" इति नीत्या स्वयमेव समाधातव्या इति सप्रश्रयं निवेदयामः। अन्यथा यस्य कस्यापि सदाचारशिशिक्षिषोरीदृग्दोषान्वेष-णोद्यमो बिल्हणमहाकविप्रतिभोन्मीलितेन केलिवने कण्टकजालनिरीक्षणकुतूहलि-क्रमेलकन्यायेन पाठकानां कृते प्रथमग्रासे मक्षिकापातकल्पां कामपि दुःस्थिति-मुपस्थापयेदित्याशङ्कामहे।

ग्रन्थस्यास्य सम्पादको डॉ० विजयशङ्करचौबेमहोदयस्तावदस्यैव विश्व-विद्यालयस्य बौद्धदर्शनविभागे श्रद्धयाऽधीतश्रमणविद्यः, इत एव च यथाप्रतिभं सम्पादितानुसन्धानकार्यः प्राप्तविद्यावारिध्युपाधिश्च सम्प्रति बौद्धानां प्रथमतीर्थे सारनाथे विश्रुते 'तिब्बती-संस्थाने' प्राप्ताधिकार इति परमं प्रमोदस्थानं नः। यूनाऽनेन विद्वत्पदमारुरुक्षुणा विद्यावारिध्युपाधिप्रेप्सया कृतेऽस्मिन् सम्पादनकर्मणि यदि क्वचिद् भूमिकालेखने, क्वचिच्च विविक्तेषु बहुषु सन्दर्भेषु स्वोपज्ञशीर्षकादि-परिकल्पने, क्वचित् सम्पादने, आहोस्विन्मुद्रणसंशोधनादौ च अव्युत्पत्त्यनवधान-प्रमादादिवशाद् भ्रान्त्या वा स्खलितम्, तदवश्यमेव प्रौढिमशिखरारूढानां विदुषा-मीषदरुन्तुदं प्रतिभायाद् यद्यपि, तथापि तत्र तेषां सहजं सौजन्यमेव शरणीकुर्वन्तो विश्वसिमो वयं यत्ते गुणैकपक्षपातिनो गुणमात्रग्राहिणः स्वीयेन सहजवात्सल्येनास्य नवबाळकस्य दोषानपि गुणीकरिष्यन्ति, गुणपरमाणूंश्च भर्तृहरिनिगदितपथेन पर्वतीकृत्य निजहृदि विकसिष्यन्तीति। यथोक्तम्—

> गुणायन्ते दोषाः सुजनवदने, दुर्जनमुखे
> गुणा दोषायन्ते, किमिति जगतां विस्मयपदम्।
>
> यथा जीमूतोऽयं लवणजलधेर्वारि मधुरं
> फणी पीत्वा क्षीरं वमति गरलं दुःसहतरम्॥

अथवा **कुवलयानन्दे** **श्रीमदप्पयदीक्षितैरुद्धृते** सुभाषितश्लोके यः परमोत्कृष्टः सात्त्विकः स्वभाव आदर्शितः सज्जनानाम् —

**"गुणदोषौ बुधो गृह्णन्निन्दुक्ष्वेलाविवेश्वरः ।**
**शिरसा श्लाघते पूर्वं परं कण्ठे नियच्छति ॥"**

इति, तन्न्यायेन गुणान् श्लाघमाना दोषानत्रत्यान् स्वकण्ठेष्वेव स्तम्भयिष्यन्तीति । वयन्त्वत्र विषये स्वपक्षसुलभाभिनिवेशाः "सर्वः कान्तमात्मीयं पश्यति" इति **महाकविकालिदास**निगदितलोकस्वभाववशगा ग्रन्थस्यास्य नूतनतया प्रकाश्यमानस्य प्रचयगमनं यूनः सम्पादकस्य स्वाध्यायप्रवचनादिरूपे तपसि महान्तमभ्युदयञ्च कामयामह इति शिवम् ।

ग्रन्थस्यास्य मुद्रणकर्मणि विश्वविद्यालयमुद्रणालयव्यवस्थापकेन **श्रीघनश्याम-उपाध्यायेन** तत्सहचरवृन्देन, तथैवास्मत्प्रकाशनाधिकारिणा कर्मशौण्डेन **पण्डित-श्रीहरिश्चन्द्रमणित्रिपाठिना** तत्सहायवृन्देन च सम्भूय साधु परिश्रान्तमिति सर्वेभ्योऽमीभ्यो धारयत्याधमर्ण्यं विश्वविद्यालय इति च शिवानुध्यानेन सम्पूर्णतामेति सर्वम् ।

**वाराणसी**
**बुद्धजयन्ती**
वि० सं० २०५२
( १४-५-१९९५ )

इति
**वि० वेङ्कटाचलः**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# आशीर्वाद

डॉ० विजयशङ्कर चौबे द्वारा सम्पादित भिक्षु अवलोकितसिंह के **धर्मसमुच्चय** को देखकर प्रसन्नता हुई। बौद्धधर्म के साङ्गोपाङ्ग स्वरूप को प्रस्तुत करने वाले इस तरह के ग्रन्थों के प्रकाशन की आज अत्यधिक आवश्यकता है। बौद्ध-धर्म में केवल निर्वाणपक्ष की ही चर्चा नहीं है; अपि तु लौकिक पक्ष भी भूरिशः प्रतिपादित है। अभ्युदय और निःश्रेयस दोनों पुरुषार्थों की सिद्धि के उपाय उसमें वर्णित हैं। सभी पुरुष केवल निर्वाण के ही अभिलाषी नहीं हुआ करते, अपि तु लौकिक-सुख और स्वर्ग आदि की कामना करने वाले भी होते हैं। अतः बौद्धधर्म में लोगों को अनेक श्रेणियों में विभक्त किया गया है। फलतः निर्वाणपक्षीय प्रज्ञा-कथा ही पर्याप्त नहीं होती; अपि तु दानकथा, शीलकथा आदि भी अपेक्षित होती हैं।

प्रस्तुत ग्रन्थ में निःश्रेयस के साथ-साथ अभ्युदयपाक्षिक मार्ग भी पुष्कलतया वर्णित है। अतः यह ग्रन्थ आबाल-वृद्ध, नर-नारी, भिक्षु-गृहस्थ सभी के लिए उपयोगी है।

ऐसे महत्त्वपूर्ण ग्रन्थ को प्रकाश में लाकर डॉ॰ चौबे ने बड़े पुण्य का कार्य किया है। उनकी बुद्धि भविष्य में भी इसी तरह के कार्यों में लगी रहे, ऐसी हम कामना करते हैं। उनके मङ्गलमय भविष्य की कामना के साथ।

**स० रिन्पोछे**
निदेशक
**केन्द्रीय उच्च तिब्बती शिक्षा संस्थान**
सारनाथ, वाराणसी।

# शुभाशंसनम्

अवलोकितसिंहाभिधानेन भिक्षुणा समुद्भावितो **धर्मसमुच्चयः** स्वप्रतिपाद्य-विषयमहिम्ना नितरां ख्यातिमवाप्त इति सर्वे सम्यग् विजानन्ति संसारसारतत्त्व-विदः पण्डिताः। ते सर्वे विषया दृष्टिपथं समानीता उदानचतुष्टयात्मके ग्रन्थचूडा-मणावस्मिन् षट्त्रिंशद् (३६)वर्गेषु, येषामनुशीलनान्मानवः संसारसारवरं तत्त्वं सामर्थ्य-माप्नुयात्। निगूढविषयस्यास्य ग्रन्थस्य सरला सहजा भाषा, उदात्ता शैली चापि कारणत्वं यातेऽस्य लोकप्रियत्वस्य।

ईदृशगुणगौरवमण्डितस्यास्य सारस्वतनिधेः प्रकाशनं नितान्तमावश्यकमिति सार्वजनीनं हृद्हृद्यभावं चित्ते निवेश्याहर्निशं वाङ्मयतपश्चरता सुरभारतीसमा-राधनसमासक्तेन डॉ० **विजयशङ्करचौबे**महाभागेन भावबोधनपरया टिप्पण्या संयोज्य प्राकाश्यं नीयमानमिदं ग्रन्थरत्नं नूनं **धर्मसमुच्चयेति** नामसार्थक्यं संसाध्य धर्मजिज्ञासुजिज्ञासां समाधिं विधास्यतीति द्रढीयान् मे विश्वासः। एतदर्थं डॉ० चौबे-महाशयो धन्यवादार्हः।

**राजदेवमिश्रः**
पूर्वकुलपतिः
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
वाराणसी।

# प्राक्कथन

लोक में भगवान् बुद्ध का उत्पाद दुर्लभ है। ऐसे महापुरुषों का जन्म कभी-कभी ही होता है। उनकी यह विशेषता है कि उनका चिन्तन यथार्थ से प्रारम्भ होता है। दुःख एक यथार्थ है, जो सर्वजनानुभवगम्य है। यह दूसरी बात है कि सब लोगों में अनुभव की तीव्रता समान नहीं होती। कुछ लोग दुःख को भी मोहवश सुख समझकर उसमें रमण करते हैं और पुनः पुनः उसकी चाह करते हैं। इसका कारण उनमें संवेदनशीलता का अभाव ही है। संवेदनशीलता के लिए चित्त का मृदु, कमनीय एवं कर्मण्य होना आवश्यक है। आँख में मुलायम तन्तु के गिरने पर भी तीव्र अनुभूति होती है, जबकि हाथ की हथेली और पैर की पगथली में कर्कश-वस्तु की भी अनुभूति नहीं होती। अतः संवेदनशीलता के लिए चित्त में आँख की तरह अनुभवग्राहिता होना आवश्यक है।

दुःख भी त्रिविध है, यथा—(१) दुःख-दुःख – शिरोवेदना, उदरपीड़ा आदि दुःखदुःख है, जिससे आबाल-वृद्ध, नर-नारी सभी परिचित हैं। यह दुःख भी है और दुःख के रूप में इसका अनुभव भी होता। (२) विपरिणाम-दुःख—यह वह दुःख है, जो तत्काल सुखवत् प्रतीत होने पर भी परिणाम में दुःखदायी होता है, जैसे—रोगी का अपथ्यसेवन। इससे कुछ समझदार लोग परिचित होते हैं। (३) संस्कार-दुःख—यह सूक्ष्म दुःख है। सभी उत्पन्न वस्तुएँ नाशवान् होती हैं। उनसे वियोग अवश्यम्भावी है। उनका नाश होना दुःख है। नाश वस्तुओं का स्वभाव है। अतः सभी उत्पन्न होने वाली वस्तुएँ ( संस्कार ) नाशस्वभाव ही हैं। जो अनित्य है, वह दुःख है और बौद्धधर्म के अनुसार सभी पदार्थ प्रतीत्यसमुत्पन्न हैं, अनित्य हैं। अतः समस्त संसार दुःखमय है। यह दुःख आर्य जनों द्वारा ही जाना जा सकता है, अतः इसे आर्यसत्य कहते हैं। भगवान् ने इसे ही जानने के लिए बार-बार जोर दिया है।

भगवान् बुद्ध बचपन से ही अत्यधिक संवेदनशील थे। जब उन्होंने पहली बार वृद्ध, रोगी एवं मृतक आदि को देखा तो उनको एक बारगी ही जगत् की व्यापक दुःखता का एहसास हो गया। उन्हें आश्चर्य हुआ कि लोग कैसे इतना दुःख होते हुए खुशियाँ मनाते रहते हैं और उससे उद्वेलित नहीं होते। उन्होंने दुःख के स्रोत को जानकर उसे समाप्त करने का उत्तरदायित्व अपने कन्धों पर लिया।

उनके सारे प्रयासों का केन्द्रबिन्दु व्यक्तिगत दुःख नहीं था; अपि तु व्यापक दुःखता के मूल को उखाड़ फेंकना था। इसीलिये वे एक दिन अर्धरात्रि में अपना व्यक्तिगत राजवैभव एवं प्रियजनों को छोड़, घर से बेघर हो प्रव्रजित हो गए।

अब उनके चिन्तन के चिन्तन का मुख्य मुद्दा यह था कि यह दुःख कारणों से उत्पन्न होता है या विना कारणों के? यदि कारणों से उत्पन्न होता है तो वह नित्य कारणों से उत्पन्न होता है या अनित्य कारणों से? क्योंकि यदि वह विना कारणों के उत्पन्न होता है या नित्य कारणों से उत्पन्न होता है तो फिर इसके बिनाश का प्रयत्न व्यर्थ होगा। ऐसी स्थिति में दुःखभोग प्राणी-मात्र की नियति होगी। अपने पूर्वाग्रहमुक्त चिन्तन से वे इस निष्कर्ष पर पहुँचे कि दुःख अनित्य कारणों से ही उत्पन्न होता है। अतः उन्हें जानकर कारणों के नाश से कार्य अर्थात् दुःख का नाश किया जा सकता है; किन्तु वे कारण क्या हैं और उनके नाश का मार्ग क्या है? अब उनकी चिन्ता का मुख्य विषय यही था।

इस प्रश्न के समाधान के सिलसिले में वे तत्कालीन उन तमाम महापुरुषों, साधकों और विचारकों से मिले, जिनके बारे में उस समय यह प्रसिद्धि थी कि उन्होंने इस समस्या का समाधान प्राप्त कर लिया है। वे उनके पास गये, उनसे चर्चा की और उनके बताए मार्ग का अभ्यास भी किया; किन्तु उन्हें उनसे वह समाधान नहीं मिला, जिसकी तलाश में घर से बाहर निकले थे। उन्होंने उन तमाम साधना-प्रकारों का भी छः वर्षों तक लगातार ईमानदारी से अभ्यास किया, जो शास्त्रों में वर्णित थे या जिन्हें परम्परा से सुन रखा था; किन्तु इन सारे कष्टदायक प्रयासों के बावजूद उन्हें वह चीज प्राप्त न हो सकी, जिसकी उन्हें खोज थी। फलतः उन्होंने अपने ही रास्ते आगे बढ़ने का संकल्प लिया, उन्होंने निराशा को अपने पास फटकने नहीं दिया और एक दिन उन्हें वह कुञ्जी हाथ लग गई, वह अकाट्य नियम ज्ञात हो गया, जिसके तहत यह सारा दुःखपूर्ण संसारचक्र प्रवर्तित होता रहता है। उन्हें वह मार्ग भी हाथ लग गया, जिससे उस चक्र के ऊपर उठा जा सकता है। इसे ही बोधि कहते हैं। इस बोधि को प्राप्त करने के कारण वे बुद्ध कहलाए और लोक में अप्रतिम पुरुष के रूप में ख्यात हुए।

इस पूरे दुःखचक्र की व्याख्या उन्होंने अपने प्रसिद्ध **प्रतीत्यसमुत्पाद** नामक सिद्धान्त के द्वारा प्रस्तुत की। इसका तात्कालिक कारण तृष्णा तथा पारम्परिक कारण अविद्या होती है। इसके बारह अङ्ग हैं, यथा—अविद्या, संस्कार, विज्ञान, नामरूप, षडायतन, स्पर्श, वेदना, तृष्णा, उपादान, भव, जाति, जरा-मरण-शोक-परिदेव-दौर्मनस्य-उपायास आदि। इन १२ अङ्गों का क्लेश, कर्म और जन्म इन तीन में भी विभाजन किया जाता है। अविद्या, तृष्णा और उपादान-

क्लेश हैं। संस्कार और भव ये दो अङ्ग कर्म हैं। ये पाँचों हेतु भी कहे जाते हैं। अवशिष्ट सात अङ्ग जन्म हैं। इन्हें तीन भवों ( जन्मों ) में भी विभक्त किया जाता है। इनमें अविद्या और संस्कार पूर्व जन्म से सम्बद्ध हैं। जाति और जरा-मरण अनागत भव से तथा अवशिष्ट आठ अङ्ग वर्तमान भव से सम्बद्ध हैं। तृष्णा का तात्पर्य सभी प्रकार की इच्छाओं या लोभमात्र से है; किन्तु इनमें प्रमुख भव-तृष्णा है, जिसका मतलब अच्छी योनि में जन्म-ग्रहण की इच्छा है। अविद्या का तात्पर्य सभी प्रकार के अज्ञान या मोह से है; किन्तु इसका मुख्य तात्पर्य आत्म-दृष्टि से है, जिसका मतलब है, उस नित्य, शाश्वत आत्मा को मानना, जिसकी बिलकुल ही सत्ता नहीं है या जो नितान्त मिथ्या कल्पना द्वारा कल्पित है। सारे प्रतीत्यसमुत्पाद चक्र के मूल में यही अविद्या है और यही उस दुःखचक्र का प्रथम अङ्ग है। इस आत्मदृष्टि नामक अविद्या ( अज्ञान ) का विरोधी या प्रतिपक्ष नैरात्म्य ज्ञान (अनात्मबोध) है, जिसकी प्राप्ति का उपाय भगवान् बुद्ध ने प्रदर्शित किया है। यही उपाय 'आर्य अष्टाङ्गिक मार्ग' कहलाता है। इसमें सर्वप्रथम 'सम्यक् दृष्टि' ( प्रज्ञा या अनात्मज्ञान ) है। सम्यग् दृष्टि सम्यक् संकल्प, सम्यग्-वाग्, सम्यक् कर्मान्त, सम्यग् आजीव, सम्यग् व्यायाम, सम्यक् स्मृति एवं सम्यक्-समाधि ये ही आर्य अष्टाङ्गिक मार्ग हैं। इन आठ का शील, समाधि और प्रज्ञा में अन्तर्भाव हो जाता है। सम्यग् दृष्टि और सम्यक् संकल्प 'प्रज्ञा' हैं, सम्यग् वाग्, सम्यक् कर्मान्त और सम्यग् आजीव 'शील' हैं तथा सम्यग् व्यायाम, सम्यक् स्मृति और सम्यक् समाधि—ये तीन 'समाधि' हैं। ये शील, समाधि और प्रज्ञा ही बौद्ध-धर्म के तीन प्रमुख स्तम्भ हैं। प्रतीत्यसमुत्पाद के पूर्व-पूर्व अङ्ग कारण या समुदय सत्य हैं तथा पर-पर अङ्ग कार्य या दुःख सत्य हैं। कारण के नाश से कार्य का नाश होता है। कारणों का नाश मार्गसत्य है और कार्य का नाश निरोधसत्य है। इस प्रकार हम देखते हैं कि प्रतीत्यसमुत्पाद द्वारा चारों आर्यसत्य प्रकाशित होते हैं। यही कारण है कि प्रतीत्यसमुत्पाद को भगवान् बुद्ध की शिक्षाओं का सार माना जाता है।

यह प्रतीत्यसमुत्पाद बौद्धों का साधारण कार्यकारण भावमात्र नहीं है; अपि तु उससे अत्यधिक व्यापक है। इसी की विभिन्न व्याख्याओं द्वारा बौद्धों के प्रसिद्ध दार्शनिक प्रस्थान विकसित हुए हैं, जिनमें वैभाषिक, सौत्रान्तिक, योगाचार और माध्यमिक ये चार प्रमुख हैं। अन्य दार्शनिक प्रस्थानों ने जहाँ इससे उत्पाद सिद्ध किया, वहीं माध्यमिकों ने इसके द्वारा अनुत्पाद, अनिरोध या शून्यता के सिद्धान्त को विकसित किया। माध्यमिकों के अनुसार प्रतीत्यसमुत्पाद का अर्थ सापेक्ष उत्पाद है। वस्तु का निरपेक्ष अस्तित्व सर्वथा नहीं है। वह अपने आत्म-लाभ ( स्व-अस्तित्व ) के लिए नितान्त रूप से अन्य ( प्रत्ययों ) पर निर्भर है।

अपनी ओर से ( स्वभावतः या स्वतः ) उसका बिलकुल अस्तित्व नहीं है। अपनी ओर से ( परनिरपेक्ष ) अस्तित्व न होना ही वस्तु की प्रकृति है और यही शून्यता है, यही परमार्थ सत्य है। ऐसा बिलकुल नहीं है कि माध्यमिक वस्तु का किसी तरह का अस्तित्व मानते ही न हों। वे वस्तु का स्वभावतः अस्तित्व नहीं मानते। स्वभावतः अस्तित्व नितान्त कल्पित है; किन्तु सापेक्ष अस्तित्व उन्हें मान्य है और यही संवृति-सत्य है। इसी के आधार पर वे लौकिक और लोकोत्तर, सांसारिक और नैर्वाणिक सभी व्यवस्थाएँ सुचारु रूप से सम्पन्न करते हैं। उनके मतानुसार स्वभावतः सत्ता शाश्वत-अन्त है और सापेक्ष अस्तित्व को भी न मानना उच्छेद-अन्त है। इन दोनों अन्तों का परिवर्जन करके माध्यमिक मध्यम-पथ को आलोकित करते हैं।

इस प्रकार हम देखते हैं कि भगवान् बुद्ध और बौद्धों का सारा कालव्यापी महान् प्रयास दुःख के विरोध में रहा है। अतः कुछ लोगों का यह आक्षेप सर्वथा भ्रमपूर्ण है कि बौद्धधर्म ने दुःखवाद का प्रचार किया है और निराशावाद को जन्म दिया है। बल्कि तथ्य इसके सर्वथा विपरीत है। बौद्धधर्म ने मानव जाति को पहली बार यह एहसास कराया है कि उसके दुःखों के लिए वह स्वयं उत्तरदायी है और विना किसी की कृपा के अपने प्रयासों से वह उसका अन्त कर सकता है।

भगवान् बुद्ध वैसे ही मनुष्य के रूप में पैदा हुए थे, जैसे कोई भी सामान्य मनुष्य पैदा होता है। उन्होंने अपने प्रयास, अध्यवसाय और साधना के बल पर बुद्धत्व जैसा श्रेष्ठ पद प्राप्त किया। उनके बुद्धत्व पद की प्राप्ति ने मनुष्य जाति को यह आश्वासन प्रदान किया कि बुद्धत्व कोरी कल्पना नहीं है; अपि तु उसे प्राप्त भी किया जा सकता है। उनके बुद्धत्व की प्राप्ति से निश्चय ही मनुष्य जाति गौरवान्वित हुई है। जिस उपाय, जिस पद्धति या जिस मार्ग से उन्होंने बुद्धत्व प्राप्त किया था, उस मार्ग का यावज्जीवन उन्होंने विना किसी वर्ण, लिङ्ग आदि के भेद-भाव के प्रचार किया। उनका यही मार्ग-प्रकाशन 'धर्मचक्रप्रवर्तन' कहलाता है।

वे लोगों के कल्याणमित्र थे। वे लोगों की दुःखमुक्ति के प्रयास में सह-भागी मात्र होना चाहते थे, न कि उन्हें अपना अन्धभक्त बनाना चाहते थे। ये ही वे सब कारण थे, जिनकी वजह से उनका धर्म लोगों द्वारा बड़ी संख्या में उनके जीवन में ही अहमहमिकया ग्रहण किया गया। धर्मों के विकास के इतिहास में बौद्धधर्म का विकास निश्चय ही बेजोड़ है।

उन्होंने अपने अनुयायियों से बार-बार कहा कि वे उनकी बातों पर उनके गौरव की वजह से वैसे ही विश्वास न कर लें; अपि तु उनकी ठीक-ठीक परीक्षा करें। परीक्षा में खरी उतरने पर ही उन्हें स्वीकार करें, अन्यथा छोड़ दें, जैसे—

कोई स्वर्ण खरीदने का अभिलाषी सोने की ठीक-ठीक परीक्षा करके ही उसको ग्रहण करता है। जैसा कि उक्त है—

> तापाच्छेदाच्च निकषात् सुवर्णमिव पण्डितैः।
> परीक्ष्य भिक्षवो ग्राह्यं मद्वचो न तु गौरवात्॥
> —तत्त्वसंग्रह–३५८८।

इस प्रकार की उक्ति धर्मप्रवर्तकों में दुर्लभ है। उन्होंने मनुष्य को उत्तरदायी बनाया और उसे सर्वश्रेष्ठ घोषित किया। वह किसी भी देवाधिदेव, महादेव या किसी सर्वशक्तिमान् का वशवर्ती नहीं; अपि तु स्वतन्त्र है। वह अपने भाग्य का स्वयं निर्माता है। उसे ही दुःख के स्रोत को सुखाना है और मनुष्यों को ही नहीं, देवताओं को भी राह दिखाना है; क्योंकि वे भी दुःखी हैं।

चरथ भिक्खवे, चारिकं बहुजनहिताय बहुजनसुखाय लोकानुकम्पाय अत्थाय हिताय सुखाय देवमनुस्सानं। देसेथ भिक्खवे, धम्मं आदिकल्याणं मज्झे कल्याणं परियोसानकल्याणं सात्थं सव्यञ्जनं केवलं परिपुण्णं परिसुद्धं ब्रह्मचरियं पकासेथ।

—विनयमहावग्ग–१, २, ५।

पण्डितप्रवर **अवलोकितसिंह** द्वारा विरचित प्रस्तुत **धर्मसमुच्चय** ग्रन्थ उस महनीय धर्म का प्रमुख सोपान है, जिसकी देशना भगवान् बुद्ध ने अनुकम्पा करके प्राणी-मात्र के कल्याण के लिए की थी। इस ग्रन्थ के प्रकाशन और उसके अध्ययन-अध्यापन से उन भ्रान्तियों के निराकरण में मदद मिलेगी, जिनके चलते यह कहा जाता है कि बौद्धधर्म 'भिक्षु-धर्म' है, उसमें गृहस्थों के लिए स्थान नहीं है। प्रस्तुत ग्रन्थ समस्त नर-नारी, गृहस्थ-प्रव्रजितों के लिए समान रूप से हितकारी है। इस ग्रन्थ से बौद्धधर्म को व्यापक रूप से समझने में सहायता मिलेगी। ऐसे ग्रन्थ और भी हैं; किन्तु उनकी संख्या कम है। आचार्य नागार्जुन का 'सुहृल्लेख' एवं 'रत्नावली' भी इसी कोटि के ग्रन्थ हैं, जिनका प्रणयन आचार्य ने अपने मित्र राजा शातवाहन को राजधर्म की शिक्षा देने के लिए किया था। बाद के आचार्यों के द्वारा विरचित इस प्रकार के ग्रन्थों की संख्या बहुत हो सकती है; किन्तु दैवदुर्विपाक से भारत में बौद्धधर्म के विलोप के साथ-साथ ग्रन्थराशि भी विलुप्त हो गई।

हमारे शिष्य **डॉ० विजयशङ्कर चौबे** ने इस ग्रन्थ पर शोध और सम्पादन का कार्य सम्पन्न करके सराहनीय कार्य किया है। इस ग्रन्थ की पाण्डुलिपि उन्हें नेपाल के अभिलेखागार से प्राप्त हुई थी। इस ग्रन्थ के सम्पादन में उन्होंने समानधर्मा अनेक ग्रन्थों से तुलनात्मक सामग्री संकलित की है, जिसे

पादटिप्पणी में यथास्थान प्रस्तुत किया गया है। इस तरह उन्होंने ग्रन्थ को महत्त्वपूर्ण सूचनाओं से संवलित करके अध्येताओं और जिज्ञासुओं के लिए उपयोगी बनाने की चेष्टा की है।

श्री चौबे युवा पण्डित हैं। उन्होंने बौद्धधर्म जैसे अपरिचित और दुर्बोध क्षेत्र में प्रवेश करके उसे अपने अध्ययन का क्षेत्र बनाया है। यह उनका प्रथम प्रयत्न है। हमें आशा है कि भविष्य में भी वे इस दिशा में अपना प्रयास जारी रखेंगे। हमें विश्वास है कि उनका यह कार्य विद्वज्जनों द्वारा समादृत होगा। उनसे हमें बड़ी आशाएं हैं। हम उनके प्रति अपनी हार्दिक शुभ-कामना व्यक्त करते हैं।

सम्पूर्णानन्द संस्कृत विश्वविद्यालय ने इस दुर्लभ ग्रन्थ के प्रकाशन की अनुमति देकर और तदनुरूप व्यवस्था करके स्तुत्य कार्य किया है। इसके लिए हम सम्बद्ध महानुभावों के कृतज्ञ हैं।

**रामशङ्कर त्रिपाठी**
रिसर्च प्रोफेसर
केन्द्रीय उच्च तिब्बती शिक्षा संस्थान
सारनाथ, वाराणसी।

॥ श्रीः ॥

# भूमिका

अथ उपायनीक्रियते धर्मानुरागिभ्यो श्रमणाचार्यश्रीश्रील-अवलोकितसिंह-समुद्भावितः धर्मसमुच्चयो ग्रन्थः। ग्रन्थोऽयं न केवलं बौद्धधर्मप्रतिपादकः; अपि तु सर्वधर्मसमन्वयवादी इति मया तुलनात्मकदर्शनविषयकम् आचार्योपाधिम् उपलभ्य. विद्यावारिधिः (पी–एच्• डी०) पदवीप्राप्तये अस्य ग्रन्थस्य समीक्षात्मकं सम्पादनप्रसङ्ग एव अनुभूतम्। अस्य ग्रन्थस्य अध्ययनेन न केवलं बौद्धधर्मस्य; अपि तु बौद्धदर्शनस्य संस्कृतेश्च परिचयः प्राप्यते। इतरेषां भारतीय-धर्माणां दर्शनानां संस्कृतीनाञ्च समन्वय अत्र समुपलभ्यते इति अस्य महद् वैशिष्टयम्।

## पाण्डुलिपि-परिचयः

अस्य ग्रन्थस्य पाण्डुलिपियुगलं नेपाले वर्तते, यस्य श्रीराष्ट्रिय-अभिलेखा·लयतः छायाचित्राणि मया प्राप्तानि वाराणसीस्थ प्रो० अगन्नाथोपाध्यायमहोदयस्य सौजन्येन। अस्या भाषा 'संकर·संस्कृतम्' प्रतीयते। इयं भाषा अपभ्रंश·मिश्रिता किं वा जनभाषायुता विद्यते। अत एव अस्य धर्मसमुच्चयस्य रचनाकालः संस्कृतसाहित्यस्य मध्ययुगोऽनुमीयते। अस्य ग्रन्थस्य अद्यावधि कापि अन्या प्रतिलिपिः पुस्तकालये अभिलेखालये वा न प्राप्यते। इदमाकलयते यत् ग्रन्थोऽयं बौद्धानां भारतवर्षतो निष्क्रमणेन सहैव ख्रिष्टाब्दस्य एकादशशताब्द्यां स्वदेशतो लुप्तः। अस्य द्वितीया प्रतिलिपिः यावन्न अन्विष्यते, तावत् इदमेव वक्तुं शक्यते यत् ग्रन्थोऽयं बौद्धधर्मस्य स्वर्णयुगे तेषाम् 'आचारसंहितायाः' संस्थापनाय भिक्षुणा अवलोकितसिंहेन ईसातः अष्टशताब्द्यां समुद्भावितः। ग्रन्थेऽस्मिन् ग्रन्थकारेण त्रिपिटकप्रभृतीनां ग्रन्थानां सम्यग्रूपेण अनुहरणं कृतम्। सम्प्रति या पाण्डुलिपिः प्राप्ता तस्या वैज्ञानिकविश्लेषणाद् इयं धारणा दृढा भवति, यद् अस्या लिपिकरणं पञ्चशतवर्षपूर्वम् एवाभवत्।

१९२२तमे ईसाब्दे अप्रैलमासे पं० श्रीहर्षवज्राचार्येण काठमाण्डूराज्यपुस्तकालयस्य सम्बद्धाद् विद्यालयाध्यापकत एका सूचना सम्प्राप्ता, यत् प्राचीननेपाली-संस्कृतभाषयोर्मध्ये एकं मौलिकं हस्तलिखितपुस्तकं तेन दृष्टम्। नेपालराज्यस्य काठमाण्डूनगरस्य निकटे कस्यचिद् उपासकस्य गृहे पाण्डुलिपिरियं तेन प्राप्तम्।

पाण्डुरियं कस्यचिद् गृहस्य अन्तराले अन्धकारावृतकोणे स्थितेषु पुस्तकेषु निक्षिप्ता अन्वेषयता तेन प्राप्ता । पाण्डुलिपिरियं 'धर्मसमुच्चयः' एवाऽऽसीत् ।

धर्मसमुच्चयः हस्तपत्रेषु १२ × २३ परिमिते प्राचीनभूर्जपत्रे त्रयोदशपञ्चदशाब्द् विशिष्टलिपिभेदैः नेपालदेशे प्रायशो विलिखितं प्राप्यते अस्य ग्रन्थस्य लेखनशैली सौन्दर्यमयी संदृश्यते । यद्यपि कानिचित् पत्राणि त्रुटितानि अस्पष्टानि च प्रतीयन्ते । मन्ये इयं स्थितिः संरक्षकानाम् अनवधानतावशात् समायाता । परिणामतो हस्तलिखितस्य अस्य ग्रन्थस्य केचन परिच्छेदा विनष्टा विद्यन्ते । अत्र प्रायः षोडशाक्षराणां गाथाः (अनुष्टुप्-श्लोकाः) सन्ति। अस्य भाषा सरला विविधार्थयुता ऋजु च विद्यते । सर्वे खलु बौद्धपारिभाषिकशब्दा अत्र उपलभ्यन्ते ।

## धर्मसमुच्चयस्य स्रोतः

ग्रन्थोऽयं त्रिपिटकधर्माणामेकत्र सङ्कलनात्मको मूर्तरूपः । अत्र बौद्धैरधिकृतानां नियमानां बुद्धोपदिष्टानां सिद्धान्तानां च सारतः सङ्कलनं संदृश्यते । तत्र प्रथमश्लोके स्वगुरुं प्रति नमस्कारं विधाय ग्रन्थकर्त्ता स्वयमेव उक्तवान्—

सद्धर्मस्मृत्युपस्थानसूत्र – वैपुल्यसागरात् ।
गाथाः समुद्धरिष्यामि लोकलोचनतत्पराः ॥[१] इति ।

एवं सद्धर्मस्मृत्युपस्थानसूत्र-वैपुल्यसूत्रयोः आधारेण अस्योद्भवः जात इति प्रतीयते । 'सद्धर्मस्मृत्युपस्थानसूत्रं' सुनिश्चितमेव सौगतधर्मस्य पवित्रतमो ग्रन्थः विद्यते; किन्तु इदानीं ग्रन्थोऽयं नोपलभ्यते । सूत्रमिदं स्वतन्त्रभूतं मन्ये नेपालदेशे भारते वा ग्रन्थकर्त्रा तदानीमिदमवश्यमेव दृष्टम्, ततश्च तात्पर्यरूपेण निःसारितम् । अस्यानुवादो जापान फ्रेन्च-भोटभाषासु जातः । ई० षष्ठशतके चीनभाषायामपि अस्य अनुवादः प्राप्यते । यद्यपि चीनानुवादसन्दर्भे विदुषां मतभेदोऽस्ति। महायानसम्प्रदायिनस्तु ईसातः पूर्वं द्वितीयशताब्द्यां ग्रन्थोऽयं चीनदेशे अगमद् इति मन्यन्ते । केचन विद्वांसः अस्यानुवाद ईसातः पूर्वं चतुर्थशतके जात इति मन्यन्ते, केचन च ईसातः पूर्वं पञ्चमशतके जात इति मन्यन्ते । परमिदं निर्विवादं सत्यमस्ति यद् अस्यानुवादः चीनभाषायाम् ईसातः पूर्वं चतुर्थशताब्दीत आरभ्य षष्ठशताब्दिमध्ये जातः ।

अथ च ग्रन्थमेनमधिकृत्य श्रीहाजिमोनाकामुरामहोदयेन बौद्धविदुषा 'सर्वे आफ् इण्डियन बुद्धिजम्' नामके ग्रन्थे किञ्चिद् विशेषमुल्लिखितम् । तदपि महत्त्वशालीति सूचना मया अत्र अविकलं प्रदीयते—

---

१. धर्मसमु० १/२ ।

**DHARMASAMUCCAYA—**

No. 10—Mitsutoshi Moriguchi I BK.[1] Vol. 16 No.1 March 1968,352–354.

No. 13—Dharmasamuccaya compendium de la lai Iere partie (chap. I a V). Par lin li—kouang Texte Sanskrit edite avec la Version Tibetaine et les Version Chinoises et Tarduit en Francais. Paris, Adrien Maisonneuve 1946. Reviewed by H. W. Bailey JRAS[2] 1947,121-122 2e Partie (chap. VI a XII) Per lin li--kouang. Revision de Andre Bareau J. W de Jong et paul Demieville. avec des Appendices Par J. W. de jong 1969. 3e Partie (chap XIII a XXXVI) 1973. The Chinese version of it is in 10 Vols. Taisho No. 728, Translated into Chinese by etc, in the Sun period. This was transleted into Japanese by Jiko Hazama in KIK[3] Kyoshūbu Vol, 14 The Sanskrit text was edited. Lin Li-kouang Dharmasamuccaya, compendium de do Loi I ere Partie (chap. I a V) Texte Sanskrit edite avec la version tiedaine et les versions Chinoses et traduit en francais Paris 1946. Reviewed by Hideo kimura, Bukkyogaku kenkyu N.S[4]. Jan. 1949 The first chap-

1. Indogaku Bukkyogaku Kenkyu (Journal of Indian and Buddhist Studies) Edited by the Jpanese Association of Indian and Buddhist studies Tokyo. Department of Indian Philosophy University of Tokyo.
2. Journal of the Royal Asiatic Society of Great Britain and Ireland ? London.
3. Kokuyaku Issaikyo Tokyo, Daitoshuppan sha, 150 Vols. completed in 1978.
4. New-series.

ter was translated into Japanese by H. Kimura in Ryu ko ku Daigaku Gokuho Dec. 1941. PP–1-19 and the fourith chapter also by him in Bukkyo goku ken kyu No. 2 March 1949 PP. 28—45 ef yamada Bongo Butten PP. 106 –108 इति ।

धर्मसमुच्चयमधिकृत्य एतदरिक्तमपि आङ्ग्लविवरणं मिलति [१]। श्रीधर्मादित्यधर्माचार्येण इण्डियन हिस्टारिकल क्वाटर्ली' ( प्रथमो भागः,मार्च १९२५ ) इति ग्रन्थे धर्मसमुच्चयोपरि एकः लेखः लिखितः, यत्र महत्त्वशालिन्यो बह्व्यः सूचनाः सम्प्राप्यन्ते । तत्र लेखस्य अविकलोंऽशो 'आ' परिशिष्टे द्रष्टव्यः ।

भारतवर्षे इदं सूत्रमासीदिति सङ्केतस्य अयमभिप्रायः । वयं तत्र बोधिचर्यावतारस्य सूत्रसमुच्चयस्य च कर्त्तारः स्मारयामः । नेपालदेशस्थपाण्डुलिप्युद्धृतसङ्केतेन इदं ज्ञायते यद् अयं शान्तिदेवो राज्ञो देववर्मणः पुत्र आसीत् । यो हि पश्चात् बौद्धभिक्षुत्वं त्रिपिटकज्ञानं च प्राप्य नालन्दाविश्वविद्यालये आचार्यो जातः । पश्चादयं भुशुक-समाधिमवाप्य तस्मिन् पूर्णतां च विधाय 'भुशुप्पा' जातः । तथापि यदा विषयेऽस्मिन् विप्रतिपत्तय उत्थिताः, तदा तेन स्वग्रन्थानां सङ्कलनं व्यधायि । ततोऽयं हस्तलिखितो ग्रन्थस्तेन सङ्कलितः । एतेन ज्ञायते यद् अस्य अन्या अपि कृतय आसन् । याः खलु सप्तदशाब्दतः पूर्वं लिखिता अभूवन् । सन्दर्भोऽयम् एतेन

---

1. धर्मसमुच्चयः (Bud)

Anthology by Avolokita simh, compiled from the Voluminous Suddharmsmritypasthanasutra. a book of the Vaipulya class.--Ed & Tr. in French with Tib. & Chinese versions. Dharmsamuccaya lrepartie ( chap-1-V ) par lin li-koung Paris [ 1946 ] (2) ] For textual carrections to the above edn. sce S. Bailey J. R. A. S. ( 1955 ) 37-54.

धर्मसमुच्चयः—-

By Visvesvara. Udaipur I B, 33 - 72. I B. A. List of Manuscripts, in the Sarasvati Bhandar. library Mewar, Udaipur.
—A Complete catalogue of the Tibetan Buddhist Canons ( Bkoh — begun and Bstan hgyur. ) Prof Hakiya. Vi mun- etada Suzuki yensho kamakura. To kontada sendai Japan—1934.

—New Catalogus Catalogorum

तथ्येनापि सुस्पष्टं ज्ञायते, यत् तेन शिक्षासमुच्चयस्य प्रथमपरिच्छेदे श्रद्धामालक्ष्य सद्धर्मस्मृत्युपस्थानसूत्रं तत्र उदलेखि। अतो सूत्रमिदं शिक्षासमुच्चयात् पूर्वमासीद् इति सुनिश्चितम्। ग्रन्थोऽयं प्रवर्तमानं पापं प्रतिरोधयितुं प्रभवति। अहमत्र विश्वसिमि यद् अयमतीव महत्त्वपूर्णो ग्रन्थो विद्यते। यतो हि एतेन विना भिक्षुश्री-अवलोकितसिंहः प्रभूतं तथ्यं स्व-धर्मसमुच्चयार्थं नैवाप्तुं शक्नोति स्म। अन्यत् सूत्रं यदि अनेनावलोकितस्तत् खलु वैपुल्यसूत्रमस्ति। इदमपि अतीव विस्तृतं महत्त्वपूर्णञ्च ग्रन्थरत्नं विद्यते। ग्रन्थेऽस्मिन् बौद्धसिद्धान्ताः सम्यक्तया उल्लिखिता वर्तन्ते। धर्मसमुच्चयोऽपि इदमेव प्रमाणीकरोति।अस्य विषयवस्तु पालिभाषायां लिखितस्य धम्मपदस्य विषयवस्तुतो पञ्चगुणाधिकं प्रतिभाति। अत्र न केवलं धम्मपदः; अपि तु सद्धर्मस्मृत्युपस्थानसूत्र-वैपुल्यसूत्रयोः आधारेण स्वतन्त्रं सङ्कलनमस्ति। बौद्ध-पारिभाषिकग्रन्थेषु यथा शब्दाः प्राप्यन्ते, तथैव अस्मिन् ग्रन्थेऽपि उपलभ्यन्ते। विभिन्नैर्विचारैः इदं सुनिश्चितं भवति यद् धर्मसमुच्चयो न केवलं रूपान्तरणम्; अपि तु महत्त्वपूर्णः पद्यग्रन्थो विशिष्टता समन्वितोऽस्ति। ततोऽप्यधिकं सुस्पष्टता धर्मपर्याणामस्मिन् संग्रहे वर्गीकरणमुपलभ्यते। विद्वान् ग्रन्थकर्त्ता अस्य ग्रन्थस्य धर्मसमुच्चयनाम्नो धर्मपर्यायो नामान्तरमपि लिखति।

ग्रन्थेऽस्मिन् बहूनि विचारानिजातानि सुस्पष्टीकृतानि सन्ति। मन्ये बौद्धशब्दानां विश्लेषणार्थमेव अस्य सङ्कलनमिति। चित्रविहारस्थ –भिक्षुसुजीतश्रीज्ञानस्य वर्णनमनुसृत्य ग्रन्थोऽयं परोपकारार्थं कृत इति। अत्यधिकदायित्वं निभालयता तेन नाम्नः अनुकृतिः स्वरूपं च तथैव स्वीकृते यथा धम्मपदे वर्गाः विद्यन्ते। तथा तत्साहित्यमनुसृत्य पश्चाद् धर्मपर्यायरूपेण धर्मस्य स्वरूपं स्वयमेव भगवता बुद्धेन प्रतिपादि। अत्र ललितविस्तरस्य आर्यगण्डकव्यूहसूत्रस्य च आर्यव्यूहोमहाधर्मपर्यायरूपेणानुकरणमस्ति। आर्यव्यूहोमहाधर्मपर्यायसूत्रम् आर्यगण्डकव्यूहे उद्धृतमस्ति। इदं च तत्र लिखितम् एतस्य लेखनस्य मूलं कारणं कपिलवस्तुनः शुद्धोदनस्य कुमारस्य कृते पूर्णबुद्धत्वावाप्तिः आसीत्। एतस्मिन् प्रसङ्गे बहूनि उद्धरणानि न सन्ति व्याख्यानाय। अतो वैपुल्यसूत्रधर्मपर्याययोर्मध्ये विभेदस्य तथा मूलरूपं नास्ति यथा ललितविस्तरे धर्मपर्याय-वैपुल्यसूत्रयोर्मध्ये परिगण्यते।

भिक्षुणा अनुकरणकर्त्रा अस्य ग्रन्थस्य लेखनतिथिः संवत् वैशाखकृष्णचतुर्थी २९३ इति स्वलेखनावसरे उल्लिखिता। अस्य ग्रन्थलेखकस्य २९३ इति संवत् संभवतः नेपालीसंवत् वर्तते। तत्र च नेपालभूपालानां रुद्रदेवमहाशयानां शासने अस्यानुकरणम् इत्यपि लिखितम्। इयं सुजीतश्रीज्ञानेन चित्रविहारे यत् लिखितं तदनुसारमस्य ग्रन्थलेखनस्य समयो वैशाखकृष्णचतुर्दशी ११७३ ई० पश्चाद् भवति। अयं खलु समयो जिज्ञासूनां कृते अतीव मूल्यवान् विद्यते। यतो हि एतेन बौद्धग्रन्थ-लेखनप्रकारेण भिक्षुसङ्घस्य नेपाले तात्कालिकीस्थितिः ज्ञायते। सामान्यतः शैव-

ब्राह्मणेषु, गोरखा-नेवारजातीयेषु च विश्वासोऽयं प्रचलति यत् नेपाले श्रीमदाद्य-शङ्कराचार्याः तस्यानुयायिनश्च आगत्य बौद्धानां धर्मग्रन्थस्य विनाशं कृतवन्तः। इदमेव मुख्यं तथ्यम् आस्ते यद् हि अबौद्धैः बौद्धकृत्यानां कृते तदानीं यावत् कृतस्य प्रदत्तमास्ते। वस्तुतस्तु वयं भिक्षु-भिक्षुणीसङ्घयोः बौद्धधर्मस्य, संस्कृतेश्च ह्रासस्य कारणं राज्यकृतमसाहाय्यमेवास्ति इति मन्यामहे।

नेपालराज्यपरम्परा प्रदर्शयति यद् रुद्रदेवमहाराजः राजपूतसम्प्रदायानुग्रहः सूर्यवंशस्य पूर्ववर्तिनो अंशुवर्म्मणः प्रतिभागभूत आसीत्। तत्र वामदेवः प्रथमः राजपूतसम्प्रदायस्य राजा आसीत्। माण्डदेवः तस्य पौत्रः षोडशवर्षाणि यावद् राज्यं विधाय स्वपुत्राय नरसिंहदेवाय राज्यं समर्पितवान्। ततस्तेन एको माण्डुदेवः संस्कृतविहाराख्यो महाविहारो विरचितः, भिक्षुत्वं च परिगृह्य निर्वाणं परि-गृहीतम्। तदनन्तरं तस्य पुत्रस्य राज्ञो रुद्रदेवस्य नाम आयाति। यो हि सप्तवर्षाणि यावद् राज्यं विधाय स्वपुत्राय मित्रदेवाय स्वराज्यं प्रदाय भिक्षुसङ्घे परिवव्राज। स खलु ओकुलिविहारनामके राज्ञा मित्रदेववर्म्मणा विरचिते विहारे वासं विधाय तस्य पुनर्निर्माणं कारितवान्। अयं दीपङ्करबुद्धस्य एकां प्रतिमां तत्र समादाय तन्नाम्ना एकं दानमहोत्सवं प्रवर्तितवान्, यत्र उपासकानां दानानि सङ्गृह्यन्ते स्म। सः विहारस्थितानाम् उपासकानां कृते उपयोगार्थं विहारभूमेरपि व्यवस्थां कृतवान्। स्वीये निर्मिते विहारे अध्ययनं साधनां च विधाय कमपि भिक्षुं तत्र अन्यः साम्प्रदायिकानाम् असहिष्णुतां वर्धयितुं नैव प्रेरयत्। अयं राजा बौद्ध-धर्मस्य साहित्यस्य च विकासार्थं बहु प्रयतितवान्। मन्ये अस्मिन्नेव समये अस्य ग्रन्थस्य प्रणयनं स्यात्।

## 'धर्म'शब्दनिरूपणम्

धर्मस्य समुच्चयः धर्मसमुच्चयः' इति धर्मसमुच्चयपदस्य समासो विद्यते। 'धर्म' शब्दमाश्रित्य धर्मज्ञैर्बह्व्यो व्याख्याः कृता। ध्रियते इति धर्मः। जनो यां धारणां विश्वासं वा धारयित्वा कर्मणि प्रवृत्तो भवति, साधारणरूपेण सा धारणा विश्वासो वा धर्मो भवति। दान-पूजनादिकं धर्मस्य स्थूलरूपमस्ति सत्कर्म सदाचारो धर्मस्य मूलाधारः। मानवस्य जीवनं विशुद्धरूपेण व्यावहारिकं भवति। मनुष्याणां व्यवहारेषु य उत्तमो भावः, स सर्वो धर्मस्याङ्गमस्ति। एवं सदसद्विचारपूर्वकमा-चरणं धर्मः विद्यते। अहिंसादयो भावा यदा मानवस्य हृदि तिष्ठन्ति तदा सः सदेवा-चरति न असत्। स्त्री-पुत्रादिधनं, शरीरं, सुहृदः अत्रैव विराजन्ते, किन्तु यशः-शरीरेण साकं धर्म एव गच्छति। अत एव 'धर्मानुगो गच्छति जीव एकः' इति सार्थकं सुभाषितम्। यदि धर्मस्य रक्षा क्रियेत तर्हि धर्मोऽपि सदैव तस्य रक्षां कुर्याद् अन्यथा च विनाशम्। धर्मस्यैवान्ततः विजयो भवति। 'यतो धर्मस्ततो जयः'।

जगन्मूलत्वेन संसृतिनियामका नियमाः 'धर्मः' इति। यत्र धारकत्वं तत्र धर्मत्वम्। योगदर्शने पतञ्जलिना प्रोक्तम् 'अहिंसा सत्यास्तेयब्रह्मचर्यापरिग्रहा' सार्वभौमाः सन्ति। महाभारतकृता महर्षिणा व्यासेन जगद्धारकनियमा 'धर्म' व्याख्यायां संगृहीताः।[१] वैशेषिकदर्शनस्य प्रणेता कणादेन निगद्यते यद् येन लौकिकी-पारलौकिकी चाभ्युन्नतिः जायते, स एव धर्मपदवाच्यः। एवं लोक-परलोकोभय-साधका नियमा धर्मशब्दवाच्याः।[२] मीमांसादर्शनकृता जैमिनिमुनिना निगद्यते— यद् यदेव तत्त्वं मानवानां स्फूर्तिजनकम्, अन्तश्चेतनाप्रबोधकं सत्कर्मणि प्रवर्तकं च तदेव धर्मस्य लक्षणम्।[3] इत्थं धर्म एव जीवनस्य सारः। तिर्यग्योनौ गृहीत-जन्मनो जीवा आहारनिद्रादिकर्मसम्पादनेन स्वीयस्य जीवनस्य साफल्यमश्नुवते, किन्तु न मानवस्य जीवनम् आहार-विहारादिसिद्ध्यर्थमेव, अपि तु विशिष्टोद्देश्य-कृते वर्तते। किं तदुद्देश्यम् ? कथं च तदवाप्तुं शक्यते? इति सर्वं धर्मविषयान्तर्गतमेव। जगति धर्म एव महत्त्वपूर्णं मित्रम्। न केवलं जीवने, परत्रापि सुखसाधनेन धर्मस्य परमबन्धुत्वं परममित्रत्वं च व्यपदिश्यते—

एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः।
शरीरेण समं नाशं सर्वमन्यत्तु गच्छति॥ इति।

सम्प्रति संसारे धर्मस्य द्विविधं रूपम्—कर्मकाण्डमूलकम्, आचारमूलकञ्च। लोके ये धार्मिका विवादा दृश्यन्ते तेषां मूलं कर्मकाण्डमेव विद्यते। नहि धर्मो विद्वेषं शिक्षयति। आचारमूलकस्य सत्याहिंसादिरूपस्य धर्मस्य सर्वधर्मेषु समत्वम् अनिवार्यत्वं च व्यादिश्यते. तत्परिपालने न काचिद् विप्रतिपत्तिः। सदाचारे सर्वेषां सद्गुणानां समावेशोऽभीष्यते। तत्र च प्राधान्येन जितेन्द्रियत्वं संयमो दमो वागादि-निग्रहः सत्य-अहिंसा-ब्रह्मचर्यसेवनं सत्कर्मप्रवृत्तिरसत्कर्मनिवृत्तिश्च प्रशस्यन्ते। सत्य-मेव महात्मना बुद्धेन निगद्यते यद् योऽधर्माद् विरमति, इन्द्रियाणि संयच्छते, ब्रह्म-चर्यम् उपास्ते, वाक्-काय-मनोभिः सुसंयतः स सदाचारवान् इति [४]।

आचार एव विनयसम्पादनेन धृतिदाक्ष्यादिगुणसंवर्धनेन शारीरिक-बौद्धिक-मानसिकोन्नतिप्रदानेन जगदिदं बिभर्ति। 'धारणाद् धर्म इत्याहु'रित्यादेः इदमेव

---

१. धारणाद् धर्म इत्याहुर्धर्मो धारयते प्रजाः।
यः स्याद् धारणसंयुक्तः स धर्म इति निश्चयः॥

२. यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः।

३. चोदनालक्षणोऽर्थो धर्मः।

४. कायेन संवुता धीरा अथो वाचाय संवुता।
मनसा संवुता धीरा ते वे सुपरिसंवुता॥
—धम्मपद–१७/१४।

तात्पर्यम् । सदाचारपालनेनैव श्रेष्ठत्वं गुणोत्कृष्टत्वं चासाद्यते । यो हि आचाराद् हीनः, न स तत्फलमश्नुते । आचारेण च संयुक्तः सर्वां सिद्धि समधिगच्छति । सदाचार एव समेषां तपसां मूलमस्ति । सदाचारविरहितस्य सर्वा क्रिया निष्फलैव । सदाचाराद् दीर्घमायुष्यं समुन्नतिर्धनावाप्तिः दुष्प्रवृत्तेर्निवृत्तिश्च भवति । विद्वज्जनादृतं सत्पुरुषानुष्ठितं देशीयाचारसन्नद्धं पारम्परिकक्रमागतं कर्मैव सदाचारः ।[१] एतत् परिपालने न काचिदापत्तिः । जीवनस्य प्रत्येकेषु क्षेत्रेषु क्षणेषु च धर्मसमन्विताचारस्य महती उपयोगिता । तस्याश्रयणेनैव ऐहिकं पारलौकिकञ्च सुखमवाप्यते । यतो धर्मो जीवनरक्षकः सुखशान्तिसंदायकः समुन्नतिसाधकः अवनतिनाशकः दुःखनिरोधकः सत्कर्मप्रेरकश्चेति सततं सम्पादनीयः । भिक्षुश्रीमदवलोकितसिंहस्य धर्मसमुच्चये एतेषां सदाचारसंयुतानां धर्माणां वर्णनमस्ति ।

## ग्रन्थसारसमीक्षा

अस्तीयं संस्कृतविदुषां शैली यत् ते स्वग्रन्थस्य सुखबोधाय प्रतिपाद्यविषयस्य उपस्थापना अध्यायनाम्ना, परिच्छेदनाम्ना, प्रकरणनाम्ना, वर्गनाम्ना वा कुर्वन्ति । अयञ्च ग्रन्थो भिक्षुणा अवलोकितसिंहेन उदानचतुष्टयान्तर्गतं षट्त्रिंशद् (३६) वर्गेषु समाप्तिमितः । अत्र प्रतिपाद्यानां विषयाणां वर्गेण सहैव नामग्रहणं कृतमिति, तेन नामपठनेन सहैव मन्दानामपि तत्र सुखेन प्रवृत्तिः स्यादिति महत् सौकर्यम् ।

( १ ) **प्रथमम् उदानम्**–अस्मिन् उदाने दशवर्गा विद्यन्ते । जितवर्गः, धर्मोपदेशवर्गः, कायजुगुप्सावर्गः, परिवर्तवर्गः, अनित्यतावर्गः, अप्रमादवर्गः, कामजुगुप्सावर्गः तृष्णावर्गः स्त्रीजुगुप्सावर्गस्तथा मद्यजुगुप्सावर्गः ।

( २ ) **द्वितीयम् उदानम्**—अस्मिन् उदानेऽपि दशवर्गाः वर्तन्ते । चित्तवर्गः, वाग्वर्गः, कर्मवर्गः, संयोजनवर्गः, पापवर्गः, नरकवर्गः प्रेतवर्गः, तिर्यग्वर्गः, क्षुधावर्गस्तथा कौसीद्यवर्गः ।

( ३ ) **तृतीयम् उदानम्**—अस्मिन्नपि उदाने दशवर्गाः सन्ति । यथा—करुणावर्गः, दानवर्गः, शीलवर्गः, क्षान्तिवर्गः, वीर्यवर्गः, ध्यानवर्गः, प्रज्ञावर्गः, निर्वाणवर्गः, मार्गवर्गस्तथा भिक्षुवर्गः ।

( ४ ) **चतुर्थम् उदानम्**—अस्मिन् उदाने षड्वर्गा विद्यन्ते—पुण्यवर्गः, देववर्गः, सुखवर्गः, मित्रवर्गः, राजाववादवर्गः अन्तिमश्च स्तुतिवर्गः ।

---

१. यस्मिन् देशे य आचारः पारम्पर्यक्रमागतः ।
वर्णानां सान्तरालानां स सदाचार उच्यते ।।
—मनु० २/१८ ।

एवमयं धर्मसमुच्चयः षट्त्रिंशद्वर्गेषु प्रतिपाद्य सदाचारविषयं स्वस्मिन् संगृहीतवान् । वर्गस्य नामग्रहणसमकालमेव 'अस्मिन् वर्गे को विषयः प्रतिपादितः ? इति' स्पष्टमवबुद्ध्यते । इति परमकारुणिकेन ग्रन्थकर्त्रा जिज्ञासूनां झटित्यवबोधाय अत्र नामग्रहणपूर्विका विभाजनशैली स्वीकृता ! अयं च वर्गविभागो ग्रन्थकर्त्रा स्वयं विहितः । तथा चोक्तं भिक्षुणा अवलोकितसिंहेन वर्गान्ते उदानश्लोकैः[१]—

जित-धर्म-कायवर्गाः परिवर्तो ह्यनित्यता ।
अप्रमादः काम-तृष्णे स्त्री च मद्येन ते दश ।।

चित्तश्च वाक् तथा कर्म संयोजनन्तु पापकम् ।
नरक-प्रेत-तिर्यक्-क्षुत्-कौसीद्यानि विदुर्दश ।।

करुणा-दान-शीलानि क्षान्तिर्वीर्यमथापि च ।
ध्यानं प्रज्ञाऽथ निर्वाणो मनो भिक्षुश्च ते दश ।।

पुण्य-देव-सुखैर्मित्र-राज-स्तुतिभिरन्विताः ।
सद्धर्मस्मृतिवैपुल्यै गृहीतोऽयं समुच्चयः ।। इति ।

## (१) प्रथमो जितवर्गः

आदिमङ्गलपद्ये त्रिभवोत्तमं भगवन्तं बुद्धं नमस्करोति, यः खलु सर्वमलहीनः निर्मलश्रीः कृपागुणेन सकलजन-समदृष्टियुक्तः सन् क्लेशजम्बालनिमग्नलोकं समुद्धरणेच्छया सदातत्परो वर्तते[२]।

धर्मसमुच्चयस्य प्रयोजनप्रसङ्गे भिक्षुश्रीअवलोकितसिंहः कथयति यत् लोकलोचनतत्पराः गाथाः ( श्लोकाः ) सद्धर्मस्मृत्युपस्थानसूत्रात् वैपुल्यसूत्राच्च समुद्धृत्य सद्धर्मोपदेशं करिष्यामि[३]।

अस्मिन् जितवर्गे भगवता बुद्धेन स्वगुणोत्कर्षेण देव-मानव-तिर्यग्-योनिषूद्भूताः सर्वे सत्त्वा जिताः । ग्रन्थकर्त्रा भिक्षुणा अवलोकितसिंहेन सर्वप्रथमं षड्मोक्षस्यायतनानि उक्तानि । तानि यथा—सत्कर्मस्वप्रमादः, गुरौ शास्त्रे च श्रद्धा, कुशलकर्मणि वीर्यारम्भः, धैर्यम्, ज्ञानाभ्यासः, सत्सङ्गश्चेति । ततो दानशीलादयः

१. धर्मसमु०—१२९, ११९, २४३, २७८।

२. प्रहीणसर्वास्रवनिर्मलश्रीर्यः क्लेशजम्बालनिमग्नलोकम् ।
कृपागुणेनोदहृत्समेन प्रणम्यतेऽस्मै त्रिभवोत्तमाय ।।
—धर्मसमु० १।१।

३. धर्मसमु० १।२।

शान्तिसम्प्राप्तिहेतवः उक्ताः। चापल्य-पापसंश्लेषादिकानि नरकगामीनि प्रयोजनानि उक्तानि। प्रसङ्गप्राप्तानि प्रेतेषु तिर्यक्षु च उद्भवसाधकानि कारणान्युक्तानि।

अशुभकर्मभिः कार्यहानिः सत्कर्मपरम्परया च कार्यसिद्धिः, प्रमादवर्जनपूर्विका च श्रेयसे बुद्धिः अनुत्तमसुखसाधिकेति प्रतिपादितम्। ततश्च शीलस्य, परोपकारस्य, श्रद्धायाः मैत्रीकरुणयोश्च प्रशंसानन्तरं रागद्वेषवियुक्तस्य प्रमादरहितस्य सन्तुष्टस्य सर्वप्राणिष्वनुकम्पिन एव समचित्तस्य जिज्ञासोः कार्यसाफल्यं साधितम्। एवमेव धर्मदानरतो धीरो मात्सर्येर्ष्याविमुक्तश्च योगी निर्वाणमधिगच्छति। कार्याकार्यविधिज्ञस्य शान्तस्य गुरुपूजारतस्य ध्यानाध्ययनतत्परस्याशठस्य अतिदक्षस्य नित्यं च प्रियवाक्यकुशलस्यैव कार्यसिद्धिर्भवति। एवमेव देशकालविधिज्ञस्य साध्यासाध्यं च जानतः शक्योपायविधानतत्परस्यैव कार्यं सिद्ध्यति। तथैव योगिना अक्रोधेन क्रोधः, क्षमया क्रूरता अधर्मश्च धर्मेण हन्यते। सत्येन मृषावाक्यं, समाधिना पैशुन्यम् मार्दवेन पारुष्यम् च जेतुं शक्यते। मैत्र्या प्राणातिपातः (हिंसा), दानेन स्तेयं जेतुं शक्यते। अविद्या विद्यया, रात्रिर्दिवसेन कृष्णपक्षश्च शुक्लपक्षेण जित इति सर्वैरनुभूयते।

इत्येवं गुणानां प्रशस्तिवाचनानन्तरम् अन्ते उदाहरणपूर्वकम् अर्हतः प्राशस्त्यमुट्टङ्कितम्। तथा हि तेनोक्तम्—मेरुणा पर्वता इव, वृक्षेण वनमालिका इव, आदित्येन ग्रहतारका इव, दानेन दारिद्र्यमिव, मार्दवेन शाठ्यमिव, सत्येनासत्यवादीव, वह्निना तरुसम्पद इव, तोयेन पिपासेव, भोजनेन बुभुक्षेव, सिंहेन मृगा इव, दयया अदयेव जिताः। एवं यथा स्वगुणोत्कर्षमाहात्म्येन भगवता बुद्धेन सर्वे कुटिलवादिनस्तीर्थाः जिताः, तथैव सुरैरसुरा जिता आसन्निति।

मोक्षापरपर्यायस्य निर्वाणस्य कृते प्रमादत्यागः, श्रद्धा, वीर्यं, क्षमा, धैर्यं, ज्ञानस्य पौनःपुन्येन अनुशीलनं सतां संसर्गः च अपेक्षिताः भवन्ति। एतेषां सदाचाराणाम् अभ्यासेन दानं शीलं दमः क्षान्तिः मैत्रीभूतेषु अहिंसा करुणा मुदिता उपेक्षा च जायन्ते। इमाः शान्तिसम्प्राप्तिहेतवः। एतस्यैव अर्थस्य बोधाय शङ्कराचार्येण ब्रह्मजिज्ञासाधिकारस्य प्रतिपादनं कृतम्। यथा हि साधनचतुष्टयसम्पन्न एव ब्रह्मजिज्ञासाधिकारी भवति। तेषु च साधनेषु द्वितीयः स्थानीयोपायः शम दम तितिक्षोपरतिः श्रद्धा च मनसः विजयः। अर्थात् वशीकृतावस्था शमः दमस्यैव द्वितीयसंज्ञावशीकारः साधनया विजितं मनः तत्तद् विषयविनियोगयोग्यं भवति। इयं योग्यतेव दमशब्दार्थः। विषयः तितिक्षा च शीतोष्णद्वन्द्वसहिष्णुता विषयोपरमश्च विषयभोगात् निवृत्तिः। अतो तत्त्वज्ञानं प्रति श्रद्धा आवश्यकी भवति।[1] एवं मोक्ष-

१ ... तस्मात् शान्तोदान्त उपरतः तितिक्षुः श्रद्धाचित्तो भूत्वा आत्मनि एव आत्मानं पश्येत्, सर्वमात्मनि पश्यति।

—बृह०, ४।४।२३।

प्राप्त्यर्थं अन्तकरणविशुद्धि अपेक्षिता, सा च सदाचारं विना न सम्भाव्यते इति मोक्षसापेक्षत्वेन एतेषां सर्वशास्त्रसम्मतानां सदाचाराणां निरूपणमस्ति ।

बौद्धेतरधर्मेष्वपि एतेषां साधनानां विनियोगो वर्तते । मनुस्मृतौ धृति-क्षमादीनामवश्यकर्त्तव्यत्वेन वर्णनमस्ति । तत्र 'धृतिः' अर्थात् सन्तोषः, अन्येन अपकारेऽपि तं प्रति अपकारानाचरणरूपं कर्म 'क्षमा' विकारहेतौ सत्यपि अर्थात् विषयसन्निधानेऽपि मनसः अविकारित्व 'दमः' अर्थात् मनशो दमनम् । आचार्यैः गोविन्दराजादिभिः द्वन्द्वशीतातपसहिष्णुत्वमेव दमः इति प्रोक्तम् । अन्यायेन परधनादिग्रहणं 'स्तेयं' तद् भिन्नमेवास्तेयम् । शास्त्रमनतिक्रम्य मृद्जलादिभिः देहादेः शोधनं 'शौचम्' । विषयेभ्य इन्द्रियाणां निवारणम् 'इन्द्रियनिग्रहः' । शास्त्रादितत्त्वज्ञानं 'धीः' । यथार्थतत्त्वज्ञानं 'विद्या' यथार्थाभिधानं 'सत्यम्', सत्यपि क्रोधसाधने क्रोधानुत्पत्तिः 'अक्रोधः' । एतद् दशविधं धर्मस्वरूपमस्ति ।[१] एतस्य दशविधस्य धर्मस्यानुष्ठानेन समाहितः सन् मानवः परां गतिं प्राप्नोति । याज्ञवल्क्यस्मृतावपि धर्मस्वरूपनिरूपणप्रसङ्गे यज्ञानुष्ठानं सदाचारः इन्द्रियनिग्रह अहिंसा दानं वाह्यचित्तवृत्तिनिरोधपूर्वकं याथातथ्येन वस्तुतस्तुज्ञानमेव आवश्यकमस्ति ।[२] गीतायामपि धर्मस्वरूपनिरूपणप्रसङ्गे एतदेव प्रतिपादितम् ।[३] विष्णुस्मृतावपि सामान्यधर्मशब्देन किञ्चिद् वैलक्षण्यप्रदर्शनपूर्वकं तथा धर्मस्वरूपं निरूपितम् यथा धर्मसमुच्चये प्रदर्शितेषु धर्मेषु साम्यं भजते —

> क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः ।
> अहिंसा गुरुशुश्रूषा तीर्थानुसरणं दया ।।
> आर्जवं लोभशून्यत्वं देवब्राह्मणपूजनम् ।
> अनभ्यसूया च तथा धर्मः सामान्य उच्यते ।। इति ।

एवमेव बार्हस्पत्यस्मृतावपि सामान्यधर्मस्वरूपं प्रतिपादितं महर्षिणा गौतमेन दया सर्वभूतेषु क्षान्तिः अनसूया अनायासः मङ्गलम् अकार्पण्यम् अस्पृहा चेति

---

१. धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ।।
—मनु० ७/७२ ।

२. अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधनम् ।।
—याज्ञवल्क्य० १/१२२ ।

३. शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ।।
—श्रीमद्भगवद्गीता—१८/४२ ।

आवश्यकमनुष्ठेयत्वेन निरूपितम् । वस्तुतस्तु धर्मसमुच्चये प्रतिपादितं मानवकर्त्तव्य-स्वरूपेण महाभारतप्रतिपादिताचारस्य अवितथं साम्यं वर्तते । तथा हि---

सत्यं दमस्तपः शौचं संतोषो ह्रीः क्षमाऽऽर्जवम् ।
ज्ञानं शमो दया ध्यानमेव धर्मः सनातनः ॥
सत्यं भूतहितं प्रोक्तं मनसो दमनं दमः ।
तपः स्वधर्मवर्तित्वं शौचं संकरवर्जनम् ॥
सन्तोषो विषयत्यागो ह्रीरकार्यं निवर्तनम् ।
क्षमा द्वन्द्वसहिष्णुत्वमार्जवं समचित्तता ॥
ज्ञानं तत्त्वार्थसंबोधः शमश्चित्तप्रशान्तता ।
दया भूतहितैषित्वं ध्यानं निर्विषयं मनः ॥ इति ।

भिक्षुणा अवलोकितसिंहेन शौचं दानं तपः श्रद्धा गुरुसेवा क्षमा दया विज्ञानं विनयः सत्यमिति वर्णितम् । आचार्यनागार्जुनेन धर्मस्य एकान्तकल्याणकरत्वं निरूपितम् । अतः धर्मोदयाय धर्मस्वरूपं वक्तुम् उपक्रमते । धर्माभ्युदये सति नैश्रेयसोदयः भवति । तत्र च श्रद्धायाः धर्माचरणे प्राधान्यं तत्त्वज्ञाने प्रज्ञायाः, भवतुनाम प्रज्ञायाः प्राधान्यम्, तथापि श्रद्धायाः प्राधान्यं नातिरोहितम् । धर्मच्चित्तौ पारतन्त्र्यं द्वेषः मोहकारणमस्ति । किन्तु यः सम्यक्परीक्ष्य कायवाङ्मानसं कर्म परात्महितं विज्ञाय कुरुते स एव प्राज्ञः । अनन्तरं धर्मस्वरूपं निरूप्य तत्फलनिरूपणं कृतम् ।[१] अधर्माचरणे कीदृशं कुत्सितं फलं भवति ? कथं च तस्य कर्मण अशुभत्वम् ? इत्यपि अत्र सम्यक् प्रतिपादितमस्ति प्रथमे जितवर्गे । अतो अन्यग्रन्थेषु साधारणधर्माणां यद्यपि नाम्ना कीर्तनं वर्तते तथापि फलाफलनिर्देशपूर्वकं यथा धर्माचरणे प्रवृत्ति-सम्पादनाय विशदं विश्लेषणं कृतं भिक्षुणा अवलोकितसिंहेन धर्मसमुच्चये तथा नान्यत्रेति एतस्य ग्रन्थस्य वैशिष्टयम् ।

## (२) द्वितीयो धर्मोपदेशवर्गः

अस्मिन् वर्गे आदौ गुरोर्माहात्म्यमेवोपवर्णितम् । निर्वाणगामिनं कल्याणकरं धर्मं यः उपदिशति एवंभूतः सर्वबन्धनच्छेत्ता प्राणिनां गुरुर्भवति । अस्मिन्नेव प्रसङ्गे

१. कायवाङ्मानसं कर्म सर्वं सम्यक्परिक्ष्य यः ।
परात्महितमाज्ञाय सदा कुर्यात्सपण्डितः ॥
अहिंसा चौर्यविरतिः परदारविवर्जनम् ।
मिथ्यापैशुन्यपारुष्याबद्धवादेषु संयमः ॥
दान-शील-क्षमास्पष्टं यः सद्धर्ममहापथम् ।
अनादृत्य व्रजेत् कायक्लेशगो दण्डकोत्पथैः ॥
—रत्ना० १/७-८-१२ ।

सन्मार्गदेशकत्वं सद्धर्मप्रवरप्रोक्तृत्वं गुरौ उक्तम्—भवसागरतारकः गुरुर्भवति। नाऽत्र संदेहो यद् गुरुवादस्य न केवलं भारते वर्षे अपि तु सर्वत्रैव गुरोर्माहात्म्यं सम्यक् उपवर्णितमस्ति। अत एव वंशस्य द्वैविध्यं साधुप्रतिपादितम् एकः विद्यावंशः अपरः जन्मवंशः। गुरुकुले वसन्तश्छात्राः लोकोपकारिणीं विद्यामुपलभ्य लोके प्रविष्टाः स्वाभ्युदयाय लोकाभ्युदयाय च प्रयतन्ते। भवसागरोत्तरणाय गुरुव्यतिरिक्तः न कोऽपि सहायः भवति। अत एव वर्तते प्रसिद्धिः—

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः॥

किमन्यत्—

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः।
गुरुः साक्षात् परब्रह्म तस्मै श्रीगुरवे नमः॥ इति।

यतः धर्मसमुच्चय आध्यात्मिको ग्रन्थः। अतः आध्यात्मिकदृष्टया गुरोर्माहात्म्येन कश्चित् शास्त्रसिद्धान्तः प्रकाश्यते। गुरुमनुक्त्वा क्रिया सर्वथैव निष्फला जायते। अतः कस्यामपि क्रियायां गुरोर्मार्गनिर्देशः सर्वथा अपेक्षितः। शास्त्रं गुरु मूलं भवति। अतः शिवतमः प्रभुर्गुरुरेव इति यत्नतः गुरुमाश्रयेत्।

उपनिषद्कालात् एव गुरोर्माहात्म्यं गौरवञ्च सर्वथा सुस्थिरं वर्तते। गुरुः गौरवं गुरुत्वं च सर्वथा वैशिष्टयोद्बोधकमेव। रुद्रयामलेऽपि उक्तम्—'प्रयत्नेन उत्तमः गुरुः कर्त्तव्यः'। मुण्डकोपनिषदि कर्मफलसमवाय परीक्षायां नित्यवस्तुकर्मणां नोत्पद्यते तदा वैराग्ये प्रवृत्तिर्भवति। अतः समित्पाणिः भूत्वा ब्रह्मनिष्ठस्य गुरोः समीपे गच्छेत्। ब्रह्मज्ञः गुरुः संयतेन्द्रियम् उपसन्नं प्रशान्तचित्तं शिष्यं यथा तत्त्वविद्यामुपदिशेत्[1]। सत्यकामस्य जाबालस्य सन्मार्गलाभार्थम् आचार्यगौतमस्य समीपे गमनं सर्वथा सुप्रसिद्धमेव।

धर्मसमुच्चये गुरुविषये भिक्षुणा अवलोकितसिंहेन उक्तं यत् गुरुः मोहमयपाशछेदकः शिवमार्गप्रदर्शकः सन्मार्गदर्शकः दुर्मार्गविनिवारक एव[2]। स एव धर्मप्रवरः येन धर्मेण मनुजा भवसागरं तरन्ति[3]। एतस्यैव अर्थस्य प्रतिपादकम् अन्यदपि पद्यं सुप्रसिद्धम्। यथाहि—

---

१. परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन।
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिःश्रोत्रियं ब्रह्मनिष्ठम्॥
तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय।
येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्॥
—मुण्डको० १।२।१२-१३।

२. धर्मसमु० २।२।

३. धर्मसमु० २।३।

कर्णधारं गुरुं प्राप्य तद्वाक्यं प्लववद्दृढम् ।
अभ्यासवासनाशक्त्या तरन्ति भवसागरात् ॥ इति ।

वस्तुतः गुरुकृपयैव वस्तूनां प्रकाशः भवति । अतः सर्वप्रयत्नेन गुरोराराधना सर्वथा अपेक्षिता । देववदेव गुरोर्भक्तिः करणीया । तेन च अकथिता अपि तात्त्विका अर्थाः प्रकाशन्ते । अतो भवसागरनिवृत्तये अर्थाः प्रकाशन्ते । अतो भवसागरनिवृत्तये गुरुभक्तिरेव एकः समीचीनः पन्थाः । उक्तञ्च—

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैतेऽकथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ इति ।

बुद्धसदृशं गुरुं प्राप्य बुद्धस्य शासनं सम्प्राप्य यो मानवः धर्मरतो न भवति, नूनमेवासौ पश्चात् तापदग्धो भवति । अतः मर्त्याः धर्मरता भूत्वा नित्यं व्यासक्त-मनसः कामशून्याः पुत्रदाराप्रसक्ताः भवेयुः । अन्यथा जन्ममरणं परित्यज्य न किमपि अन्यद् जायते । चित्तबद्धाः देहिनः सर्वैः दोषैः परिव्याप्ताः यथाकथञ्चिज्जीवनं यापयन्ति । अतः चित्तानुकूलं कार्यं ये कुर्वन्ति ते सदा दुःखाकूला एव तिष्ठन्ति । यतः चित्तवशीभूताः जनाः दुर्गतिं प्राप्नुवन्ति । सर्वत्रैव चित्तासक्तिशून्यस्य जनस्य प्रशंसा उपलभ्यते । चित्तवशीकारस्य एक एव निश्चितः पन्थाः गुरुणा उपदिष्टा सन्तः, सद्धर्मरताः पापात् विरताः तिष्ठन्ति । एवमेव श्रेयसे ज्ञानं च नित्यम् उपपद्यते । सद्धर्मश्रवणेनैव मनः प्रसन्नतामधिगच्छति, सुमहत् सुखञ्च विन्दति । अतः गुरुमुखात् शास्त्राद् वा सद्धर्मश्रवणं करणीयम् । तेन च धर्मात्माऽसौ कदापि पापाचरणेऽप्रवृत्तो कर्मफलं श्रुत्वा ज्ञात्वा च निर्वाणमधिगच्छति । अत आदौ सद्धर्म-श्रवणमेवावश्यकम्, श्रवणानन्तरं मननेन तदनुकूलाचरणेन च धर्मलक्षणतत्त्वज्ञः विमोक्षाय यतते । अतो यथोपनिषदादौ आत्मश्रवणादीनामेव श्रवण-मनन-निदिध्या-सनादीनां निर्देशः कृतः । श्रवणं मननं निदिध्यासनञ्च न केवलं लौकिकसुखप्राप्तये अपि तु अलौकिकं निर्वाणरूपताधिगत्यर्थं जायते । वस्तुतः स्कन्धायतनधातूनां स्वरूपं विज्ञाय श्रद्धा विभावितः तृष्णां प्रहाय सुगतदेशितां संसारवैमुख्यसम्पादिकां चेष्टां सद्धर्मश्रवणेन कुरुते । ये हि तत्त्वज्ञाः सद्धर्मदेशनानुकूलाचरणाः निभालयन्ति, ते मृत्युकालेऽपि प्राप्तां वेदनां नानुभवन्ति । सम्यग्ज्ञानेन च दग्धाः क्लेशवृक्षाः पुनर्न जायन्ते । अतः सद्धर्मः श्रोतव्यः, ज्ञानवृद्धः उपासितव्यः तेन च सद्धर्मानुकूला-चरणः प्रशान्तात्मा प्रमादवञ्चितः सर्वथा सुखमश्नुते । सद्धर्माचरणञ्च प्रदीपवत् अज्ञानान्धकारनिवारकं भवव्याधिप्रमादं मदमत्तानामौषधम् । अन्ते च शान्तस्य निर्वाणस्य प्रापकम् । अतः शान्तपदप्राप्तिरूपफलकामनया सद्धर्माचरणमेव करणीयम् । नान्यः उपायः भूतले प्राणिनां निःश्रेयसे विद्यत इति ।

श्रौतसिद्धान्तेऽपि एतस्यैव सिद्धान्तस्य साधुसमर्थनमुपलभ्यते । तथाहि—मनुस्मृतौ पितुरपि गुरुत्वमुपवर्णितम् । तत्र गुरुश्च शास्त्रानुसारिसकलकर्म-

कर्त्ता। कर्मणः द्वैविध्यं प्रतिपादितम्। एकं प्रवृत्तं कर्म द्वितीयञ्च निवृत्तम्। प्रवृत्तकर्मणा स्वर्गादीनां लौकिकसुखानाञ्च प्राप्तिर्जायते। निवृत्तिकर्मणा निःश्रेयः निर्वाणमुपलभ्यते। निष्काममज्ञानपूर्वं कर्म निवृत्तमुच्यते। निर्वृत्तेन कर्मणा भूतानि अत्येति। किमन्यत् स्थावरजङ्गमेषु तादात्म्यादहमेव सर्वत्रास्मि इति पश्यति। मय्येव च सर्वमवस्थितम् एतस्येव निरूपणं धर्मसमुच्चयस्य द्वितीये अध्याये विद्यते। तत्र हि ग्रन्थकर्त्रा लिखितं यत् कामासक्तानां पुत्रदारानुरक्तानां व्यासक्तमनसां देहिनां सर्वथा अन्तकत्वप्राप्तिर्जायते। एतेन एतत्सिद्धं यत् निवृत्त-मार्गाचरणे कामनारहितानां पुत्रदाराद्यनासक्तानां सर्वविधसुखस्य प्राप्तिर्जायते। ज्ञानिनामेव सर्वथा श्रेष्ठत्वं प्रतिपादितम्। तपः विद्या च परे निःश्रेयस्करे तपसा पापमपहन्ति विद्ययाऽऽन्तकत्वविनाशो भवति। इदं कर्म नैश्रेयसम्। एतादृशः ज्ञानवान् अधर्मे कदापि मतिं न कुरुते[१]। मार्कण्डेयमहापुराणेऽपि व्यासक्तमनसां दुर्गतिरेव प्रदर्शिता। आत्मसंयमेन मुक्तेः साधनमहर्निशं ममत्वपापपङ्कदिग्धः अनेक-भवसंभूतकर्मपङ्काङ्कितः असद्वासनया सर्वथा परिदुष्टः क्लेशमेव अहर्निशमुपभुङ्क्ते। अतः पुत्रदारप्रसक्तिः कामासक्तचित्तता च सततं दोषा एव।

इत्थं सद्वासनाः प्रक्षालितहृदयाः सुगतिं प्राप्नुवन्ति। अतः निर्ममः निर-हङ्कृतः इतस्ततः विमुक्तसङ्गः मितसायि एव सदा भूतदयया कारुण्यपूर्णचित्तः सुखमश्नुते[२]। वस्तुतः ममत्वातिशयाङ्कितः लोकः अभीष्टकामनासंपूर्ते व्यग्रचित्तः समाकुलः बहुभिर्दोषैः आबद्धो भवति। तैत्तिरीयाद्युपनिषद् साधु उक्तम् 'न कर्मणा न प्रजया धनेन त्यागेनैक अमृतत्त्वमानशुः।' परतत्वं विदितवद्भिः वीतरागैः तत्त्वाभिमुखेन सकलं प्राप्यते। अतः काम-क्रोध-लोभ-मोहादिदोषजन्यस्य अविद्याऽस्मिता-राग-द्वेषाभिनिवेशाख्यस्य क्लेशपञ्चकस्य हानाय चित्तशुद्धिः सद्धर्माचरणं नितान्तमपेक्षितम् इति।



---

१. याज्ञ० १२।११८।

२. आत्मनः संयमो योऽयं क्रियते सुनियन्भवात्।
स मुक्तिहेतुर्न भवत्यसावपि परिग्रहात्॥
प्रक्षाल्यतेऽनुदिवसं यदात्मा निष्परिग्रहैः।
ममत्वपङ्कदिग्धोऽपि चित्ताम्भोभिर्वरं हि तत्॥
अनेकभवसंभूतकर्म्मपङ्काङ्कितौ बुद्धैः।
आत्मा सद्वासनातोयैः प्रक्षाल्यो नियतेन्द्रियैः॥

—मा० पु० ९५।१०-११-१२।

अतिभयङ्करस्य दुर्दमस्य इन्द्रियवासनाक्रान्तस्य चित्तस्य यावत् ज्ञानेन सद्धर्माचरणे च वशीकारित्वं न जायते तावत् भवसागरात् विमुक्तिः सर्वथा असम्भवैव। अतः वीतरागः सन्नेव शत्रुभूतं दोषाविष्टं चित्तम् अवरोधयेत्। अत एव चित्तवशीकाराय उपायप्रदर्शनप्रसङ्गे उक्तं चित्तवशित्वप्राप्तिः आप्तजनोपदिष्टेन धर्मेण संभाव्यते। इन्द्रियहयस्य निरोधः आत्मसद्धर्माचरणेन भवति इति सद्धर्मश्रवणं नितान्तमपेक्षितम्।[१] अत एव नियतेन्द्रियैः आत्मनः प्रक्षालनं युक्तं पूर्वकर्म शुभाशुभैः फलैः तदुपभोगैश्च कर्मक्षयो भवति। परन्तु अनभिसन्धितं कर्म एव न बन्धाय यतः करुणात्मकं कर्म कुर्वतः जनस्य सर्वं प्रक्षालितं भवति। न च असौ अविवेकेन पापकर्मणा वद्धयते। धर्माचरणं विद्यापरिप्राप्तिसाधनम्। अतः सदनुष्ठानात् अधोगतिः कदापि न संभाव्यते, संयमः मुक्तये एव। तस्मात् विवेकपूर्वकं कृतं कर्म न कदापि बन्धाय इति निश्चप्रचं वचः। एतस्यैवविश्लेषणमग्रे सद्धर्मफलश्रवणनिरूपणप्रसङ्गे धर्मलक्षणाचरणे प्रवृत्तिं सम्पादयता धर्मसमुच्चयकर्त्रा उक्तम्—सम्यग् ज्ञानेन क्लेशवृक्षदाहे सति अनासक्तिपूर्वकं कर्म कुर्वतः न कदापि बन्धो जायते। अतः श्रुतस्यः परस्य बद्धोपासनतत्परस्य सद्धर्मशीलस्य जरामरणशून्यतैव अपि तु दुःखविमुक्तिपूर्वकं श्रेयसम्प्राप्तिरपि संभाव्यते। अतः विवेकेन सद्बुद्धिकामस्य ज्ञानाग्निदग्धजनवचनानुरूपाचरणेन विवेकपूर्वकस्य धर्मस्य कर्त्तव्यता सूचिता। सद्धर्मः यदि नष्टो भवति, तदा पापै आबद्धः सर्वथा विफलजीवनः जन्म-मरण-रूप-भव-परम्पराबद्ध एव तिष्ठति। अतः धर्मनाशः कदापि सद्बुद्धिकामिना अभ्युदयाय न जायते।[२]

सद्धर्मश्रवणानन्तरं यदि तदनुकूलाचरणे प्रवृत्तो न भवति, तदा अन्येषां धनानां सद्भावेऽपि सद्धर्मनाशः नितरामेव जायते। एतादृशस्य गुरुत्वशून्यस्य असद्धर्माचरणेन पापाहतस्य सर्वाऽपि क्रिया व्यर्था जीवनञ्च निरर्थकमेव। यतः प्रत्यहं पापाचाररतस्य तस्य प्रमादयुक्तस्य ऊसरभूमौ उप्तं बीजमिव जातमपि जीवनं निष्फलमेव भवति। अतः श्रुतार्थदृष्टिः अपेक्षिता यथा सद्धर्माचरणे प्रवृत्तस्य अन्यथा सद्गुरूश्रवणविमुक्तदृष्टिः चक्षुर्भ्यां विनिर्मुक्तं जीवनं यथा निष्फलं, तथैव तद्जीवनमपि दृष्टिरहितं संजातम्। वस्तुतः अधर्माचरणं व्याधिसेवनमेव यथा व्याधेः निवारणाय औषधादीनाम् आवश्यकता, एवमेव अधर्मानुष्ठाननिवृत्तये सद्धर्मा-

---

१. आत्मानं रथिनं विद्धिशरीरं रथमेव तु।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥
इन्द्रियाणि ह्यानाहुर्विषयांस्तेषु गोचरान्।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः॥
—कठो० १।३-४।

२. 'किन्तु विद्यापरिप्राप्तौ हेतुः कर्म्म न संशयः'॥
—मा० पु० ९५।१९।

चरणमकामेनाऽपि कर्तव्यम्। तदैव जीवनस्य साफल्यं स्यात्। एतस्यैव विषयस्य विवेचनाय धर्मोपदेशाख्यो द्वितीयो वर्गः कृतः। धर्मानुसारिणी श्रद्धैव सुखावहा। दुर्गतिं निवार्य प्रदीपकल्पेव महद्बलम् आद्यन्ते। तस्मात् सुखाकांक्षिणा सद्धर्मोऽनुष्ठेयः। प्रमादमदमत्ताः असद्धर्माचरणरता पुनः पुनः जन्ममरणमेव अनुभवन्ति न कदापि शान्तं निर्वाणम्।

अत्र ग्रन्थकर्त्रा गुरोः सद्धर्मस्य निर्वाणगामिनः पथः ज्ञानस्य च माहात्म्यं फलं च विस्तरशो निरूपितम्। तथा हि—

यो हि देशयते धर्मं क्षेमं निर्वाणगामिनम्।
स सर्वबन्धनच्छेत्ता गुरुर्भवति देहिनाम्॥
छित्त्वा मोहमयं पाशं यो हि देशयते शिवम्।
सन्मार्गदेशकः प्रोक्तो दुर्मार्गविनिवारकः॥

इत्यनेन गुरोर्लक्षणमुक्तम्। सद्धर्मस्य च

येन धर्मेण मनुजास्तरन्ति भवसागरम्।
सद्धर्मप्रवरः प्रोक्तो न धर्मे लौकिको हि सः॥ इति।

एवं गुरोर्मुखादनेन सद्धर्मश्रवणेन जिज्ञासोः चित्तं प्रह्लादमृच्छति चित्तबन्धे चास्य सुमहत् कुशलं भवति। अयं सद्धर्म एव निर्वाणप्राप्तेः साधनम्। अनेन मानवः धर्मलक्षणतत्वज्ञो भवति। एतत्साहाय्येन सुगतदेशितां संसारविमुखां कथां श्रुत्वा तृष्णाप्रहाणेनाऽव्ययं पदमाप्नोति। श्रुतिमान् पुरुषः प्रवृत्ति-निवृत्तिलक्षणं सम्यग्ज्ञात्वा धर्मश्रवणेन सम्यग् ज्ञानी भवति। तेन च सम्यग्ज्ञानेन क्लेशवृक्षाः समन्ततो दग्धा भवन्ति। मृत्युकालोपपन्नस्य वेदनार्तस्य तस्य देहिनो हृदि स्वल्पापि व्यथा न भवति, श्रुतालम्बनत्वात्। सद्धर्मश्रवणं कृत्वा वृद्धांश्चोपास्य पण्डितो जनोऽन्ते जरामरणवर्जितं पदं प्राप्नोति।

तस्मात्सर्वत्र मैत्रीभावनाकामः सद्बुद्धिकामः दृढवीर्यपराक्रमेप्सुश्च सद्धर्म-श्रवणे मनो दद्यात्। अन्यथा सद्धर्मधननष्टस्य, गुरुणा वर्जितस्य पापैरुपहतस्य च मानवस्य जीवनं विफलमेव। एतादृशः प्रमादिनः पापमित्रस्य देहिनस्तु जीवनम् ऊसरे मुक्तं बीजमिव निष्फलमेवास्ति। अतो मुमुक्षोः कृते शास्त्रमेव दृष्टिः विच-क्षणैः कथिता। तथा ह्युक्तम्—

श्रुतदृष्टिविनिर्मुक्तमर्थमाहुर्विचक्षणाः ।
न चक्षुर्भ्यां विनिर्मुक्तमर्थमित्यभिधीयते॥ इति।

इतो विपरीतमधर्मानुष्ठानं तु व्याधिसेवनोपममेव। अतो ग्रन्थकर्त्रा धर्म-सेवने आग्रहः कृतः।[१] सद्धर्मसेवनं स्वल्पं स्याद् बहु वा इत्यन्यदेतत्। उपसंहा-रूपेण च तेन निगदितम्—

---

१. धर्मसमु० २।३१-३२।

तस्माज्ज्ञानगुणान्मत्वा ज्ञानं सेवेत पण्डितः ।
नह्यज्ञानेन संयुक्तं पुमान् कश्चित् प्रतिभवेत् ।। इति ।

एवमनेन धर्मानुसारिणी श्रद्धायाः माहात्म्यं प्रतिपादितम् । इयं श्रद्धा तमसि प्रदीपकल्पा, व्याधिनामौषधमिव, अर्थानां ज्ञानदात्री, दरिद्राणां ( अकिंचनानां ) च महद् बलमिति । किमधिकम् ? प्रमादमदमत्तानां सा प्रमादविघातिका । एतादृशस्य श्रद्धालोर्गुरुभक्तस्य धर्मेऽप्रमादरतस्य च माहात्म्यं ग्रन्थकर्त्रैव स्वयमुद्घोषितम्—

स हि यत्तत्पदं शान्तं निर्वाणमुनिभिर्वृतम् ।
तत् प्रापयत्यखेदेन सम्यग्ज्ञानपुरःसरम् ।। इति ।

## (३) तृतीयः कायजुगुप्सावर्गः

धर्मसमुच्चयस्य तृतीयवर्गः कायजुगुप्साख्यः वर्तते । वासनासरित् लोके शुभाशुभाभ्यां प्रवहति । अशुभमार्गेण प्रवहमानासरित् शय्यासनादिभिः कामोपभोगैः कायिकसुखेव जीवनं यापयति । विषयासक्तिः कामोन्मुखी जायते । कायस्यैव सर्वथा प्राधान्यात् क्षणिकस्य कायिकसुखस्य सर्वस्वं मन्यमानः गृहदारादिभोगैः धनादीनां संग्रहैश्च जीवनं निभालयति । तथा च असद्धर्माचरणरतः सन् गमनागमनपर एव संतिष्ठते । तेन च सद्धर्माचरणरहितस्य कायस्य हितं कामयमानः आत्मनः वैचक्षण्यं प्रदर्शयन् वृथैव जीवनं निष्फलं करोति । उक्तञ्च शास्त्रकारैः योगवासिष्ठे—

द्विविधो वासनाव्यूहः शुभश्चैवाशुभश्च ते ।
प्राक्तनो विद्यते राम द्वयोरेकतरोऽथ वा ।। इति ।

किं धर्माधर्मावुभावपि त्वां नियोजयत उतैकता इति विकल्पः एकतरपक्षेऽपि शुभोऽशुभोवेत्यर्थात् सिद्धो विकल्पः । उक्तञ्च—

वासनौघेन शुद्धेन तत्र चेदयनीयसे ।
तत्क्रमेणाऽऽशुतेनैव पदं प्राप्स्यसि शाश्वतम् ।। इति ।

ततस्तर्हि तेनैव क्रमेण शुभवासनाप्राप्तिस्तेनैवाऽऽचरणेन प्रयत्नान्तरनिरपेक्षेण शाश्वतं पदं मोक्षम् । यथोक्तम्—

अथ चेदशुभो भावस्त्वां योजयति सङ्कटे ।
प्राक्तनस्तदसौ यत्नाज्जेतव्यो भवता स्वयम् ।। इति ।

एवं भावो वासना । तर्त्हि यत्नोऽशुभविरोधिशास्त्रीयधर्मानुष्ठानम्, तेन स्वयं जेतव्यः न तु युद्धे मृत्युमुखेनैव पुरुषान्तरमुखेन जेतुं शक्यः ।

शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासनासरित् ।
पौरुषेण प्रयत्नेन योजनीया शुभे पथि ॥ इति ।

शुभमार्गस्य प्रयत्नैरपेक्ष्येऽप्यशुभमार्गं शास्त्रीयप्रयत्नेन निवार्य शुभमेव तस्य स्थाने समाचरेत् । अशुभेषु परस्त्रीद्रव्यादिषु । शुभेषु शास्त्रार्थदेवताध्यानादिषु । पुरुषार्थेन पुरुषप्रयत्नेन प्रबलेन । यथा शिशुर्मृद्भक्षणान्निवार्य फलभक्षणे भोज्यते, मणिमुक्ताकर्षणान्निवार्य कन्दुकाद्याकर्षणे योज्यते, तथा चित्तमपि सत्सङ्गेन दुःसङ्गात्तविपरीतविषयान्निवारयितुं शक्यते । रोगशोकपरितापबन्धनव्यसनमलमूत्रवाहि शरीरं कायशब्देनोच्यते । धर्मसमुच्चये कायस्य स्वरूपं[१] प्रदर्शयता उक्तम्-बहूनां रोगाद्यनर्थानां भाजनम् अशूच्यङ्गस्य निकरं कायशब्देनोच्यते । तत्वज्ञानिभिः मरणस्य कायायत्तत्वम् तथा च जीवितस्य च क्षणादूर्ध्वस्थितिः स्यान्नवेति मरणं सदा उपस्थितमेव । अत एव कालिदासेनोक्तम् 'मरणं प्रकृतिः शरीरिणाम्' कर्मादिभोगार्थमेव आयुषः प्राप्तिः अनन्तरं काष्ठलोष्ठसमं चैतन्यशून्यजगतीतले बहुजनहेयं शरीरं तिष्ठति । दृश्यते लोके यौवनादिमदैः मुग्धाः पुरुषाः लोककल्याणभावनां सद्धर्माचरणं च परित्यज्य धनधान्यमदैर्मत्ताः आत्मनः अहितमाचरन्तः पापाविद्धाः जीर्णतां संप्राप्य नाशमभ्युपयति ।

एतदेव दृष्ट्वा कदाचित् गौतमेन संसाराद्विनिवृत्तः कायमलत्वं परित्यज्य सद्धर्माचरणेन निर्वाणपुरगामिकं तत्त्वं मनुष्यस्य कृते धार्मिकः सद्धर्ममार्गः प्रकाशितः, अधर्माचरणस्य च हेयता प्रतिपादिता । सद्धर्माचारी पुरुष एव ज्ञानतरणिं संरुह्य मानवीयम् अत्युत्कृष्टं श्रेयसामालयं प्राप्नोति । गन्धर्वनगरोपमं क्षणभङ्गुरं चपलम् असारं जरामरणादियुत शरीरं प्राप्याऽपि न तत्र मदो भवति । शुभाशुभानां क्षेत्रं दुःखानामालयमिदं शरीरम् । एतस्य शरीरस्य साफल्यं तदैव संभाव्यते, यदा ज्ञानशीलदयादानैः सफलं शरीरं सद्धर्मालङ्कृतं भवति । अत एव अनर्थम् अनित्यं दुःखावहं दोषमूलम् इदं शरीरं संप्राप्य ध्यानाऽध्ययनसंसक्तः क्लेशसमूहान् निःसारयेत् । स्वलक्षणं ज्ञात्वा शरीरजां धातुं समवेक्ष्य मोक्षमार्गम् अनुसरति सद्धर्माचरणेन इत्येव बुद्धिसरणिः ।

केचित् चार्वाकमतानुयायिनो दार्शनिकाः स्वदेहमेव आत्मानं मन्यमानास्त दर्थमेव सर्वं प्रयतन्ते इति तान् अस्मिन् वर्गे प्रताडयन्नाह ग्रन्थकारः—

क्षणे क्षणेऽपि कायोऽयं जीर्यते न निवर्तते ।
तथा यौवनमदैर्बाला मुह्यन्ते मुग्धचेतसः ॥

---

१. सत्कारैर्बृंहणैर्मांसैरपि शय्यासनादिभिः ।
न स्वीकर्त्तुमयं कायः कदाचित् केनचित् कृतः ॥
—धर्मसमु० ३।१-३ ।

धनधान्यमदैर्मत्ताः कुर्वन्त्यहितमात्मनः ।
तन्नाशमुपयात्येवं स च पापेन दह्यते ।। इति ।

कथयति च

न मनुष्या मनुष्यास्ते येभ्यो धर्मो न रोचते ।
न मार्गे च स्थितास्तत्त्वे निर्वाणपुरगामिके ।। इति ।

वस्तुतः इदं शरीरं प्राप्य मानवेन ज्ञानप्लवमारुह्य भवसागरस्तरणीयः। यतो हीदं शरीरं विद्युदालातसदृशं क्षणभङ्गुरम् , चपलम्, जरामरणयुतं च । अतो मानवेन ज्ञानशीलदयादानैरेतच्छरीरं सफलं करणीयम् ।[१]

यो हि शरीरधातुं परित्यज्य हिरण्यादिधातुषु रक्तो भवति, स धातूनां ज्ञाने अज्ञ एव । हिरण्यादिधातवो दुःखावृता इति दुःखाद् दुःखोदय एव भवति । तस्माद-नर्थकं तद् दूरतः परिवर्जयेत् । दृष्टसंग्रहः दुःखमयः । एतद्वर्जनं सुखमयम् । तस्मात् शरीरजान् धातून् पण्डितोऽहरहः प्रत्यवेक्षेत । यतो हि तेषां स्वलक्षणं ज्ञात्वैव प्राणिनो निर्वाणं प्राप्नुवन्ति । यथोक्तमन्ते भिक्षुणा अवलोकितसिंहेन -

तस्माच्छरीरजान् धातून पण्डितः प्रत्यवेक्षते ।
तेषां स्वलक्षणं ज्ञात्वा मोक्षो भवति देहिनाम् ।। इति ।

## (४) चतुर्थः परिवर्तवर्गः

परिवर्तनम्+परिवर्तः=परिणामः । जायते, अस्ति, वर्धते विपरिणमते, अपक्षीयते, नश्यति इत्येते षड्भावविकाराः । परिणामश्च कालमपेक्षते इति सर्वतः प्रथममस्मिन् वर्गे ग्रन्थकारः कालमेव विवृणोति–'कालोऽयं परिवर्तते' इति । कस्येत्य-पेक्षायामाह—'चञ्चलेन्द्रियचित्तस्य' । अर्थात् जन्ममरणवश्यस्य तृष्णया मोहितस्य, औद्धत्यप्रसक्तस्य. कायालङ्करणे निरतस्य, लाभेनाऽतृप्तमनसो, विनिपातन-भिज्ञस्य, वितर्कोपहतस्य, पूर्वदुःखानभिज्ञस्य, विप्रयोगानभिज्ञस्य, सत्पथात् परिभ्रष्टस्य, हिंसारतस्य अथ च नष्टसम्बुद्धमार्गस्य बालस्य (मूढस्य) कालोऽयं परिवर्तते । स दुःखमग्नो भवतीत्यर्थः ।

अतो दुःखापघाताय शुभकर्मणि आसक्तिर्विधेया । काञ्चनेषु शैलेषु वैदूर्य-शिखरेषु रम्येषु भूमिभागेषु चासक्त्या शुभं कर्म क्षीयते मानवस्येति तेन शुभकर्म-रक्षायै यतनीयम् । कामपूर्त्यै देवानां स्तुतिराराधना वापि न करणीया । यतो हि देवा अपि विषयतत्परा मानवस्य पारमार्थिकं हितं न जानन्ति । एतादृशो हि

---

१. ज्ञानशीलदयादानैर्यस्य गात्रं विभूषितम् ।
तस्य सत्त्वैकसारस्य शरीरं सफलं मतम् ।।
—धर्मसमु० ३।६ ।

तृष्णाग्निपरिवारिता काममोहिता भोगेष्वासक्ताः । स्त्रीजनासक्तहृदयाः पापमित्र-संसर्गिणः सर्वास्ववस्थासु संसारभयभीरवः अतत्त्वज्ञा जना लौकिकं सुखं भुक्त्वाऽपि मृत्युमेव प्रतीक्षन्ते । यतो हि उपभोग्या विषयास्तादृशा एव, जनस्तु परिवर्तते । अतः पण्डितेन एकान्तमनसा नित्यं शुभं कार्यं प्रयत्नतः, अशुभं च सदा वर्ज्यम् । इत्थं तादृशानां कामवशङ्गतानां पश्चात्तापेन दाह एवावशिष्यते, यतो हि संयोगो विप्रयोगान्त एव भवति ।[१]

अतो विवेकिना मरणं कर्त्तव्यं निर्धारणीयम् । यतो हि निष्कामा वीतरागा एव शाश्वतीं शान्तिमधिगच्छन्ति । मृत्योरर्थमनुस्सृत्य स्वकीयं मनो निर्दुष्टं शान्तं च करणीयमप्रमादपरम् । तथागता अपि इदमेव निर्वाणाभिमुखं श्रेष्ठं मार्गमाहुर्यत् मृत्योर्नित्यं स्मरणम्, अशुभानां च सततं वर्जनं कर्त्तव्यमिति । यो हि पुरुष इन्द्रिय-शमने तद्दमने च निरपेक्षः वर्तते, असौ इन्द्रियपरवशः सन् काममोहितचित्तः अशुभेषु कार्येष्वेव सततम् आबद्धो भवति । कामार्तानां कामः कदाचिदपि उपभोगेन न शाम्यति । चञ्चलेन्द्रियचित्तस्य कामतृष्णया तृषितस्य तदा कामोपभोगेन कालः परिवर्तते । अनित्यवस्तुषु देहिनः क्षणिकसुखे सुखासक्तिसुखं कामयमानस्य स्त्री-दर्शनेव कालः परिवर्तते । कालः न प्रतीक्षते, अपि तु मोहितस्य तृष्णया जातिमरण-परम्पराबद्धस्य जनस्य अयं कालः परिवर्तते । लाभैः सदा अतृप्तमनसः शान्तिसुख-रहितस्य जनस्य सर्वथा दुःखोपहतस्य जनस्य कालः परिवर्तते । सततं शरीरमेव आत्मेतिमन्यमानस्य जनस्य औद्धत्यप्रसक्तस्य गात्रशोभायामेव दत्तचित्तस्य लाभैः अतृप्तस्य सदा कालः परिवर्तते ।

एतादृशः कालाबद्धस्य रूप-वेदना-विज्ञान-संज्ञा-संस्काराख्यपञ्चस्कन्धबद्धस्य पञ्चेन्द्रियविषये भोगरतस्य कार्याकार्यविवेकशून्यस्य विनिपातानभिज्ञस्य आसक्त-मनसः प्रतिक्षणं विनिपातः पदे पदे जायते इत्यत्र नास्ति कश्चित् सन्देहः । प्राक्तनं वासनाजालम् असत्ये कर्मणि नियोजयति श्रेयसः प्रच्यावयति । नात्र संदेहः यत् देहासक्तिः अशुभे मार्ग एव प्रेरयति । यदि मनुष्यः अनासक्तो भवति, तदा सत्यपि देहेन्द्रियादिव्यवहारे तत् प्रत्यायकवृत्त्यभावात् भाविसंसारबीजम् अस्तमायाति । स्रक्-चन्दनसत्कारादिसुखे प्राप्तेऽपि संसारिनः कायासक्तस्य इव हर्षो नोदेति । न च दैन्यमनुभवति । धनहानिधिक्कारादिदुःखे सम्प्राप्तेऽपि न दीनो भवति । देहाद्या-सक्तिशून्यत्वात् विवेकदाहराहित्यात् हर्षादिराहित्यं नूनम् एव उत्पद्यते । सुषुप्त्य-वस्थोऽपि तदा अवबुद्ध इव तिष्ठति । आसक्तिशून्यत्वात् कर्त्तृत्वराहित्यम् अहङ्कार-

१. समागमाः प्रियालोके वियोगाश्चाप्रियाः सदा ।
संयोगो विप्रयोगान्तो धर्मतेयं सनातना ॥
—धर्मसमु० ४।६० ।

शून्यत्वं चानुभवन् शान्तसंसारकलनः कलावानऽपि निष्कलः सच्चित्तोऽपि निश्चितः संतिष्ठते। एतादृशः शीलसम्पन्नः पुरुषः औद्धत्यादिरहितः जायते। तेन च न लोकः उद्विजते, न च लोकादर्शो उद्विजते। कर्मजालेन कदापि आबद्धः वासना-वशात् सत्पथाः न परिभ्रष्टो जायते कामैकपाशबद्धस्य इन्द्रियादिवासनासम्बद्धस्य सत्पथात् भ्रान्तिः जायते। तेन च हिताहितकार्याकार्यस्य शरीरानकूलतां संचिन्तयन् नदीप्रवाह इव संसारप्रवाहे प्रवहति। अतः परं सौख्यं यदि अभिलषितं, तदा शुभेषु रत्नाकरवनेषु प्रवेश एव श्रेयान्। यदि काममोहिताः जनाः जायन्ते, तदा सर्वदा दोषैः आबद्धाः मृत्युना प्रतीक्ष्यमाणाः तिष्ठन्ति। तृष्णाग्निदग्धाः काम-मोहिताः सदा स्त्रीजनासक्तहृदयाः कदाचित् विप्रयोगकृतं दुःखमनुभवन्ति। कदाचित् च विपत्तिव्याधिशोकेभ्यः उद्विग्नाः तिष्ठन्ति।

एवं सद्धर्माचरणाः तत्त्वज्ञानिनः सर्वभूतहिते रता भवन्ति। शुभकार्यञ्च सेवन्ते। यथा शूलिकेन बद्धाः पशवः गृहपञ्जरे एकैकं विनश्यन्ति, तथैव कायिनामपि स्थितिः जायते। वासनापरिबद्धाः मरणमपि नावगच्छन्ति। तस्मात् यदि गतकल्मषैः शान्तिः अपेक्षिता, तदा मनसः अप्रमादकरस्य वासनाशून्यत्वं नितान्तमपेक्षितम्। मृत्योः स्मरणम्, अशुभानां परिवर्जनं, पञ्चस्कन्धेषु अनासक्तिः, सद्धर्माचरणे विवेकबुद्धि, कायादिषु ममत्वाभिमानशून्यत्वं च श्रेयसे जायते। अतः सत्पथाचरणं सद्धर्म-बुद्धया सततमनुष्ठेयम्। यथोक्तं ग्रन्थकर्त्रा—

> अप्रमादपरं श्रेष्ठमिदमुक्तं तथागतैः।
> यन्मृत्योः स्मरणं नित्यमशुभानां च वर्जनम्॥ इति।

## (५) पञ्चम अनित्यतावर्गः

वर्गेऽस्मिन् अनेनात्र सर्वेषां कार्यजातानां तज्जन्यसुखादीनाञ्च अनित्यत्वं तथा क्षणिकत्वं प्रतिपादितम्। आत्मनः वास्तविकसुखं कामयमानां जनानां कृते सांसा-रिकस्य क्षणिकसुखस्य परित्यागः नितान्तमपेक्षितः। संसारचरितचित्तम् अध्यासेन खरीभूतं महद्दुःखाय कल्पते इति संसारादनासक्तिरेव सुखसाधनं साधितम्। सकलस्य कार्यजातस्य मृत्युः अवश्यम्भावी। इयमेव प्रतीतिः बौद्धानाम्। 'यत्सत् तत् क्षणिकम्' इति बौद्धसिद्धान्तानुरागिभिः स्पष्टमुद्घोषितम्। अतः संसृतिजन्यं सुखं परित्यज्य सद्धर्माचरणपूर्वकम् आत्मसुखस्य प्राप्तिरेव श्रेयसे उद्घोषिता। वस्तूनाम् अनित्यत्वप्रतिपादनेन तत्रानासक्तिः नूनमायाति, तथा च प्रसङ्गायत्तं प्रतिपादयति। इतःपूर्वं परिवर्तवर्गे क्षयान्तं हि सुखं सर्वम् उपसंहरति च अलिप्तः पापकैर्धर्मैः न स गच्छति दुर्गतिम्। उपक्रमोपसंहारयोः एकवाक्यत्व-नियमात् तद्वशादेव वक्तुस्तात्पर्यनिर्णयात् लौकिकसुखप्राप्तिचेष्टा निवृत्तिपूर्वकं

पारमार्थिकस्य आत्मसुखस्य प्राप्तय एव काचित् चेष्टा मानवैः करणीयेति प्रतिपादयति।

कामस्य त्रैविध्यं प्रतिपादयता आचार्येणोक्तम्–कामास्त्रिविधाः बाह्या, आन्तरा वासनामात्ररूपाश्चेति। उपार्जितमोदकादयो बाह्याः आशामोदकादय आन्तराः, पथिगततृणादिवदापाततः प्रतीतावासनारूपाश्च। समाहिताऽशेषधी-वृत्तिसंक्षयात्सर्वान्परित्यजति। अस्ति चास्य मुखप्रसादलिङ्गगम्यः सन्तोषः। स च न कामेषु किं त्वात्मन्येव कामानां त्यक्तत्वात्। बुद्धेः परमानन्दरूपेणाऽऽत्माभिमुख-त्वाच्च। न चात्र सम्प्रज्ञातसमाधिं विनाऽऽत्मानन्दो मनोवृत्त्योल्लिख्यते, किन्तु स्वप्रकाशचिद्रूपेणाऽऽत्मना। सन्तोषश्च न वृत्तिरूपः किन्तु तत्संस्काररूपः। एवंविधैर्लक्षणवाचकैः शब्दैः समाहितो भाष्यते। अत एव गीतायामुक्तम्–मनोगतानां सर्वेषां कामानां परित्यागेन मनुष्यः सर्वथा असंतप्तः सन्तुष्टः सन् स्थितप्रज्ञः जायते।[१] दुःखं हि रागद्वेषवशादेव जायते। रजस्गुणविकारात्मिका सन्ताप-स्वरूपा प्रतिकूलाचित्तवृत्तिरेव दुःखम्, प्रतिकूलवेदनीयत्वमेव दुःखस्य लक्षणम्। यदा हि रजस्गुणात्मकं दुःखं जायते, तदा तमस्गुणविकारात्मिकायाः भ्रान्तिरूपायाः चित्तवृत्तेरूदयेन अहं पापात्मक-दुरात्मानं मा धिक् इति उद्वेगात्मिका जायते। एवमेव प्राप्तकर्मप्रापितात् भोगादपि उद्वेगः जायते। तस्मात् कामपरित्यागः नितान्तमपेक्षितः। अस्मिन् वर्गे लौकिकविषयानामासक्तिरेव दुःखाय, तस्यैव च विश्लेषणं महता संरम्भेण कृतम्। सुखास्वादः यथा अनित्यः परमवञ्चकः, काम-वशात् प्राप्तः सन् दुःखायैव कल्पते। पुण्यादीनां देवलोक प्राप्तावपि यदा ततः पतति, तदा मरणान्तं दुःखं जायते। तच्च दुःखं नरकजन्यदुःखात् महत्तरम्। अत एव यथा क्षयान्तस्य कामनावशात् प्राप्तस्य राजवृत्तिरूपस्य दुःखस्य हेयत्वं तथैव क्षयान्तस्य पतनान्तस्य श्रेयसे कृतस्य कर्मणोऽपि हेयत्वमेव। अत एव सकलस्य समुच्छ्रयस्य नितान्तं नाशः जायते, इति कामः सर्वथा हेय एव। यतः तस्य अनित्यत्वम् अध्रुवत्वं चेति। यथोक्तं ग्रन्थकर्त्रा—

पतनान्तं सदा सौख्यं नास्ति लोकस्य नित्यजाः।
तद् बुद्ध्वा कारणं सर्वं श्रेयसे क्रियतां मनः॥
उदयास्तं च गमनं भास्करस्य प्रदृश्यते।
तथा जातस्य सर्वस्य स्थितं मरणमग्रतः॥

---

१. प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान्।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते॥
—गीता–२।५५।

क्षयान्तं हि सुखं सर्वं यो न विन्दति मोहधीः ।
स पश्चान्मरणे प्राप्ते दुःखाय जनिभाग्भवेत् ॥ इति ।

अत एव प्रज्ञायाः प्रतिष्ठार्थं राजसवृत्तीनां तामसवृत्तीनां च निरोधः अपेक्षितः, तेन च निस्पृहः स्थितप्रज्ञः तिष्ठति । अन्यदपि हान्यवृद्धिं स्वस्मिन् आरोप्य तामसवृत्तिविशेषं स्नेहात्मनि आरोप्य गुणकथनं प्ररोचनार्थमेव । अतः पुण्यात्मके अपुण्यात्मके च कर्मणि रागः द्वेषश्च सर्वथा अनपेक्षितावेव । यदि उभयोरपि अनभिस्नेहः तत्प्रारब्धवशात् तत् प्राप्याऽनन्तरमपि शुभाशुभं प्रति नाभिनन्दति, न द्वेष्टि, स एव लोके सद्धर्माचारी भवति ।

गौतमस्य बुद्धस्य या प्रवृत्तिर्भवति साधनायां तत्राऽपि कर्णपाशस्य इव बन्धनं जराव्याध्यादिकम् आदायैव जायते । तस्यापि निर्देशः अस्मिन् वर्गे विद्यत एव । यथा हि कर्णपाशो जरादण्डो व्याधिदण्डो महावनम् इत्यादयः । अनन्तरं पुण्यवशात् दिव्यलोकस्य दिव्यसुखस्य प्राप्तावपि क्षीणे पुण्ये दैन्यदारवर्जिततत्त्वञ्च स्वाभाविकमेव । तस्मात् सद्धर्म एव प्रवृत्तिः सुखावहा । मायाबुद्बुदफेनाभं गन्धर्वनगरोपमं सर्वं लोकं मत्वा काममोहं परित्यज्य सद्धर्मेऽभिरुचिः करणीया । तृष्णाविषाग्निक्षया लोकाः सुखमश्नुवते । कामभोगैः कदापि तृप्तिः न संभाव्यते । तृष्णा-कामविमोहिता देवा अपि कालवशमागताः नरके निपतन्ति । कालपाशं सर्वथा त्रैधातुकं दुःखाय एव । तृष्णामोहविवशाः कालाग्निदग्धाः विषयधनसङ्ग्रहाः संतृप्ताः प्रमादकालुष्य-पुण्यचित्ताः यदा कालवशात् मृत्युमुखं प्रविशन्ति, तदा लोलुपानां तेषां तृष्णा नैव रक्षिका भवति । 'जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च' इत्यपि गीतावचनवत् विशदं विवेचनं कृतमाचार्येण अवलोकितसिंहेन । परन्तु तृष्णायाः एव प्राधान्यम्, तस्मात् तृष्णापरित्यागेव सद्धर्माचरणं सम्भाव्यते । यथोक्तम् अश्वघोषेण 'स्नेहक्षयात् केवलमेति शान्तिम्' ।

बुद्धेन लोके नाशसंरक्षिका इयमेव धार्मिकीदृष्टि सम्यक् देशिता । तस्य निदर्शने बहुगाथाः अत्र सन्निबद्धाः सन्ति । तत्र हि उक्तम्–जन्मजाते मृत्युरवश्यं भवति, सुकृतं कर्म क्षीयते, आयुषः क्षणिकत्वात् । सर्वं यौवनं नश्वरम्, न च नित्यः स्वर्गः केनापि उपलभ्यते । अपि तु ततः प्रच्यवते एव । सुरा अपि तत्र प्रमादमदमोहिता उत्पद्यन्ते । फेनबुद्बुदसन्निभाश्च विनश्यन्ति । सर्वं शान्तिमेव सुखदुःखादिकं न जानन्ति मूढाः मृत्युरहस्यं कदा प्राप्स्यन्ति । सन्निहिते मृत्यौ न स्त्रियः, न बान्धवाः साहाय्यमाचरन्ति । यथा वायुना समुदीरिता जलदा आयान्ति यान्ति च ऋतौ ऋतौ पुष्पाणि फलन्ति आयान्ति तथा प्रतियान्ति न स्थायिवस्तु । अपि तु प्राणाशक्तेः एव उत्पत्तिः । परम्परादुःखस्य अपरिहार्या । तेनोक्तम्–जातिः दुःखाय, जरा दुःखाय, मरणं दुखाय, प्रियविश्लेषोऽपि दुःखाय । एकस्य पतनमव-

लोक्यापि लोकाः नोद्विजन्ते इति अपूर्वमेव मोहमाहात्म्यम्। प्रमादिनः पुरुषाः तृष्णामोहपाशाबद्धाः दुःखप्रतिकाराय सन्नद्धा क्षणिकसुखावाप्तये च सततं मोहान्धाः भवन्ति। इमं लोकं प्राप्य कृतस्य कर्मणः अचिरेणैव कालेन स्मारयिष्यति सुखविहारिणं मृत्युराजः। कृतहुतं चलनक्षणिकं जीवितञ्च विनाश्येव।

अतः दुःखाद् भयं मृत्योर्भयम् आकलय्य अनित्यं सुखं परित्यज्य सद्धर्मे रतिः क्रियते एव। स्त्री भवतु वा भवतु पुरुषो, प्रवासी भवतु वा भवतु गृहस्थो, जले तिष्ठतु स्थले वा, कुलीनः दुष्कुलीनो वा, सुस्वरूपः विरूपो वा, कठोरः मृदु वा, धनिकः निर्धनो वा, सगुणः निर्गुणो वा, कस्मिन्नपि स्थाने तिष्ठतु मृत्युराजः कुत्रापि न मुञ्चति। यथोक्तमस्ति धम्मपदे—

> न अन्तलिक्खे न समुद्दमज्झे न पब्बतानं विवरं पविस्स।
> न विज्जती सो जगति प्पदेशो यत्थ टिठ्तं न प्पसहेय्य मच्चू ॥ इति।

अतः न कालः वृथैव कलनीयः अपि तु चलाचलविधिं परिज्ञाय तत्त्वदर्शकः पापैः धर्मैः असङ्गलिप्तैः स्थिरधीः स्थितप्रज्ञः सन् तृष्णादिमोहरहितः सद्धर्मे रतिः कुर्यात्। अत एव आचार्येनागार्जुनेन उक्तम्—धर्म एव सर्वथा कल्याणकरः। सद्धर्मभाजने एव सिद्धिः संभाव्यते धर्माभ्युदयान्तरमेव नैःश्रेयसउदयः भवति। यतः विना धर्माभ्युदयं कल्याणस्य प्राप्तिः न कथमपि संभाव्यते। सुखस्य अभ्युदयरूपत्वं मोक्षस्य न श्रेयसरूपत्वम्। धर्माचरणे श्रद्धायाः तत्त्वावेदने च प्रज्ञाया एव प्राधान्यम्।[1] अतः श्रेयःसम्पत्तये द्वेषात् उभयात् मोहात् पारवश्यात् वा धर्मातिक्रमणं कदापि न कर्त्तव्यम्। सम्यक् परीक्ष्य परात्महितं च विज्ञाय शारीरिकं वाचिकं मानसिकं च कर्म कुर्यात्। अहिंसायाः चौर्यविरते परदारराहित्यस्य मिथ्या-पैशून्यञ्च पारुष्याबद्धस्य महताऽऽयासेन संयमः करणीयः, लोभद्रोहपरित्यागः नास्तिक्यदृष्टि असद्धर्मपरिवर्जनं च उज्ज्वलकर्मणां मार्गः आश्रयणीयः। एतद्

---

१. धर्ममेकान्तकल्याणं राजन् धर्मोदयाय ते।
वक्ष्यामि धर्मः सिद्धिं हि याति सद्धर्मभाजने ॥
प्राग्धर्माभ्युदयो यत्र पश्चान्नैः श्रेयसोदयः।
संप्राप्याभ्युदयं यस्मादेति नैःश्रेयसं क्रमात् ॥
सुखमभ्युदयस्तत्र मोक्षो नैःश्रेयसो मतः।
अस्य साधनसंक्षेपः श्रद्धा प्रज्ञे समासतः ॥
श्रद्धात्वाद्भजते धर्मं प्राज्ञत्वाद्वेत्ति तत्त्वतः।
प्रज्ञाप्रधानं त्वनयोः श्रद्धा पूर्वङ्गमास्य तु ॥
—रत्ना० १।२-३-४-५।

विपरीताः दशदोषाः सन्ति । यस्य च कृष्णरूपत्वं तद्यथा हिंसामद्यपानादिपरित्यागः, सम्यग्जीवननिर्वाहः, अनिर्दयत्वं, सादरं दानं, पूज्यजनसत्कारः मैत्रीभावश्च सद्धर्मः उच्यते । केवलात् शरीरतापनात् धर्मो भवति इति मिथ्या कथा, अपि तु स्कन्धादिसापेक्षवस्तुभिः सह द्वेषभावस्य सर्वथा परित्यागः कृपादृष्टिश्च धर्मस्य मूलं तत्त्वम् । दानं शील-क्षमादिकमेव बौद्धधर्मः । रत्नत्रयेण एतेषामेव यत्र तत्र परिशीलनं कृतम् आचार्यैः एतद् दानादिकं परित्यज्य कायक्लेशगः मार्गः सर्वथा अनादरणीय एव । एतद् विरुद्धाचरणं श्रेयसे कामयमानाः घोरान् संसाराटवीम् अनन्तजनपादपां क्लेशव्याल अवलीढां संसेवन्ते चेत् जरामरणजात्यादिभिः क्लेशैः पीड्यमानाः जीवनं यापयन्ति ।

सर्वस्य वासनावशप्राप्तस्य दुःखपदातृत्वं विनिवेदितम् । भूतानां कथञ्चित् लाभो भवति तथापि त्रिनिपातः अवश्यम्भावी । यतः जलदरङ्गचपलमेव जीवितम् तदा कथमिव वासनावशप्राप्तस्य वस्तुनः नित्यत्वं स्यात् । देवा भवन्तु, नागा भवन्तु गन्धर्वा वा भवन्तु सर्वस्य कर्मणः क्षणिकत्वम् अन्ते च दुर्गति एव । अतः वासनायाः परित्यागः सर्वथा अपेक्षितः । निर्वाणाभिमुखेन पुद्गलेन अस्य जगतो विषये अनात्मत्वम्, अनित्यत्वम्, दुःखमयत्वं चैव चिन्तनीयम् अनित्यत्वं च विशेषतः । तथाहि – क्षयान्तं हि सुखं सर्वम् । किमपि सुखं न ध्रुवम् ।[1] एष हि मृत्युः गच्छन्तं तिष्ठन्तं हसन्तं क्रीडन्तम् । स्थविरं गृहस्थं वा सुखितं दुःखितं वा, अगुणवन्तं गुणवन्तं वा, दुःशीलं शीलवन्तं वा, व्रतस्थम् अव्रतस्थं वा, प्रमत्तमप्रमत्तं वा प्राणिनं कर्मपाशो जरादण्डो व्याधिदण्डो रक्तोपमो भूत्वा कदाचिदपि आदातुं शक्नोति ।

अथ च सर्वमपि सुखं विषदुःखमिश्रितमिति तद् विसर्जनीयम् । सर्वोऽपि समुच्छ्रयः पतनान्त एव ।[2] क्षीणपुण्यस्य दीनस्य स्वदारैर्वर्जितस्य चानुपमं दुःखं भवति। तृष्णाविषयवृद्धस्य शोकोपहतचेतसो देवस्यापि स्वशरीरच्यवनमवश्यम्भावि । सुखानुभूतेः पश्चात् दुःखापत्तिस्तु अतीव कष्टतरा । देवलोकात् पतमानस्य दुःखं नरकवासादपि कष्टकरम् । अतः सर्वं सौख्यं पतनान्तं दुःखान्त वा अस्ति । सर्वं जन्म मरणान्तमस्ति । यथा उदितः सूर्योऽस्तं यास्यत्येव कदाचित् । एवं

---

१. क्षयान्तं हि सुखं सर्वं यो न विन्दति मोहधीः ।
स पश्चान्मरणे प्राप्ते दुःखाय जनिभाग्भवेत् ।।
—धर्मसमु० ५।२४ ।

२. सर्वे क्षयान्ता निचया पतनान्ता समुच्छ्रया ।
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ।।
—महाभारतस्य शान्तिपर्व–१२।२७–२९ ।

सर्वस्यापि जातस्य प्राणिनो मरणं ध्रुवम्। इत्येवं येऽपि सुखप्रमत्ता देवास्तेषामपि सुखमशाश्वतम्। किमते नावबुध्यन्ते पतनान्तं सदा सुखमिति।

सुखमोहिता एवेमं लोकम् अजरामरवत् पश्यन्ति। तृष्णावशात् सुखस्य पतनान्तत्वं च नावगच्छन्ति। एते तृष्णाविवशा देवा सुखाद् विमुच्यन्ते। वस्तुतस्तु सर्वे चराचरजगतः पदार्था बहिरेव मनोहराः। अन्ते सर्वेषामपि नाशो सुनिश्चितः। सर्वं च सुखं गन्धर्वनगरोपमं मायाबुद्बुदोपमं चास्ति। अतः सर्वमपि भोग्यं क्षणिकम्, इति तस्यानित्यस्य भोग्यस्य तृष्णैव दुःखमूलभूता। त्रैधातुकमिदं जगत् कालपाशयोजितमस्ति, परन्तु तृष्णाविमुग्धा लोकास्त न पश्यन्ति। कालपाशबद्धस्य जनस्य न कोऽपि त्राता। अतो धर्मतायाः महत्त्वमुत्पादयता ग्रन्थकारेण कथितम्—

धर्मतेयं सदा लोके सम्यग्बुद्धेन दर्शिता।
उभयस्य क्षयो नाशो जनस्या परिवर्तते॥
जातौ सत्यां यथा मृत्युरवश्य स्थित एव हि।
क्षीयते सुकृतं कर्म आयूंषि क्षणिकानि हि॥ इति।

एतदनित्यत्वपरिज्ञानाय धर्मविनये संवरो भजनीयो निर्वाणाभिमुखैः पुरुषोत्तमैः। ज्ञेयं चैतद् यत् न नित्यं लभ्यते स्वर्गो न नित्यं क्षणसम्पदति। प्रमादमदमोहिताः सुरा अपि नाशमाप्नुवन्ति। यतः पतनान्ता हि विभूतयो भवन्ति गन्धर्वनगरोपमाः फेनबुद्बुदसन्निभाश्च। भौतिकसौख्यदातारोऽपि न मृत्युकाले त्रातारः। सर्वस्यापि सुखस्य कालवशात् संयोगोऽपि विनाशमाप्स्यति। तथा च—

जातिर्दुःखा जरा दुःखा मरणं दुःखमेव च।
प्रियैश्च सह विश्लेषो दुःखस्यैषा परम्परा॥ इति।

इत्थं यत्किमपि उत्पद्यते तन्नश्यत्येव, मरिष्यत्येव क्षणिकत्वात्। अतः सुखस्य नाशो मृत्युश्चावश्यम्भावी। एतादृशसुखविहारिणोऽसन्तुष्टा एव तिष्ठन्ति। सुखस्य विनाशित्वात् मरणस्य च निश्चित्वात् धर्मे रतिः कार्या। यतो हि प्रियैः वियोगो सुनिश्चितः। अतः धर्मे रतिरपेक्षिताः धर्मस्यैव मुख्यत्वात्। मनः पाशैर्बन्धनैर्जनो बध्यते। परन्तु दुःखकाले मृत्युकाले वा न कोऽपि सहायको भवति। दिवसे सुतरां व्यतीतेऽपि रात्रिः सुखदैव भविष्यति नेदं सुनिश्चितमिति श्रेयसे मतिः कार्या, अन्यथा एकदिनं मृत्युराजोऽवमर्दयिष्यत्येव। कालवशात् कदाचिद् सुखादपि दुःखमभ्युपगमिष्यति, यतो हि सर्वं हि भौतिकं सुखं दुःखमिश्रितम्। सर्वाण्येव वस्तूनि उत्पादस्थिति-भङ्गुरत्वयुतानि सन्ति। अतो मरणस्यावश्यम्भावितत्वात् सर्वस्य जातस्य च च्यवनस्वभावत्वात् मृत्योः पूर्वमेव श्रेयोऽर्थिना पुरुषेण स्वहितमाधेयम्। अनित्यत्वात् मृत्युः सर्वं रसं पिबति। कालवशात् यौवनमप्यनित्यम्। अतस्तस्य विलयोऽवश्यम्भावी। मृत्युरित्यभिधीयते—

व्युच्छेत्ता सर्वसौख्यानां दुःखनामाकरो महान् ।
विश्लेषः सर्वबन्धानां मृत्युरित्यभिधीयते ॥

भयोपनेता भूतानां दुःखानामुदधिः समः ।
व्यामोहकर्त्ता बुद्धानां मृत्युरित्यभिधीयते ॥ इति ।

अतः श्रेयसे एव मतिः करणीया, न तु प्रमादे। यतो हि गत जीवनं नायाति। तैलक्षये दीपनाश इव कर्मक्षये सुखस्य जीवनस्य नाशो भवत्येव। एतदनित्यत्वा-गमादेव मुग्धानामधर्मे रतिर्भवति। लोभवशाच्च मृत्योरुपेक्षा क्रियते। मोहाबद्धाश्च जनाः मृत्युं वियोगं च जानन्तोऽपि नावगच्छन्ति। अतः कर्मस्कन्धः संगो वा दुःखास्पदः। तत्त्वदर्शकः सर्वेषामपि पदार्थानां चञ्चलत्व वमनित्यत्वञ्च परिदृश्य पापकैर्धर्मैरलिप्तो भवेत्। यतः देवादीनामपि क्षयो भवति।[१] अतः तत्त्वचिन्तको एव दुर्गतिं नाधिगच्छति। यथोक्तमन्ते ग्रन्थकर्त्रा—

चलाचलविधिज्ञेयः कर्मणा तत्त्वदर्शकः ।
अलिप्तः पापकैर्धर्मै न गच्छति दुर्गतिम् ॥ इति ।

## ( ६ ) षष्ठ अप्रमादवर्गः

मदनं मदः मादो वा। प्रकर्षेण अत्यधिकम् मादः प्रमादः। अयं मद् धातुः व्याकरणशास्त्रे स्तुतौ, मोदे ( हर्षे ) ग्लेपने ( दैन्ये ) गर्वे, आलस्ये, स्वप्ने, कान्तौ, गतौ च पठ्यते। अत्र प्रकरणे हर्षः, ग्लेपनम्, गर्वः, गतिः–इत्येतेऽर्था यथाप्रसङ्गम-भिप्रेताः। तथा च धर्माद्याचरणे विरतिः उपेक्षा वा, शुभधर्मसु आलस्यम्, तेषां जानताऽप्यकरणम्, अशुभानामकुशलानां च कर्मणां सेवनम्, तेषु रागो वा 'प्रमादः' इत्यभिधीयते। 'सद्धर्मे शुभकर्मणि कुशलकर्मणि च प्रमादो न विधेयः' इति एतद्वर्गलेखनमिषेण ग्रन्थकारस्य निर्वाणाभिमुखानां जिज्ञासूनां कृते उद्बोधनमस्ति। स स्वयमेव कथयति—

यः प्रमादरतो जन्तुर्नासौ मोक्षाय कल्पते ।
**प्रमादविषमूढस्य** निर्वाणं दूरमेव तत् ॥ इति ।

---

१. देवनागाः सगन्धर्वा पिशाचोरगराक्षसाः ।
न शक्ताश्च्यवने क्षान्तं बलं तस्य तथागतम् ॥
—धर्मसमु० ५।२२१ ।

एतदेव विशदयति—प्रमादः प्राणिन उत्तमः शत्रुः। प्रमत्तास्तु देवा अपि नरके पतन्ति, किं पुनः मर्त्याः। प्रमादो गाढं विषम्। अप्रमादोऽमृतपदम्,[1] प्रमादश्च मृत्युपदं प्रापयति जनान्। प्रमादोन्मत्ता दुःखमधिगच्छन्ति, न च परमां शान्तिमधिगन्तुं शक्नुवन्ति। धर्मविमूढस्य कृते स्वर्गः कल्पनामात्रम्। प्रमादहीनः शुभकर्मकारी सौभाग्यं विन्दति। प्रमत्तस्तु न कदापि मोदते।

वस्तुतस्तु प्रमादाग्नेर्धूम एव हर्षः। अतः प्रमादस्य विषवत् परित्यागः कार्यः। अन्यथा नरकप्राप्तिः सुलभा। प्रमादः सर्वानर्थमूलम्। दुःखं प्रमादस्य कटुकं फलं भवति। यो हि मन्दबुद्धिः प्रमादपरस्तस्य पशुना न कोऽपि भेदः। देवलोकं समासाद्याऽपि प्रमादिनस्ततश्च्यवनं सुकरमेव। प्रमादवशगस्य नरस्य नाशोऽवश्यम्भावी। अतो मूढ एव प्रमादस्य वशीभवति।

संसारोऽयं प्रमादमूलकोऽस्ति। कामो नरकस्य हेतुः। अविद्या च प्रमादमूलिकाऽन्धकारात्मिका। अतः प्रमादोन्मादिभिरेतत् प्रतिक्षणं ध्येयम्—

उपस्थिते महादुःखे पतनान्ते हि जीविते।
पश्चात् वहन्ति विरसं पतनान्तं सुखं चलम्॥
संयोगो विप्रयोगान्तः पतनान्तं सुखं सदा।
जरान्तं यौवनं सर्वं कर्मान्तः सर्वदेहिनाम्॥ इति।

शुभाशुभकर्मभिर्बद्धा जना नटवदिह संसारे नृत्यन्ति, यतो हि संसारः कर्मनाटकसम्बद्धः वर्तते। प्रमादो विषवद् हानिकरः। तेन दग्धो न कदापि सुखी भवेत्। प्रमादः परमो दोषः। सर्वं सुखमपि प्रमादेन नश्यति। अतः प्रमादमूलः संसार अप्रमादश्च सद्गतिरिति। दुःखाद्भीरुभिः प्रमादः परित्याज्यः। अन्यथा तेषां प्रणाशः सुनिश्चितः। प्रमादमूढा नरकमेव व्रजन्ति। प्रमादवागुराबद्धस्तृष्णया विषयार्णवे मग्नो बारं बारं जगत्येव क्रीडति। इहापि चातृप्त इव तिष्ठति। कामानलसंदग्धो नरो प्रमादेन विमोहितो व्यसने पतति। दहति च प्रमादः सर्वशस्तं पामरम्। सर्वांश्चानर्थान् प्रकरोति। प्रमादोपहतः कल्याणवर्जितो नरकं याति।

प्रमादिनो भोजने मैथुने चैव सदा रतास्तिष्ठन्ति। अतस्तेषां विनिपातः भवत्येव पदे पदे। नरः सुदुर्लभं मानुषं जन्म प्राप्यापि यदि सत्कर्म न करोति तदा

---

१. अप्रमादोऽमृतपदं प्रमादो मृत्युनः पदम्।
अप्रमादेन ते देवाः देवानां श्रेष्ठतां गताः॥
प्रमादमूलः संसारः अप्रमादश्च सद्गतिः।
तस्माद् प्रमादविरतः सुखी भवति सर्वदा॥
—धर्मसमु० ६।४१–४२।

वृथैव तस्य जीवनम्। प्रमादसेविनो नरा दूरतः परिहर्तव्याः। प्रमादतृष्णा रागवृद्धिकरी। अतः सुखार्थिना प्रमादे न मतिः कार्या। प्रमादं विषं मत्वा तत्परित्यागिनो धन्या एव।[१] यतो हि धात्वायतनसम्मोहः श्रेयसि विघ्नकारकः। यथोक्तं ग्रन्थाकर्त्रा—

धात्वायतनसम्मोहः श्रेयसां विघ्नकारकः।
संन्यासः सर्वकर्माणां प्रमादः सम्प्रवर्तते॥ इति।

सद्धर्माचरणं भूतेषु करुणा च श्रेयसे जायते। मृत्युकाले सम्प्राप्ते दुःखानि दृढानि भवन्तीति श्रेयोऽर्थिभिः प्रमादरहितैर्भाव्यम्। सन्तोष एव च निर्वाणसाधनम्। सर्वकामविरागश्च श्रेयःसाधनम्। अनागतविधिज्ञो निर्बन्धो भवति। अप्रमादरतो निर्वाणस्यान्तिके स्थितः। प्रमादस्तु सर्वेषां पश्वादीनामपि समान इति मोक्षचर्यामूलं धर्माचरणं विधेयम्। यतो हि प्रमादशून्या धर्मरता एव जना देवत्वं प्राप्नुवन्ति। मद्यपानात्मकः प्रमादः सर्वथा हेयः। यतो हि प्रमादमत्तो गतिपञ्चके भ्राम्यति। प्रमादविरहितश्चाव्ययं पदं प्राप्नोति। प्रमादः पतनसाधनमिति स न संसेव्यः। प्रमादी न कदापि सुखभाक्। प्रमादः शुभनाशकर एव। प्रमादिनो ज्ञानशून्या भयं दुःखं चाविगणय्य पशुभिः समाना लोके विचरन्ति। प्रमादिनां कृते मृत्योर्द्वारमनावृतम्। प्रमादो मृत्योः पर्यायः। अप्रमादः स्वर्गमार्गः।[२]

प्रमादविषवृक्षस्य तिस्रः शाखाः—जरा, व्याधिः मृत्युश्चेति। सत्क्रियया इमास्तिस्रोऽपि छेद्याः। प्रमादविरहिणो लोकशत्रवोऽपि नश्यन्ति। प्रमादशून्योऽच्युतं सुखमाप्नोति। यतो हि प्रमादवशाद् वियोगः, वियोगाच्च दुःखं जायते। अतः प्रमादवर्जनं सुखसाधनम्। प्रमादिनः कार्याकार्यविमूढत्वाद् विनाशः सुनिश्चितः। अस्मान्निर्वाणं दूरे तिष्ठति। धर्मिण एव सुखमाप्नुवन्तीति शास्त्रघोषः।

मद्येन सुरा अपि प्रमादं यान्ति। मद्यदोषेण जनानां नरकपातो भवति। मद्यात् कामः कामाच्च तत्त्वं नानुद्रष्टुं शक्नोति नरः। प्रमादिनां चत्वार्यपि ध्यानानि प्रणश्यन्ति। अत एव निष्कामा बुद्धा अप्रमादं प्रशंसन्ति। अप्रमत्ता जनाः संयमेन

---

१. प्रमादः विषवद् ये तु परिरक्षन्ति पण्डिता।
ते मृत्युसमये प्राप्ते भवन्ति सुखभागिनः॥
प्रमादः परमो मृत्युरप्रमादः परं सुखम्।
तस्मात् सुखार्थिनाः नित्यं मा प्रमादे मतिं कृथा॥
—धर्मसमु० ६।६९।७०।

२. अप्रमाद इति ख्यातः स्वर्गमार्ग प्रदेशकः।
अर्थानर्थौ समावेतौ पश्चान्मोक्षस्तथैव च॥
—धर्मसमु०-६।११५।

युता जराव्याधिविनिर्मुक्ता मरणनिर्भया विहरन्ति। परं प्रमत्तः संसारान्नैव मुच्यते। प्रमत्तानां विषयाभिमुखैषिणां विनिपातो ध्रुव एवास्ति। प्रमादः श्रेयसां नाशकृत् परं बन्धनं भवति। सुखाभिलाषी प्रमादं परित्यज्येत्। अप्रमादी एव निर्माणमधिगन्तुं शक्नोति। प्रमत्तो जनोऽसमर्थः शुभकर्माणि कर्त्तुम्। नरकमनभिलाषिभिः प्रमादपरित्यागपूर्वकं ज्ञानरतैर्भवितव्यम्। अप्रमत्ताः सदा तृप्ताः सन्तः सुखमेधन्ते। प्रमादात् रागः, रागात् द्वेषः तेन च नरकगमनं सुनिश्चितम्। प्रमादशून्यः सन् शिवं पन्थानमधिरोहति। प्रमादो हि दुर्गतीनां नेतृत्वं करोति।

देवविग्रहधारिणोऽपि यदि प्रमत्तास्तर्हि ते पशुभिः समाना एव। प्रमादानुधाविनः पापकर्मबन्धनं प्राप्नुवन्ति। प्रमादः सर्वेषां शुभधर्मणां शत्रुरेव। प्रमादिनो भवचक्रजालं भेत्तुमशक्ताः। तृष्णया त्रैधातुकमिदं यन्त्रितमस्ति। तृष्णाभीता एव धर्मस्थानं लभन्ते। किं बहुना –

प्रमादः परमं दुःखमप्रमादः परं सुखम्।
समासाल्लक्षणं प्रोक्तमप्रमादप्रमादयोः॥ इति।

अस्तीतीदं प्रमादाप्रमादयोरन्तरम्। एवं प्रमादरतस्य जनस्य मोक्षप्राप्तिः सर्वथा सुदुर्लभा भवति। अप्रमत्ताः मर्त्याः संस्कृताः परमां शान्तिं प्रयान्ति। प्रमादस्य विषरूपत्वात् अमृतकामः प्रमादं परित्यज्येत्। प्रमादरूपाग्निः हर्षं दहति। विषयेन मोहिताः प्रमादवशात् दुःखमपि कामयमानाः नरकं व्रजन्ति। प्रमादेन कदाचित् सुखप्राप्तिः न संभाव्यते। प्रमादविरताः जनाः एव अच्युतं पद प्राप्नुवन्ति। प्रमादवशादेव क्षीणशुभकर्माणः देवलोकादपि पतन्ति। तस्मात् प्रमादस्य चञ्चलां तीव्रां गतिमवलोक्य नित्यं सुचरितैः भाव्यम्। संसारो हि प्रमादमूल एव। तस्मात् प्रमादवशात् जनाः संसारे दुःखसागरे मज्जन्ति निमज्जन्ति च। चलं हि सुखं, संयोगः वियोगान्तः, सुखं पतनान्तं, यौवनं जरान्तम्। यतः शुभाशुभेन कर्मणाऽऽबद्धाः देहिनः संसारे भ्रमन्ति। तस्मात् प्रमादस्य परं दोषकरत्वं विभाव्य प्रमादपरित्यागः सर्वथैव करणीयः। दुर्लभं मानुषं जन्म संप्राप्य प्रमादवशात् सुकृतकर्मच्युताः भवन्ति। अन्यथा नरके वासः सुनिश्चितः। पुनः पुनः संसारे आगमनमपि सुनिश्चितमेव। एवं प्रमादरहितैः पुरुषार्थः मोक्षप्राप्तिमूलकः बन्धनछेदकरः सेवनीयः। यथा यथा सर्वकामेषु विरागः निर्वाणे च प्रवृत्तिः तथा तथा विमलज्ञानं जायते। प्रमादो हि मद्यपानादपि सुदुष्करं दुःखमूलम्। आहारमैथुनादिकं यथा आकीटपतङ्गादिनां तथैव इयं प्रवृत्तिः स्वाभाविकी एव। प्रमादादेव देवा अपि सुखसाधनात् विरताः कर्त्तव्यविरहिताः भवन्ति। न च प्रमादिनः मदेन मोहिता ध्यानतत्परा भवन्ति, न वा अशुभवासनां परित्यजन्ति, न वा धर्मचारिणः भवन्ति। परिणामतः प्रमादः विनिपाताय नरकाय एव जायते। प्रमादोपहृतामूढाः दुर्गतिपरम्परां प्राप्याऽपि नृत्यन्ति हसन्ति च, न खेदमाप्नुवन्ति। व्याधिं, जरां मृत्युञ्च

पश्यन्तोऽपि प्रमादवशात् न पश्यन्ति। चापल्यादिकमेव प्रमादस्य अङ्कुरं दुःखञ्च ततः उत्पद्यते दुर्गतिश्च प्राप्यते। तस्मात् प्रमादः न निःश्रेयसे न वा अभ्युदयाय इति प्रमादः सद्धर्मानुरागिभिः सर्वथैव हेयः। यथोक्तं भिक्षुणा अवलोकितसिंहेन—

तस्मात् प्रमादो न नरेण सेव्यः स दुर्गतीनां प्रथमाग्रमेव।
विहाय तं दुःखसहस्रयोनिं प्रयान्ति बुद्धा भवपारग्रयम्॥ इति।

## ( ७ ) सप्तमः कामजुगुप्सावर्गः

कामः=स्त्रीरागाद्यात्मकं विषयसुखम्। जुगुप्सेति च 'उपक्रोशो जुगुप्सा च कुत्सा निन्दा च गर्हणे' इत्यमरकोशप्रामाण्येन निन्दार्थकः शब्दः। कामस्य जुगुप्सा, निन्दा, गर्हणेत्यर्थः। अर्थात् ग्रन्थकारेणाऽस्मिन् वर्गे निर्वाणाभिलाषिणां हृदि वैराग्योत्पादनार्थं वैपुल्यसूत्रसङ्ग्रहतः काम ( विषय ) जुगुप्सात्मकाः गाथाः संगृहीताः। यथा—

न कामेषु रतिं कुर्यात् कामाः परमवञ्चकाः।
संसारबन्धना घोराः सर्वे नरकहेतवः॥ इति।

कामस्य परिणामो दुःखात्मक एव सर्वदेति कामस्य क्षुरधारापेक्षयापि भयङ्करत्वं विद्यते। कामवशगा नरकालयं गच्छन्ति। अतः कामविषयस्य सर्वथा परित्यागः करणीयः। कामा जनं नरके पातयन्ति।[१] परिवर्जितकामस्तु निर्वाणाभिरतोऽकुशलं नानुसेवते। परं पञ्चेन्द्रियविषयासक्तरागाग्निर्विषयेनैव तृप्यति। रागाग्निर्दूरादपि दाहमुत्पादयति, तृष्णासमीरणबलात्।

रागान्धैः सुखं प्राप्यापि तप्यत एव। यतो हि विषया न कदापि सुखकारकाः। अथ च विषयेन्धनैर्न कामाग्निः कदापि शान्तिमधिगच्छति। मोहचेष्टितं सुखमनुभवन् देवोऽपि पशुवदेव। कामः कदापि न तृप्त्यादायकः श्रुतः। कामान्धाः कर्तव्यविमूढा जायन्ते। कामा असारा वञ्चकाश्च सन्ति। तेषां वर्जनेन नैष्ठिकं सुखं मिलति। तेषां सेवनं नरकहेतुः, यतो हि कामजसुखमापातरम्यम्। कामपरित्यागः सदैव कल्याणाय भवति। कामसेवनं चादौ, मध्ये अन्ते वा दुःखावह एव। अकृतबुद्धयः कामकृतामेव प्रीतिं कुर्वन्ति। रागकृतो दाहः पतङ्गवत् कामिनं नाशयति। केचित् पामराः विषं पीत्वापि जीवेयुः, परं कामविषपीतस्य जीवनं दुर्लभमेव। काममोहितः सर्वथा दग्धो भवति। यस्य चित्तं कामेषु रज्यते, स व्यसने

---

१. इन्द्रियाणीन्द्रियार्थज्ञो मोहयित्वा पृथग्विधाः।
नरके पातयन्त्येते कामाः बालमनोहराः॥
—धर्मसमु० ७।१०।

समुत्पन्ने परितप्तो भवति। प्रकृतिदुर्बलाः काममदैर्मत्ता जगति भ्रमन्तो नरकादि-महद् भयं न पश्यन्ति। शतशः सहस्रशो वा लब्धकामा अपि नश्यन्ति इति तेषु न विश्वसनीयम्।

कामव्यसनेन मनुष्या नित्यं निरयमेव गच्छन्तीति स्वहिते मनो विधेयम्। यतो हि ज्ञानदीपेनैवेन्द्रियाणां विषयेभ्यस्तृप्तिर्जायते कामिनां व्यसने प्राप्ते कोऽपि रक्षको न भवति। गन्धर्वनगरप्रख्याः कामा वञ्चका एव भवन्तीति वस्तुतथ्यम्। कामवशगानां जनानां कृते दुःखं तु सुनिश्चितमस्ति। तस्य काममदान्धस्य कदापि शर्म न सम्भाव्यते।

आध्यात्मिकसुखापेक्षया कामजं सुखं सर्वथा हीनम्। तथा चोक्तम्—

यच्च कामसुखं लोके यच्च तृष्णोद्भवं सुखम्।
एकस्याध्यात्मिकस्येदं कलां नार्हतिषोडशीम्॥ इति।

सेव्यमानः कामोऽहर्निशं वर्धत एव। कामासक्तानां नरके पतनं ध्रुवमिति ततः चक्षुर्हीनतैव श्रेयस्करी। कामचारिणां ज्ञानं दुर्लभमेव। कामा मित्राण्यपि दुःखायैव सन्ति। सर्वमपि कामसुखं घनच्छायास्वरूपं कर्ममिश्रमस्ति। अतः कामाः कदापि न सेव्याः।

बालिशाः काममेव सर्वस्वं मन्यन्ते। ते विषफलोपमान् कामानास्वाद्य कुकर्म-फलं प्राप्नुवन्ति। आकाशस्य यथा नान्तो तथैव कामस्यापि। तस्य चानन्तत्वात्ततः कथं तृप्तिः स्यात्? अतः कामास्तापायैव, न तु शान्त्यै। शान्तिः सुखमूला, कामास्तु असुखायैव सन्ति। कामबद्धा मोहबद्धाश्च बालिशा भवन्ति। विषयरम्यः कामपाशः परमदारुणः। कामार्तो मृगवत् वनाद् वनं धावति। तत्र कामजा विषयास्तस्य कल्याणनाशका भवन्ति। काममुग्धा जनाः रथचक्रवत् सदा भ्रान्ताः भवन्ति। निर्वाणाभिमुखम् एव कामचर्यां विहाय शान्तिमधिगच्छन्ति। अन्यथा कामास्तु विद्युद्गुणोपमाश्चञ्चला एव। कामेषु इन्द्रियाणां तृप्तिरसम्भवा, तृप्तौ च तत्त्यागोऽपि न सम्भाव्यते। अतः कामोदयव्ययौ सम्यगवधेयौ। अथ च—

ज्ञानाङ्कुशेन वार्यन्ते विषयास्तत्त्वदर्शिभिः।
येऽमुक्ताश्चपलास्तीव्राः सर्वानर्थकरा मताः॥ इति।

सद्धर्मे यदि अभिरुचिर्न जायते तदा मनुष्यः प्रमादी भवति। प्रमत्तः सन् विषयासक्ति कुर्वन्ति, विषयासक्तिवशात् कामेषु मतिर्जायते। कामश्च वञ्चकस्य परं कोटिमाश्रयते। घोरनरकयात्रासाधनभूतः काम एव इत्यत्र नास्ति तेषामपि विप्रतिपत्तिः। कामोरगदष्टः कदापि सुखं नाश्नाति, निशितधारेण क्षुरेण स्वयमात्मघातं कर्तुं सततमुतायतास्तिष्ठति। बौद्धधर्मसाहित्येषु विघ्नोत्पादकः काम एव मारनाम्ना ख्यातः। अन्यसाहित्येषु काम एव अधिपतिः बोधिसत्वः

सद्धर्मतत्परः यदा बुद्धत्वप्राप्तौ सर्वथा सन्निहितो भवति, तदा मार एव विघ्नाय उदितो भवति। अतः मारोपरि विजयसिद्धिलाभाय समपेक्षितः। रूपस्य साफल्याय त्रिवर्णनिषेवनमेवावश्यकम्। यदा मनुष्यः जीर्णो भवति तदा धर्ममाप्तुं कामपरित्यागः नूनमपेक्षितः। युवावस्थैव कामावस्था। अस्यामवस्थायां न कोऽपि इन्द्रियेभ्यो रक्षां कर्तुं समर्थो भवति। कामस्य पूर्वं हि वयः सत्यं न शक्यते रक्षितुम् इन्द्रियेभ्यः राजगृहस्य तपोभिरामे एका देवकन्या स्थविरं प्रति कथयति—

अभुत्वा भिक्खरि भिक्खु! न हि भुत्वा न भिक्खसि।
भुत्वा न भिक्खु! मातं कालो उपच्चगा॥ इति।

अतःपरं भगवता बुद्धेनोक्तम्—वार्धक्यस्य मृत्योश्च भयमवगत्य ज्ञानिजनान् परित्यज्य सद्धर्मसरणं प्राप्तवान्। विषधरेभ्यः आकाशपतितवज्रेभ्यः वायुमिश्रिताग्निभ्यः न तथा विभेमि यथा विषयेभ्यः। अनित्यो हि कामः ज्ञानरूपी धनस्य तस्करः मायासदृशः मानवहृदयं मोहेन पातयति। न कदाचिदपि कामेन तृप्तिर्जायते। वल्कलधारी कन्दमूलफलाहारी भुजङ्गसदृशलम्बायमानजटाधारी तपस्वी जनोऽपि कामासक्तः गर्ते पतति।[१] कामाग्निरेव विपत्तिमूलभूतः। मदोन्मत्तः पुरुषः नष्टाङ्गतिमाप्नोति। एवमेव बहवः दोषाः कामस्य प्रदर्शिता, यैः ज्ञायन्ते यत् कामवशात् निपतितस्य जनस्य शतधा विनिपातो भवति। कदाचित् ब्रह्मचर्यव्रती तपोनिष्ठः कुमारः मारमवोचत्—रे प्रमत्तबन्धो पापिन्! किमर्थमागच्छसि? नेच्छसि पुण्यम्। श्रद्धाप्रज्ञा सद्धर्मे एव ममहितकारिणी। क्षीणेऽपि शान्तो भवति। सद्धर्माचरणेन कदाचिदपि कामापेक्षा न भवति। यथोक्तं पालित्रिपिटकस्य सुत्तनिपाते—

पमत्तबन्धु पापिमयेनत्थेन इधागतो।
नदीनमपि सोतानि अयं वातो विसोयते।
किं च मे पहितत्तस्स लोहितं नुपसस्सये॥
लोहिते सुस्समानम्हि पित्त सेम्हं च सुस्सति।
मंसेसु खीयनानेसु मिय्यो चित्तं पसीदति।
मिय्यो सति च पञ्ञा च समाधि मम तिट्ठति॥ इति।

---

१. नाशीविषेभ्योऽपि तथा विभेमि नैवाशनिभ्यो गगनाच्च्युतेभ्यः।
न पावकेभ्योऽनिलसहितेभ्यो यथा भयं मे विषयेभ्य एभ्यः॥
चीराम्बरा मूलफलम्बुभक्षा जटा वहन्तोऽपि भुजङ्गदीर्घाः।
यैर्नान्यकार्या मुनयोऽपि भग्नाः कः कामसंज्ञान् मृगयेत् शत्रून्॥
बु० च० ११।८–१७।

कामस्य सेनायाम् अरतिः, क्षुत्पिपासा, तृष्णा, स्त्यानं ऋद्धिभीरुत्वं विचिकित्सा, माया इत्यादयः सन्ति । गुणानाम् अवज्ञैव कामस्य मुख्यमुद्देश्यं कामासक्तेरपेक्षया मरणमेव श्रेयः प्रज्ञैव कामविजयः संभाव्यते । प्रज्ञैव सुप्रतिष्ठिता, अप्रमत्तः सन् लोके कल्याणमश्नुते । सद्धर्माचारिणां समीपे कामः कदापि नागन्तुं शक्नोति । कामस्य परित्यागाय यत्नः करणीय इति । यथोक्तं पालित्रिपिटकस्य सुत्तनिपाते--

> यं ते तं नप्पसहति सेनं लोको सदेवको ।
> तं ते पञ्ञाय भेच्छामि आमं पत्तं व अस्मना ।।
> अकामस्स ते गमिस्सन्ति यत्थ गन्त्वा न गोचरे ।। इति ।

एवं यदा मनुष्यः सदा पाषाणवत् सुदृढो भवति, तदा काकादिवत् मारः किमपि कर्त्तुं न प्रभवति । अन्ते उदासीनः विफलप्रयासः शोकापन्नः अप्रमत्तजनं परित्यज्य प्रमादयुतं पुरुषमाप्नोति ।[1] वस्तुतः कामस्य तादृशीशक्तिः विद्यते यद् वशात् सर्वोऽपि तदनुकूलाचरणे प्रवृत्तो भवति, यदा मानवः दृढव्रती, तपस्वी बोधिसत्त्वावस्थां प्राप्नोति, तदा कामस्य भीतिः न भवति । यदि कामानुगः पुरुषो भवति, तदा नूनमेव पदे पदे विनिपातः जायते, दुःखञ्चानुभवति । सद्धर्मशून्यश्च जायते । अत एव अत्र उक्तम् इन्द्रियाणि मोहयित्वा नरके पातयन्ति । वह्निः दूरात् न दाहकः, परन्तु रागाग्निः सङ्कल्पवशादेव दाहं जनयति । यथा यथा रागाग्निर्ज्वलति तथा तथा सुखाशा क्षीयते । कामसेवनात् नरके पातः सुनिश्चित एव । तस्मात् सुखार्थिभिः सदा कामः परित्यजनीयः सद्धर्मश्च आचरणीयः । कामयमानानां तदपि तृप्तिर्नभवति । पुनः पुनः सेव्यमानः कामः प्रवर्धत एव । अमरा रागविवशाः विषयतत्पराः मोहरोगेण वञ्चिताः सन्तः नूनमेव देवलोकात् निपतन्ति । आध्यात्मिकरसस्य षोडशीं कलामपि कामसुखं तृष्णोद्भवसुखं च नार्हति । अनलसदृशः कामः विषयवासनया पुरुषं विनाशयति । कुकर्मफलमोहितः कामविषं समास्वाद्य कुकर्मफलम् उपभुङ्क्ते, दुःखं च अनुभवति । मोहान्धाः कामासक्तिप्रवञ्चिता बालिशाः महिषा इव रमन्ति । तस्मात् अनित्यं कामसुखं कदापि नाभिलषणीयम्, कामभोगेषु संसक्तः पत्थ्याऽपत्थ्यं न जानाति । गन्धर्वपुरतुल्येषु ज्वालामालोपमेषु विचित्रेषु कामेषु सुराः अपि निपतन्ति । तस्मात् वितृष्णोपमः वक्रः कामः सदा परित्यज्यः । कामसङ्कल्पादेव रोगः जायते । रोगात् क्रोधः प्रभवति । क्रोधाभिभूतः मोहमाप्नोति निर्वाणसुखं परित्यज्य अनित्यं कामसुखं संसेवते । काममलं परित्यज्य कामपङ्कात् मुक्तः, निर्मलः, शान्तः, विमुक्तः, सद्धर्माचरणरतः एव निर्वाणमधिगच्छति । अतः सद्धर्माभिलाषिभिः नित्यसुखकामनया कामविरतिः करणीया एव ।

---

१. सुत्तनिपाते गाथा–२२-२३-२४ ।

कामादिविषया पूर्ववर्गे निरूपिताः। सर्वेषां विषयाणां मूलं कारणं तृष्णैव विद्यते। वासनात्मिकायाः तृष्णायाः यावत् नाशो न भवति, तावत् सद्धर्माचरणचर्चा कैवल्यबुद्धिश्च पुस्तकस्थैव विद्यते। ऐहिकस्य पारलौकिकस्य फलभोगविरागस्य यदा त्यागो भवति, तदैव विरागात्मकतृष्णाक्षयः जायते। अत एव शुभाशुभमिश्रितस्य फलस्य उपलब्धिः मानसयोनिरूपेण जायते। मनुष्यः स्वभावतः एव पुण्यानुष्ठाने न प्रवृत्तो भवति, निम्नगाप्रवृत्तिः तु स्वाभाविकी। अशुभमार्गेनैव वासनासरित् प्रवहति। एतदपि सत्यं यत् जनाः पापं कुर्वन्ति किन्तु तत्फलं नेच्छन्ति। पुण्यात् विनिवृत्ता अपि पुण्यफलम् इच्छन्ति एव। यतः पापात् अशुभफलप्राप्तिर्भवति। अशुभफलाच्च दुःखं भवति, शुभकर्मणा मनुष्यः देवयोनिमाप्नोति, अशुभकर्मणा च नरकयोनिम्। अतः अस्मिन् मानवजन्मनि नित्यानित्यवस्तुविवेकपूर्विका सद्धर्मे प्रवृत्तिरेव आवश्यकी भवति। यथोक्तं वर्गस्यान्ते भिक्षुणा अवलोकितसिंहेन—

यः कामपङ्कोद्धृतवानदोषः सर्वेषु सत्त्वेषु सदा सुखार्थी।
स निर्मलोऽशान्तमनोविमुक्तः प्राप्नोति निर्वाणसुखं प्रसह्य ॥ इति।

## (८) तृष्णावर्गोऽष्टमः

अस्मिन् वर्गे ग्रन्थकारेण तृष्णामधिकृत्य तत्त्वबुभुत्सोरुद्बोधनं कृतम्। तृष्णाऽतिस्पृहा। विषयभोगानां पौनःपुन्येन प्राप्तेरिच्छेत्यर्थः तामेव विवृणोति—

कर्मक्षयाद् विमुच्यन्ते नरकात् पापकारिणः।
त्रिषु धातुषु दह्यन्ते नरास्तृष्णावशानुगा ॥ इति।

नरकाग्निः केवलं गात्रं दहति, परं तृष्णाग्निर्नृणां गात्रं मानसं च दाहं करोति। तस्मात् तृष्णाग्निर्नारकाग्नेर्विशिष्टतरः। रागाग्निः स्वर्गे दह्यते। तिर्यग्-योनौ द्वेषाग्निर्वैशिष्टचतरं भजते। मोहाग्निः पापातिरेके एव दहति, परं तृष्णाग्निः सदैव सर्वत्र दाहको भवति। एवमेव लोभवह्निरपि यथा यथा विषयान् भोक्तुं प्राप्नुवन्ति तथा तथा वर्धत एव। अतो नास्ति लोभसमो रिपुर्भुवि। लोभेन प्राणी मृत्युमुखं प्रविशति। लोभवशादेव राजानोऽन्यं राजानं हन्ति।

तृष्णाविषशून्यः समलोष्टाश्मकाञ्चनो लोभाङ्गारविमुक्त एव निर्वाणस्याऽन्तिकं गच्छति। अनिर्वापितलोभस्य जिज्ञासोर्निर्वाणं दूरतः स्थितम्। परन्तु भवाभिलाषिणीं नन्दीं विहाय यः सद्धर्माचरति, तस्य भवजं तद् विपरीतं च दुःखं स्वप्नेऽपि न विद्यते। तृष्णाबद्धान् जनान् मृत्युः शम्बूक इव कर्षति। तृष्णा आपातरम्या विपाके च दुःखावहा। परदारेषु परधनेषु च तृष्णोपजीवनोऽवश्यं नरकगामिनो भवन्ति। तृष्णया प्रेरिता मुनयोऽपि दुःखमेव लभन्ते।

एवं यथेन्धनं प्राप्य वह्निर्ज्वलति तथैव कामभोगवशीकृतो जनो विवशो भूत्वा दह्यत एव। तृष्णाबाधया शून्यस्तु परमां शान्तिमधिगच्छति। तृष्णयाऽवञ्चितो निर्मुक्तपापकल्मषो भूत्वा वीतशोकश्चरति। अतो दुःखास्पदां तृष्णां बुद्धिमान् न कदापि सेवेत। यतो हि तृष्णापाशाकृष्टो नारकं कष्टमनुभवति। तथा विमुग्धा सर्वदोद्विग्ना एव तिष्ठन्ति। सतृष्णस्य बहवो असंख्या वितर्का जायन्ते। कामास्वाद-प्रमत्ता विषयिणो दुःखमेवावगाहन्ते। तृष्णाविमुक्तास्तु विमला भवन्ति। स्त्री-सेवी प्रमादी तृष्णापरवशो भवति। तेन च पारवश्येन तस्याऽन्ते नरके वासः। तृष्णानदीषु विषयपरवशा एव जना निमज्जन्ति। रागेणान्विताः सुरा अपि सम्मूढा त्रिदोषकाष्ठसम्भूताग्नौ पतन्ति। पञ्चतीर्थं ( स्कन्ध ) समुद्भूवा तृष्णानदी पञ्चशीर्षभुजङ्गीव मृत्युदा एव भवति। धृतसिक्तानलवत् तृष्णाग्निर्विषयभोगैः-वर्धत एव। तृष्णया जना विविधयोनिषु परिभ्रमन्ति। वीततृष्णो निर्बन्धो जनस्तु परमां गतिमाप्नोति। तृष्णाविसर्गो ज्ञानाय प्रवर्तयति जनम्। अतो विषयेन्धनसर्पाद् भयमेवोचितम्। धनतृष्णारता आजीवनं धनोपार्जनतत्परा जीवन्ति। ते मृत्युकाले विवशा एव धनं त्यजन्ति। अतः प्राज्ञो लोभममित्रमपि मित्ररूपेण वर्तमानं परित्यजेत्, यतो हि तृष्णाशयविमुक्तिरेव जनानां श्रेयष्करी। आकाङ्क्षाशून्यतैव कल्याणकरी। अमुग्धा एव यतिर्जीवनस्य महत्त्वमव-गच्छन्ति। तृष्णया विरहिताः शुभाशुभपरित्यागिनश्चैवान्ते जरामरणरहिता भवन्ति। अतो ज्ञानेन तृष्णावृक्षस्यच्छेदनं कर्त्तव्यम्। तथा चोक्तम्—

तृष्णानदीं त्रिपथगां प्रमादावर्तदुस्तराम्।
प्रज्ञानावं समाश्रित्य पारं गच्छन्त्यनामयम्॥ इति।

महेच्छतैव जनहृदयव्रणभूता।[१] अल्पेक्षता च सुखम्।[२] अत एवोक्तम्—

दुःखं वह्निच्छता नृणां लक्षणं सुखदुःखयोः।
हेया सर्वप्रयत्नेन इदमुक्तं परीक्षकैः।
एष पन्थाः शिवः श्रेष्ठो येन तृष्णा वशीकृता॥ इति।

तृष्णा हि दृढभावनया त्यक्तविचारः विषयग्रहणे प्रवृत्तो भवति। तत्राऽपि वासनायाः द्वैविध्यम्-एका मलिनवासना अपरा च शुद्धवासना। मलिनवासनया जन्म जायते, शुद्धवासनया च विमुक्तिः। मलिनवासनया अज्ञानातिशयो भवति। शुद्धवासनया च धर्माचरणे प्रवृत्तिर्भवति, तदा भावनाभ्रान्तिपरम्परा सदा विनष्टा भवति। सद्धर्माचार एव मलिनवासना निवर्तको भवति[३]। अथ च

---

१. धर्मसमु० ८/९७, ९८।

२. धर्मसमु० ८/१०५।

३. दृढभावनया त्यक्तपूर्वापरविचारणम्। यदा दानं पदार्थस्य वासना सा प्रकीर्त्तिता॥

स्वस्वदेशाचारकुलधर्मभाषाभेदतद्गताऽपशब्दम् शब्दादिषु प्राणिनामभिनिवेशः सामान्यत उदाहरणम्। बृहदारण्यकोपनिषदि —'यथाकामो भवति तत्कर्तुर्भवति, यत् कर्तुर्भवति तत् कर्म कुरुते, यत् कर्म कुरुते तदभिसम्पद्यते' इति। रागाग्निः स्वर्गेऽपि दाहमुत्पादयति, द्वेषाग्निः पशु-पक्ष्यादियोनावपि दहति।

तृष्णाग्निः सर्वत्रैव अनुस्यूतः वर्तते। मानेर्ष्या धूमविशिखं सङ्कल्पेऽपि दोषम् उत्पादयति, लोभाग्निः सर्वान् लोकान् दहति। धनं प्राप्य यथा यथा लोभानलः प्रवर्धते तथैव मनः दुःखमनुभवति। अधर्मरतः कदापि तृष्णया विमुक्तो न भवति। दिवानिशं धनलोभेन दह्यते। विषयाग्निः सर्वं भस्मसात् करोति। भवाभिलाषिणी तृष्णा भवजेन दुःखेन जनं सन्तापयति। जालबद्धाः मत्स्याः यथा जनैः आकृष्टाः कुर्वन्ति, तथैव तृष्णाबद्धाः जनाः मृत्युना आकृष्टा भवन्ति। विद्वान् भवतु बालिशो वा, तृष्णाविष्टः सदैव विषयाग्निना दह्यते। स नूनम् एव कामवशंगतः क्षणिकसुखं प्राप्यापि तृष्णाग्निना पुनः पुनः अपरितुष्टः तृष्णावशः दुःखमश्नुते। सतृष्णस्य कुतः संतुष्टिः ? वितृष्णा एव विशोका भवन्ति, ये हि तृष्णावशंगताः न सन्ति, ते सुखम्-अनुभवन्ति च परमां गतिमाप्नुवन्ति। लोभाभिभूतः जनः तुषाग्निरिव दह्यते। अतः त्रिपथगां तृष्णां नदीं परित्यज्यैव विरक्तः सन् सद्धर्माचाररतः निर्वाणमधिगच्छति, कदापि तस्य हानिर्न जायते।

जनः वासनाक्षयवशादेव फलदायितत्त्वज्ञानं प्राप्नोति। तत्त्वज्ञानं मनोनाशः वासनाक्षयश्चेत्ये मिथः कारणतां प्राप्य दुःसाध्यं निर्वाणसुखं प्रापयन्ति। प्रदीपज्वाला सन्तानवत् वृत्तिसन्तानरूपेण परिणीयमानम् अन्तःकरणं पौनः पुन्येन अभिवर्धते। अतः तस्या निरोधः आवश्यकः। तस्याश्च क्षयः सद्धर्माचरणेन जायते। यावत् न तृष्णाक्षयः, तावत् वासनानाशो न भवति। तस्मात् तृष्णा दूरतः परिहर्त्तव्या। कामः तृष्णाजन्यफलस्य प्राप्तौ हविषा कृष्णवर्त्मेव भूयः अभिवर्धते। तस्मात् विषयानामासक्तिर्नैव करणीया। यद्यपि सर्वथा निर्विषयं मनः न स्थातुं शक्नोति तथापि सद्धर्माचरणेन दैवसम्पदरूपे विषये सद्धर्माचरणकृतिः सम्पादनीया। श्रीमद्भगवद्गीतायामपि षोडशेऽध्याये सद्धर्माचरणार्थं दुर्वासनायाः परित्यागाय इमे उपायाः प्रदर्शिताः। यथोक्तं भगवता श्रीकृष्णेन—

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्॥

---

भावितं तीव्रसंवेगादात्मना यत्तदेव सः। भवत्याशु महाबाहो ! विगतेतरसंस्मृतिः॥
तादृग्रूपो हि पुरुषो वासनाविवशीकृतः। संपश्येति यदेवैतत् सद्वस्त्विति विमुह्यति॥
वासनावेगवैवश्यात्स्वरूपं प्रजहाति तत्। भ्रान्तं पश्यति दुर्दृष्टिः सर्वं मोहवशादिव॥
—जीवन्मुक्तिविवेकस्य वासनाक्षयप्रकरणतः।

अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम् ।।
तेजः क्षमा धृतिः शौचमद्रोहोनातिमानिता ।
भवन्ति सम्पदं दैवीमभिजातस्य भारत ।।
दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम् ।। इति ।

रत्नावल्याम् आचार्यनागार्जुनेनोक्तम् धर्मज्ञानात् अहङ्कारः अनुवर्तते ततः शुभाशुभं कर्म ततो शुभाशुभं जन्म भवति । अतः परं दानशीलक्षमाधर्मे आदरवान् मन् धर्मनिष्ठानि कार्याणि कुर्यात्, तेन च कीर्ति ऐहिकसुखं परलोकसुखं च जायते । यतः ज्ञानेनैव तृष्णावृक्षस्य छेदनं भवति, तर्हि तृष्णाविमुक्तिपूर्वकं धर्मरतिः करणीयाः ।[1] यथोक्तं भिक्षुणा अवलोकितसिंहेन—

ज्ञानखड्गेन तीक्ष्णेन तृष्णावृक्षं निकृन्तति ।
निकृत्तवृक्षः स नरः सुखं प्राप्नोत्यनुत्तमम् ।।
दोषेण बहुला ह्येषा नदी प्रस्रवणाकुला ।
दोषानेतानहित्वा न भवान्मुञ्चति पण्डितः ।। इति ।

## ( ९ ) स्त्रीजुगुप्सावर्गो नवमः

स्त्रीणामनर्थमूलत्वं साधितं ग्रन्थकारेण । अस्मिन् वर्गे तेनोक्तम्--

स्त्रियो मूलं हि पापस्य धननाशस्य सर्वथा ।
स्वहिते ये न निरताः कुतस्तेषां भवेत् सुखम् ? ।। इति ।

स्त्रियो हि अनर्थकर्मरतयः शाठ्येर्ष्याबहुलाश्चैव प्रायो भवन्ति । ता हि नित्यं सरागकुशला आपातमधुरा विपाके च वज्रचित्ता विद्युत्स्वभावहृदयाश्च दृश्यन्ते । तासूपस्थितासु कुतो निर्वाणप्राप्तिः ?

महर्षिभिः स्त्रियः सर्वलोकविनाशस्य सर्वधर्मक्षयस्य नरकस्य च हेतवः प्रोक्ताः । इमाः मुखतो मधुरामर्षाः, हृदयेन विषोपमा भवन्ति । आसां सौहार्दं चञ्चलम्, अनवस्थितश्चास्ति । नासां कश्चित् प्रियोऽस्ति । इमाः वञ्चनाहेतुकुशलाः

---

१. सुखे संयोगतृष्णैवं नैःस्वाभाव्यात्प्रहीयते ।
दुःखे वियोगतृष्णा च पश्यतां मुक्तिरित्यतः ।।
—रत्ना० ४।६१ ।

नित्यं स्वार्थपरायणाश्च भवन्ति । निर्बलं निर्धनं च पुरुषमिमाः शीघ्रं त्यजन्ति । यथा हि भ्रमराङ्गना नीरसं पुष्पं त्यजन्ति । तथैव स्त्रियः वित्तेन रहितं पुरुषम् ।[१] स्त्रीसमुद्भवो रागः सर्वेषु रागेषु अन्यतमः । तेन रागेण दग्धमनसो नराः प्रत्यक्षाण्यपि पापानि अकुशलानि च कर्माणि न पश्यन्ति ।

एषा हि प्रकृतिद्वयी-योषितां सहचारिणी । सवित्तं पुरुषं भूयो भूयोऽभियन्ति व्यसने च तं त्यजन्ति । पूर्वमेताः पुरुषं मृगवन्मोहयन्ति, व्यसने सङ्कटे च समुपस्थिते न तस्योपकारं स्मरन्ति, न च तं सत्कुर्वन्ति । न च तस्य सन्ततयोऽपि तासां कृते प्रियाः भवन्ति । इन्द्रजालमय्यो नार्यः सर्वानिव देवासुरनरान् वञ्चयन्ति । फलतः एते इतस्ततः भवसागरे भ्रमन्ति ।[२]

स्त्रीमयं बन्धनम् अप्रमाणमनभिज्ञेयं च भवति । अनेनाऽऽपातरम्येण पाशेन बद्धाः पुरुषा भवार्णवान्न मुच्यन्ते । भूषणानां स्वनैः वञ्चनाकुशलाः स्त्रियः भ्रान्तवचनैर्विभ्रान्तं पुरुषं क्षिप्रं हरन्ति । अर्थादानेषु कुशलास्ताः एकं नरं वञ्चयित्वा अन्यं नरं प्रयान्ति । इमाम् उपायशतैरपि न शक्याः रक्षितुं नरैः । नार्योऽनर्थव्याधिमृत्यूनां दुष्कृतानां कर्मणां च परं हेतुभूताः सन्ति । यथा यथा नरस्तासामनुकूलो भवति तथा तथा तास्तं मोहयन्ति । आसां चित्तं पुष्पच्छन्नसर्पवत् भस्मच्छन्नवह्निवद् वा रूपच्छन्नं भवति । विषवृक्षसमा नार्यः परिवर्ज्याः समन्ततः । यः स्त्रीविवर्जितो भवति धीमान्, सोऽस्मिल्लोके महीयते । यथा नाग्निः शीतस्य कारणम्, प्रतापीसूर्यस्तमसो हेतुः भवति । अतः नारीणां चित्तमपि न सौहृद्यम् । यथा सरितः कदापि ऊर्ध्वगा न दृष्टाः । एवमेव अश्मनो गतिरपि न दृष्टा, तथैव स्त्रीणां सौहृदं न दृष्टम् ।

इयं हि मुख्यतः सर्वलोकविनाशाय भवति । अस्याः कोऽपि प्रियो नास्ति । यथा सततमानतत्पराः लोकाभ्युदयविनाशाय न तथा अन्यद् वस्तु । स्त्रीबन्धनं नरकपाताय । स्त्रीसमुद्भवः दाहः सदा कार्यक्षयकारी एव । चलचेतसां विश्वासशीलानां पुरुषाणां विनाशः स्त्रीणां कृते जायते । स्त्रियः रागमोहितं पुरुषं मृगवत्

---

१. भवन्ति सम्पदो यत्र रक्ष्यन्ते तत्र योषितः ।
व्यसनेषु विरक्तास्तु त्यजन्ति पुरुषं ध्रुवम् ॥
—धर्मसमु० ९।१७ ।

२. देवासुनरान् यक्षान् पिशाचोरगराक्षसान् ।
इन्द्रजालमया नार्यो वञ्चयन्ति विशेषतः ॥
एतदग्रञ्च पाशानां यदिदं स्त्रीमयं दृढम् ।
अनेन बद्धाः पुरुषाः भ्रमन्ति भवचारके ॥
—धर्मसमु० ९।३७-३८ ।

मोहयन्ति, प्राप्ते व्यसने च परित्यजन्ति । अत एव घृतमिश्रं मधुः यथा जीवन-क्षयाय, तथैव स्त्रीपाशबद्धः । इयं न कदापि मुच्यते । स्त्रियः नानाविधेषु मर्त्येषु षट्पदाङ्गना इव संचरन्ति । पुरुषः सर्वदा आसक्तः अनर्थव्याधिसंयुक्तः सद्धर्मविहीनः दुष्कर्मतत्परः मोक्षकथामपि न शृणोति । स्त्रीणां चञ्चलता तथा स्वाभाविकी यथा प्रभाकरस्य प्रभा । अतो एषां कदापि विमुक्तिर्न जायते । दीपशिखा इव तस्याः सौहार्दं चञ्चलमनित्यञ्च । इयं पुष्पच्छन्नः सर्प इव भस्मच्छन्नः अनल इव रूपच्छन्नः दुरात्मा इव स्त्रीस्वभावः इति ततः कदापि विनाशः सम्भाव्यते । अतः विषवृक्षसमा नार्यः सद्धर्मतत्परैः पुरुषैः सर्वथा त्याज्या एव । दानशीलादि-तत्पराणां जनानां कृते मदमोहरागद्वेषेर्ष्याः शरीरभूता इमाः नार्यः सर्वथा परित्याज्या एव । सर्वेष्वेव धर्मेषु स्त्रियं प्रति अतिशयासक्तिः दोषावहा सुधीभिः उक्ता । परन्तु गार्हस्थजीवनं यदि कोऽपि निरासक्तरूपेण अन्याश्रमवासिनां कृते उपकारदृष्टया पञ्चविधयज्ञसम्पादनदृष्टया यदि कोऽपि स्वीकरोति तदा अनर्थाय न जायते । अपि तु तेन जीवनस्य सार्थक्यमेव । अन्यथा सन्तानोच्छेदा लोक-परस्परैव सर्वथा उच्छिन्ना स्यात् । परन्तु बौद्धसिद्धान्ते गार्हस्थ्यजीवनं प्रति न तथा वर्तते आग्रहः यथा भिक्षुजीवने ।

अतो य आत्मनो भूतिमिच्छति स सदैव नारीणां वर्जनं कुर्यात् । इत्ययेव बहुप्रकारेण स्त्रीं जुगुप्सयित्वा उपसंहरति ग्रन्थकारः—

पापसेवी सुमृष्टाशी नरो भद्रं न पश्यति ।
उद्युक्तो वीर्यवान् धीरो धार्मिकः स्त्रीं विवर्जयेत् ।
दक्षा हेतुफलश्रद्धो नरः कल्याणवान् भवेत् ।। इति ।

## (१०) दशमः मद्यजुगुप्सावर्गः

मद्यपानं न सेवेत मद्यं हि विषमुत्तमम् ।
नश्यन्ति कुशला धर्मा मद्यपाननिषेवणात् ।।

इति सिद्धान्तं विस्तारयितुमारभते मद्यजुगुप्सावर्गं ग्रन्थकारः । यो नित्यं मद्यं सेवते, तस्य बुद्धिरस्थिरा भवति । तस्य बल-वीर्यविनश्येते । तस्मान्मद्यं विवर्जयेत् । मद्यपाननिषेवणादनिष्टाः पापकाः धर्मा उत्पद्यन्ते । मद्यं धनक्षयकरम्, पापोद्पादकं कौसीद्यकरं चोक्तम् । रागस्य, मोहस्य क्रोधस्य चोद्दीपकम् । अनर्थस्य मूलम्, सर्वेन्द्रियविनाशे च हेतुभूतम् इति तत् सर्वदोषास्पदम् । मद्येन प्रेतलोके नरके वा पतनमवश्यम्भावि । शास्त्रचक्षुषोऽपि पार्थिवा मद्येन लघुतां यान्ति, विप्राश्च ज्ञानाज्ञानविवेकशून्याः भवन्ति । मद्यं हि बुद्धिसम्मोहजनकं लोकद्वयविनाशकं

नरकसाधनं च अस्ति। मद्यं मनीषिणामपि पाशभूतम्। स्त्रियो बालाश्चापि मद्यपायिनमुपसहन्ति। अतो मद्यं मरणादपि निकृष्टतरम्। मद्यपानं विदुषोऽपि मलिनीकरणाय भवति। वस्तुतो मद्यं बुद्धिं नाशयति, तेन च सुखमपि नश्यति। मद्यनिषेविणो जनाः पशुभिः समाना एव। विषोपमं मद्यमिति येऽवगच्छन्ति तेषामेव श्रेयः। मद्यनिषेवणात् पुरुषस्य धर्मविचारणाशक्तिर्विनश्यति। अतः स एकस्मिन् काले नष्टधर्मा भवति। स ईर्यापथं न जानाति, न कालं नापि देशनां स्मरति। स सद्धर्मतो विरुद्धं तुच्छं किमपि भाषते।[१]

सत्यमेतत् यत् मद्यं हि उत्तमं विषमेव। मद्यसेवनेन कुशलाः धर्माः नश्यन्ति। अर्थात् सद्धर्मे न भवति प्रवृत्तिः यतः बुद्धिः कार्याकार्यविवेकशून्या असंस्थिता जायते इति मद्यं नाशस्य कारणमेव। मद्यपानात् कदाचारे पापकर्मणि प्रवृत्तिर्जायते। मद्यं हि धनक्षयसाधनं रागस्य क्रोधस्य च विवर्धकम्, मोहस्य च उद्दीपकं भवति। अर्थात् सर्वेन्द्रियविनाशहेतुमनर्थसाधनं मद्यम् इत्यत्र नास्ति काचिद् विमतिः। मद्यपानात् पुरुषाः पशुसमाः जायन्ते। यदि सौख्यं सुखदं जीवनं इच्छति तदा मद्यं परित्यजेत्। मद्य हि नरकस्य द्वारम्। व्याध्यादिमूलं धर्मरत्नक्षयकर ब्रह्मचर्यविघातकञ्च जनः मद्येन ज्ञानकर्मणि न रमते। कदाचारप्रभृति कर्म मद्यमेव उत्पादयति। मद्यव्यसनं सम्पत्तिक्षयकरं बुद्धिभ्रमजनकञ्च विद्यते। तस्मात् मद्यस्य दर्शनं स्पर्शञ्च दूरतः परिवर्जयेत्।

मद्यपानेन मनुष्यः लघुतां प्राप्नोति। आचार्यनागार्जुनेनापि मद्यसेवनं सद्धर्माचारविरुद्धं स्वीकृतम्, तेन च अकार्ये प्रवृत्तिः कार्यहानिः धनक्षयश्च जायते।[२] मद्यपाननिषेधः भारतीयधार्मिकपरम्परायाः मूलाधारः विद्यते। भारतीयधर्मदृष्टया मद्यपानप्रमत्तः पुरुषः कार्याकार्यविवेकशून्यः भवतीति। न कैरपि आचार्यैः मद्यपान समर्थितम्। एवं सर्वेष्वव धर्मेषु मद्यपानस्य निषेध एव वर्तते। सर्वत्रैव सांस्कृतिकदृष्टया, अर्थादिव्ययदृष्टया गार्हस्थ्यजीनवपरीक्षादृष्ट्या च मद्यपाननिषेधनियमः परिचाल्यते बहूनि एतादृशानि चित्राणि यत्र यत्र निर्दिष्टानि सन्ति। येन जीवननियमव्यवस्था परिलक्षिता भवति। अतः मद्यपानं कदापि सद्धर्माचरणदृष्टया न केनापि समर्थितम्। अत एव अत्र उन्मत्ततास्त्रीजुगुप्सावर्गनिरूपणानन्तरं मद्यजुगुप्सावर्गः परिष्कृतः ग्रन्थकारेण।

---

१. ईर्यापथं न जानाति न कालं नापि देशनाम्।
सद्धर्मतो विरुद्धश्च तुच्छं किमपि भाषते॥
—धर्मसमु० १०।४५।

२. मद्यात्परिभवो लोके कार्यहानिर्धनक्षयः।
अकार्यकरणं मोहात् मद्यं त्यज ततः सदा॥
—रत्ना० द्वि० परि० ४६।

## (११) एकादशः चित्तवर्गः

धर्मसमुच्चये चित्तं विवृणोति ग्रन्थकारः—

> अगाधं विषयं तीव्रं सर्वसत्त्वगतं महत् ।
> चित्तं सर्वस्य जगतो राजवत् सम्प्रवर्तते ।। इति ।

चित्तसंयमिनस्तज्ज्ञाः परमां गतिं प्राप्नुवन्ति । एतच्चित्तं चञ्चलं सत्समाध्यवस्थातो व्युत्थापयति दुर्गतये । आद्यन्तममलं तच्च निर्वाणाय । मनसः सुप्रसाद एव कल्याणाय जायते चित्तवशगो जनः चित्तमनुधावति । ततः स निर्वाणाद् दूरमेव तिष्ठति । नरकं चाऽधिगच्छति अतश्चित्तस्य दमनं शमनं वा श्रेयसे एव ।

सर्वमपि सुखं दुःखं वा चित्तपरिणाम एव । चित्तस्य कर्मण्येव संसारः । यतो हि चित्ताधीनः पापमाप्नोति, पापेन च संसारः । अतः केनापि चित्तवशगेन न भवितव्यम्, अपि तु धर्मवशगेन भवितव्यम् । यतो हि धर्मचारी सुखी नित्यम्, पापचारी तु शर्मभाक् । तृष्णया मोहिताः सत्त्वाः चित्तस्य वशमागताः । भित्तिचित्रवत् चित्ते एव शोभनाशोभनकर्माणि विद्यन्ते । अतश्चित्तं दान्तं कुर्यात् यतो हि चित्तस्य दमनं सुखावहम् अस्ति । सर्वं दुःखं चित्तस्य लघुचेष्टितम् । चित्तेन भ्रान्तो दुःखमेवाश्नुते । सङ्कल्पविकल्पकुटिलं मनो नरकायोपकल्पते । शुद्धं च चित्तं शुभे कर्मणि प्रवर्तते । चित्तकल्पितश्च संसारो मायोपम एव ।

विप्रसन्नं चित्तं तोयवत् नभवच्च भवति । तद्धि उत्तमं सुखं नयति ।[1] चञ्चलं मनः संसारे गतिं कारयति । यैः कुटिलगामि चित्तं विनीतम्, ते नरा शुभभागिनो भवन्ति । धृत्या चित्तधारिणः सुखमश्नुवते । परं चित्तवशगो न शुभां गतिमाप्नोति । यथा रूपं, तथैव सर्वविषयाः चित्तचाञ्चल्यहेतवः । अतो दान्तेनैव मनसा तत्त्वदर्शनं कर्तुं शक्यते । नृणां चित्तं योगवाहि वाय्वम्बुसमम् । शरीरे वातादीनां दोषस्तु शरीरनाशावधिः । शरीरे नष्टे तेऽपि नष्टा भवन्ति । परं चित्तदोषो जन्माज्जन्मान्तरं धावति । चित्तशुद्धौ ध्यानमेवोपायः । तथा चात्मायत्तं चित्तमेव सुखाय भवति । अन्यथा बालिशानां चित्तं दुर्गतिं प्रति धावति । व्यसनेषु च नरं पातयति । चित्तं हि अगाधं विषं तीव्रं सर्वसत्वगतं महत् सर्वस्य जगतः राजवत् सम्प्रवर्तते । इदं हि चित्तं यदा कर्म करोति तत् कर्म सद्धर्मपरम्पराप्राप्तं चेत् तर्हि दुर्गतिं परित्यज्य अमलं निर्वाणमधिगच्छति जनः ।

---

१. विप्रसन्नं यथा तोयं विप्रसन्नं यथा नभः ।
विप्रसन्नं तथा चित्तं नीयते सुखमुत्तमम् ।।

—धर्मसमु० ११।५२ ।

चित्तशब्दः मनोऽपरपर्यायः। मनोऽनुसारिण एव धर्माः भवन्ति। श्रेष्ठाः मनोजवाः भवन्ति। सुप्रसन्नेन मनसा यदि कर्म क्रियते, तदा स्वायत्तं चित्तं सर्वान् क्लेशान् तथैव निर्णाशयति, यथा सूर्योदयः तमांसि। चित्तात् प्रबलः अपरः शत्रुः न विद्यते अस्मिन् संसारे। चित्तदग्धाः सत्त्वाः कालदग्धा इव न कार्याय क्षमन्ते। यो हि पुरुषः अजितेन्द्रियः मूढः सन् चित्तं स्वायत्तं न करोति, अपि तु तदधीनः सन् बाल इव आचरति, निर्वाणं तस्य दूरत एव गच्छति।

मनोनाश एव अत्र सम्यक् निरूपितमस्ति। अन्यधर्मेष्वपि वासनाक्षयस्य मनोनाशस्य च क्रमः दरीदृश्यते। वासनाबन्ध एव बन्धः। तत् क्षय एव च मोक्षः। आदौ मानसीवासना एव त्याज्या। सत्यामपि विषयवासनायां शान्तमनः जनं स्नेह-वशी करोति। अत्र लोकवासना, शास्त्रवासना, देहवासना एव मानसवासनाः। दम्भ-दर्पादयः सम्पत्तिविषयाः वासनां शब्देनोच्यते। रूपरसशब्दस्पर्शगन्धाः विषया यदि चित्तेन काम्यमानाः, तदा चित्तं सर्वथा आबद्धमेव तिष्ठति। मानसीवासना न भोगो-न्मुखी, अपि तु भुज्यमाना वासना संस्काररूपेण संतिष्ठते। अत्रेयं चिन्ता यदि वास-नायाः काचित् मूर्तिः स्यात् तदा तत्परित्यागः सङ्घटते। यथा सम्मार्जनी समूहित-धूर्ति तृणवत् हस्तेनोद्धृत्य बहिः प्रक्षिपति न तु एतस्याः परित्यागः सम्भवति। यथा निद्राया अमूर्ततत्त्वेऽपि तत् परित्यागरूपेण उपवास-जागरणे अनुष्ठीयेते, तथैवत्राऽपि जनः सद्धर्माचरणेन चित्तस्य कालुष्यं रागद्वेषादिकं निवर्तयेत्। तेन च मैत्री-करुणा-मुदिता-उपेक्षा च जायन्ते। रागः चित्तं कलुषीकरोति. यदि मैत्रीभावना जागर्ति, तदा सुखिप्राणिषु सर्वेऽप्येते मदीया इति भावः समुदेति। सुखं स्वकीयमेव सम्पद्यते। चित्तं रागशून्यं जायते। निर्वृत्ते च रागे सरः सलिलमिव चित्तं प्रसीदति। यदा स्वेषामिव परेषां सर्वेषां प्रतिकूलं न भूयात् इति दुःखिप्राणिषु करुणा उदेति, तदा वैरदोषनिर्वृत्तौ चित्तं प्रसीदति।

वर्गेस्मिन् आत्मौपम्येन भूतेषु दया वर्णिता, यथा ( करुणाशीला ) पाप-तापवशात् पश्चातापो न भवति। पापिजनेषु चित्तस्य उपेक्षां भावयन् स स्वयमेव पापात् निवर्तते। पुण्यपुरुषे मुदिताभावे तद्वासनया स्वयमेव अप्रमत्तः सन् पुण्येषु प्रवर्तते। सुखिषु मैत्रीं भावयतः न केवलं रागनिवृत्तिः, किन्तु असूयेर्ष्यादयोऽपि निवर्तन्ते। परगुणानामसहनरूपा चित्तदशा न जायते। गुणेषु दोषाविष्करणरूपा असूयाऽपि न जायते, तथा च मैत्रीवशात् परकीयं सुखं स्वकीयमेव सम्पद्यते इति चित्तं प्रसीदति। चित्तस्य शुभकर्मणि रागद्वेषशून्या यदि प्रवृत्तिर्जायते, तदा शुभैः कर्मभिः देवत्वं लभ्यते। मैत्र्यादिभिश्चित्तं ते प्रसादयन्ति। अतः चित्त-

स्नेहशून्यता सर्वथा अपेक्षिता। इत्थं चपलं विषमयं चित्तं सर्वथा दुःखावहम् भवति। अतः समाहितचित्तैः भाव्यम्। समाहितचित्तः निर्जितचित्तः धीरः जनः सुखमवाप्नुते। यथोक्तं भिक्षुणा अवलोकितसिंहेन—

अपायभीरुता तस्य तस्य चित्तं समाहितम्।
समाहितेन चित्तेन सुखात् सुखमवाप्नुते॥
विषमं चपलं तीव्रमविषह्यं महाबलम्।
यैश्चित्तं निर्जितं धीरैस्ते लोके सुखिनो मताः॥ इति।

## (१२) द्वादशः वाग्वर्गः

निर्वाणाभिलाषुकः परुषाम् असत्यां च वाचं सर्वथा विवर्जयेत् इति सिद्धान्तः। तमेव विशदयति अत्र ग्रन्थकारः—

मृषा वाचं न भाषेत सर्वां प्रत्ययकारिकाम्।
यथा बध्यति संसारे सुगतिं नैव पश्यति॥ इति।

मृषा वाचा हि सर्वाऽधर्माणां कान्तारस्रूपा। सर्वपापप्रसूतिका च। अतो धीरो नानृतं वदति, यतोऽनृतवादिता कष्टा। इतोऽन्यथा सत्य सर्वधर्माणां प्रदीपभूतम्, धनानामुत्तमम् साधूनां रत्नवत् प्रियम्, स्वर्गस्य च परं वर्त्म कथितं महर्षिभिः।[१] सत्यहीनास्तु पुरुषाः पशुतुल्याः प्रकीर्तिताः। तथोक्तम्—

प्रदीपः सर्वधर्माणां साधूनां रत्नवत् प्रियम्।
स्वर्गस्य च परं वर्त्म सत्यमुक्तं गतज्वरैः॥
सत्यं न हि दिवं याति मोक्षस्याऽसत्यवादिनः।
सत्यहीना हि पुरुषाः पशुतुल्याः प्रकीर्तिताः॥ इति।

सत्याश्रयिणः पुरुषा अन्ते परमां गतिं प्राप्नुवन्ति। सत्येन भूषितः धीमान् देववच्छोभते। न माता न पिता न मित्राणि न बान्धवास्तथा त्राणं कुर्वन्ति यथा सत्यवाक्। तस्मात् पुरुषेण सत्यपरेण भवितव्यम्। यतो हि अनृतं तु विषाग्नि-तुल्यमस्ति। सर्वं च लोके प्रवर्तितं भयादिकमनृताश्रितमेव। पारुष्यमनृतं वह्निनां परमो वह्निः, यः सागरमपि निर्दहति। रत्नं त्यक्त्वा पाषाणग्रहणमिव अनृतवाक्।

---

१. पन्थाश्च मोक्षधर्माणां धनानां धनमुत्तमम्।
पापकैश्च परित्राणां सत्यमुक्तं मनीषिभिः॥
—धर्मसमु० १२।१४।

सत्यं कल्याणानां निधानम्, असत्यं च पापानाम्। अत एव तद् दुःखोदयम्, कटुकफलं दुःखेन सह पच्यते। एतत् विपरीतं च सत्यं सर्वतीर्थोत्तमं दीपेषु परमं दीपभूतम् अस्मिन् संसारे सत्यममृतभूतम्, असत्यं च विषोपमम्। अनृतवचः साहाय्येन देशे देशे जन्ममृत्युसहस्रकं दृष्टम्। यथोक्तं भिक्षुणा अवलोकितसिंहेन—

देशे देशे मया दृष्टं जन्ममृत्युसहस्रकम्।
परः सहस्रं जनयेन्नाशयेदनृतं वचः॥

अभिजातस्य निष्कर्षो द्विजातीनां च भूषणम्।
दर्शनं मोक्षमार्गस्य सत्यमित्यभिधीयते॥ इति।

अनादिनिधनेऽस्मिन् लोके तृष्णापारङ्गतानां नराणां नान्यत् त्राणं सत्यं विनेति धर्मविदां वचः। यथा नगा वज्रवध्या जातास्तथैव क्लेशाः सत्यवध्याः सन्ति। असत्यभाषिणः क्रूरस्वभावाः विलेशयाः सर्पा इव न शान्तिमधिगच्छन्ति। न तेषाम् असत्याश्रयिणां सौख्यं विद्यते, आदित्येन यथा तमः।

प्रसङ्गतः अस्मिन्नेव वर्गे हिंसायाः (व्यापादस्य) अपि दोषा वर्णिता ग्रन्थकर्त्रा। तथा हि—

व्यापादयति जनकं व्यापादः परिकीर्तितः।
अव्यापादः परं श्रेयो न व्यापादः कथञ्चन॥

अव्यापादपरा ये तु ते यान्ति पदमच्युतम्।
नियतातथवादी योऽधर्मवादी न धार्मिकः॥ इति।

परस्य दुःखं दृष्ट्वाऽपि सत्त्वः सत्त्वोपपातकः पुमान् नरकगामिको भवतीति व्यापादः सर्वथा हेयः परमपदप्राप्त्यर्थम्।

सत्यवादी सदा इन्द्रियनिग्रही भूत्वा देवताभिः पुरस्कृतो भवति, लोकस्य च प्रियो भवति। अन्ते च देवैः सह देवलोकेषु मोदते। मृषा वाक् च सद्भूतगुणनाशिका वर्तते। यथोद्घोषितं ग्रन्थकर्त्रा—

जिह्वासङ्ग्रथितैः पाशैः नरकस्याऽग्रहेतुकैः।
छेत्ता च धर्महेतूनां मृषावादः प्रवर्तते॥ इति।

अतस्तत्त्वदर्शिभिर्निन्दितमनृतं धीमान् सर्वतः परिवर्जयेत्। यतः अशुद्धवाचः प्रयोक्तारो जनाः नरकं गच्छन्ति। एतावता सत्यवचनस्य प्राधान्यं मिथ्यावादस्य च निन्दा अत्र सूचिता। दूषितं वचः कदापि कल्याणाय न भवति। मिथ्यावाक् सदा नाशाय एव भवति। सत्यहीनाः पुरुषा सदा पापाभिरताः दुःखिता एव तिष्ठन्ति। सत्यहीनाः पुरुषाः दूरादेव मोक्षमार्गात् जीवनं यापयन्ति। अतः मोक्षा-

र्थिभिः सदा सत्यमेव व्यवहर्त्तव्यम् । धर्मस्वरूपनिरूपणप्रसङ्गे स्मृत्यादावपि सत्यस्य महती प्रशंसा दरीदृश्यते। 'अहिंसा सत्यमस्तेयम्' इत्यादिस्मृतिवचनेन अनृतवचनस्य कष्टकरत्वं संसूचितम् सुधीभिः। किमधिकं मातृपित्रादयः न तथा त्राणे समर्थाः भवन्ति, यथा सत्यम् । अतः अनृतं कदापि न वदेत् सदैव सत्यमेव वदेत् । सर्वदुःखस्य बीजं मिथ्यावचनमेव । सत्यञ्च सुखस्य साधनम् । सत्यवादी सर्वस्य प्रियो भवति । सत्यमेव दीपकं बुद्धेन देशितम् । तस्मात् सत्यद्वेषः सदा नाशाय भवति । सत्येन रहितः पुरुषः शाश्वतं स्थानं नानाधिगच्छति, न वा लोकः लोकोत्तरं स्थानम् । मृषैव सकलगुणनाशिका । मृषावादः सर्वस्य शुभस्य छेदकः । किमधिकम् ? सकलसत्त्वोपघातकः मृषावादी एव भवति । अतः सुखार्थिभिः मृषा न वक्तव्यम् ।

मानवसमाजस्य अशेषकल्याणसाधनाय अस्माकं धार्मिकेषु ग्रन्थेषु ये ये धर्माः समुपदिष्टाः सन्ति, तेषु सत्यवादितायाः सर्वोत्कृष्टं स्थानं वर्तते।[1] वेदाः, उपनिषदः, स्मृतयः, दर्शनानि, नीतिशास्त्रं पुराणग्रन्थाश्च एकमुखेन सत्यभाषणस्य महिमानं समुद्घोषयन्ति । अयम् एक एव धर्मो मानवसमाजस्य ऐहिकं पारलौकिकं च सर्वविधं मङ्गलं साधयितुमर्हति सर्वेषामपि धर्माणाम् आचारणेन यत् फलं लब्धुं शक्यते तत् सर्वमपि केवलं सत्यभाषणेनैव प्राप्तुं शक्नोति इत्यत्र नास्ति संशयलेशोऽपि । अत एव शास्त्रकाराः कथयन्ति—

नास्ति सत्यात् परो धर्मो नानृतात् पातकं महत् ।

अन्ते सत्यवचनस्य स्वरूपमुपस्थापयता ग्रन्थकारेण भिक्षुणा अवलोकितसिंहेन निगदितम्—

सत्यं स्वर्गस्य सोपानं निर्वाणद्वारमेव तत् ।
तस्मात् सत्यपरो नित्यं नित्यं धर्मगतिः स्मृतिः ॥

अतो अनृतं न वदेत्—

अशोकमजरं स्थानं प्रयाति पुरुषोत्तमः ।
वर्जयेदनृतं धीमान् निन्दितं तत्त्वदर्शिभिः ॥ इति ।

## (१३) कर्मवर्गस्त्रयोदशः

'कर्मबद्धा हि देहिनः' इति दार्शनिकानां मतम् । तदेव विव्रियते विस्तरशो अत्र भिक्षुणा अवलोकितसिंहेन । इह लोके कृतं यत् किमपि शुभाशुभं कर्म प्राणिनं परलोके गच्छन्तमनुगच्छति । तथा च प्राणी सुकृतैः देवलोकान्, दुष्कृतैश्च नरकान् प्रति गच्छति । अशुभकर्मफलजं कटुकोदयं दुःखं भवति । सर्वमपि कर्महेतुप्रत्यय-

---

१. सहस्समपि चे वाचा अनत्थपदसंहिता ।
एकं अत्थपदं सेय्यो यं सुत्वा उपसम्मति ॥
—धम्म० ८।१ ।

समुत्थं भवति । त्रिविधं कर्म भवति—शुभफलदम्, अशुभफलदम्, जलताडनवन्निरर्थकं च । त्रिविधस्याप्यस्य कर्मणः फलं तत्कर्त्रैव भुज्यते, नान्येन ।

येन सुखोदयं दुःखास्वादं दुश्चरितं कृतम्, तेनैव कर्मवायुना तथा प्रेरितो लोके चरति । मनसा वञ्चिता विप्रमोहिताश्च सत्त्वा दुष्कर्म कृत्वा तमःपरायणा भवन्ति । तमसावृते हि संसारे चरतो बुद्धशासनं दुर्लभम् । अथ च येभ्यो धर्मो न रोचते ते दुःखाद् दुःखतरं यान्ति । तथा च —

अनादिमति संसारे कर्मजालावृता प्रजा ।
जायते म्रियते चैव स्वकर्मफलहेतुना ।। इति ।

प्राणिभिर्यानि कान्यपि कर्माणि संसारे क्रियन्ते, तानि वर्जयित्वा बुद्धैस्तथागतोपदिष्टो मार्ग अनुसरणीयः । यतो हि नाधर्मस्य कर्मणः फलं साधु । अथ च शुभाशुभयोर्विपरीतमपि फलं न भवति । जलोदाहरणवत् हेतुसादृश्यं कर्मसु अवगन्तव्यम् । नाहेतुकं फलं दृष्टम्, विशेषतो नरकनेतॄणां कर्मणाम् । यथा प्रभा दीपाधीना, तथैव फलमपि कर्माधीनम् भवति यतो हि सर्वोऽपि संस्कृतो धर्मोऽन्योन्यफलहेतुकः । मार्गामार्गविमुग्धा ये तेषां बुद्धस्य शासने, तमसः सूर्य इव, गतिर्नास्ति यतो हि सर्वमपि सुखं कर्मायत्तम्, शान्तं मनः सुखायत्तम् । अतः सर्वेऽपि धर्मा मनोऽवबुद्धयाः ।

इदं जगतीतलं कर्मक्षेत्रमस्ति । अत्र यावन्तो जनाः सृष्टाः सन्ति, ते कर्मकरणायैव सृष्टाः विद्यन्ते । अत्र यो मनुष्ययोनौ जन्मगृहीत्वा स्वस्थशरीरः अविकलेन्द्रियश्च भूत्वा निष्क्रियः स्वकर्त्तव्यपराङ्मुखश्च भवति तस्य कृते जीवनस्य अधिकारो नास्ति । अत एव च ईशोपनिषदि अयम् आदेशोऽस्ति—

कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः ।।

अतो बहुजनहिताय बहुजनसुखाय च सर्वेषां कृते कर्मणां परिपालनं नितराम् आवश्यकं वर्तते । सत्कर्म एव मनुष्यमात्रस्य परमो धर्मः । यः खलु आत्मनः कर्म न जानाति न च तस्य परिपालनं करोति तस्य जीवनं न केवलं निरर्थकं प्रत्युत् हानिकारकमपि । कर्त्तव्यपालनेनैव जना आत्मनः समाजस्य च हितसाधनं कर्त्तुं शक्नुवन्ति । सर्वासामपि समुन्नतीनां सिद्धीनाञ्च मूलं सत्कर्म एव भवति । जगतो महान् कर्मयोगी भगवान् श्रीकृष्णो गीतायामुपदिशति--

'स्वे स्वे कर्मण्यभिरतः संसिद्धि लभते नरः'

वाचः मृषातिरिक्तसत्यसंभाषणस्यैव सार्थक्यम् । परन्तु सत्यभाषणमपि कर्मणालङ्कृतं न भवति चेत् तदा भारतीयधर्मदृष्ट्या तस्य वैफल्यमेव । यतः आचारे ज्ञानस्य परिसमाप्तिः । 'ज्ञानं भारः क्रियां विना' इति आचार्याणाम्

उद्घोषः। सुकृतं दुष्कृतञ्च कर्म भवति। तत्र अनुष्ठितं सर्वमपि कर्म देहिभिः उपभुज्यते। यतः देहिनः कर्मबद्धा एव भवन्ति। दुष्कृतेन कर्मणा न केवलं एकस्मिन् भवे तत्फलभोगः, अपि तु आगामिनि सर्वस्मिन् भवे तत्परम्परा प्रचलति। शुभाशुभं सर्वं कर्म गच्छन्तं नरकमनुगच्छति। दुष्कृतैः कर्मभिः अधोगतिः, सुकृतैः शोभनगतिः। कर्मवशादेव एकः दुर्गं तरति, अन्यः तत्रैव अवतिष्ठते। अन्येन कृतं कर्म नान्येन उपभुज्यते।[१] दुश्चरितं तत् कर्त्तुरेव परिपाकाय जायते। तत्र च मन एव बन्धनमोक्षयोः कारणम्। मनसा विप्रमोहिताः जनाः पापकर्मरताः बुद्धशासनेऽपि तमसावृत्ते संसारे दुःखमुपभुञ्जते। कर्मवशादेव प्रजा जायते म्रियते च। तत् वशादेव च दुःखमनुभवन्ति। साधुकर्मकर्त्तुः विपरीतं फलं न जायते। नरके गमनहेतुकं नास्ति, अपि तु कर्मवशादेव तत्प्राप्तिः। कर्मवशगा एव सर्वे प्राणिनः। सुखं कर्मायत्तं मनोबद्धा तर्कैकशरणाः धर्मच्युता भवन्ति। सर्वे संस्कारा जलबुद्बुदसदृशा अनित्या इति शोभनमेव कर्म इह लोके परलोके च सुखसाधनाय जायते। यथोक्तम्—

अनित्याः सर्वसंस्कारा जलबुद्बुदसन्निभाः।
तस्मात् सुचरितं कर्म लोके मर्त्यं परत्र च॥
दृष्टं कर्मफलं लोके दृष्टा एव विचित्रता।
यः प्रमादपरः पुंसास्तस्यात्मा ध्रुवमप्रियः॥
कर्मरज्ज्वातिदृढया दुष्प्रमोक्षसुगाढया।
बद्धा बाला न गच्छन्ति निर्वाणपुरमुत्तमम्॥ इति।

## (१४) संयोजनवर्गश्चतुर्दशः

पालित्रिपिटके सुत्तपिटकानुसारं दशसंयोजनानि परिगणितानि। तानि यथा—कामरागसयोजमम्, रूपरागसंयोजनम्, अरूपरागसंयोजनम्, प्रतिघसंयोजनम्, मानसंयोजनम्, दृष्टिसंयोजनम्, शीलव्रतपरामर्शसंयोजनम्, विचिकित्सासंयोजनम्, औद्धत्यसंयोजनम् अविद्यासंयोजनम् चेति। अभिधम्मपिटकानुसारं च—कामरागसंयोजनम्, भवरागसंयोजनम्, प्रतिघसंयोजनम्, मानसंयोजनम्, दृष्टिसंयोजनम् शीलव्रतपरामर्शसंयोजनम्, विचिकित्सासंयोजनम्, ईर्ष्यासंयोजनम्, मात्सर्यसंयोजनम् अविद्यासंयोजनं चेति दशसंयोजनानि परिगणितानि। इमानि दशापि संयोजनानि ऊर्ध्वभागीयाऽवरभागीयभेदेन द्विधा विभक्तानि। ऊर्ध्वभागीयानि संयोजनानि बहिर्धासंयोजनानि, अवरभागीयानि च आध्यात्मिकानि इत्युच्यन्ते।

---

१. एकः करोति कर्माणि एकश्च फलमश्नुते।
एकस्तरति दुर्गाणि सहायो जायतेऽपरः॥
—धर्मसमु० १३।११।

वस्तुतस्तु संयोजनानीमानि संख्यया दशपरिगणितान्यपि स्वरूपतः सप्तैव भवन्ति। तथा हि—लोभः, द्वेषः, मानम्, दृष्टिः, विचिकित्सा, औद्धत्यम् मोहश्चेति। एषामेव सप्तानामत्र ग्रन्थे प्रायशो वर्णनं कृतम्। तथा चोक्तम्—

सत्यमेव प्रपन्ना ये स्मृत्या हित्वा मनोमलम्।
भावाभिलाषाद् विरता मुक्ता निःसंशयं हि ते॥
नित्यं दुःखसुखैर्बद्धा विप्रलब्धा ह्यनेकशः।
नरा निधनतां यान्ति प्राणिनो मोहवञ्चिताः॥
नाह्रीक्यमनपत्राप्यं कौसीद्यं पापमित्रता।
नैतानि नाकबीजानि तेभ्यो रज्येन्न पण्डितः॥ इति।

क्रोधेर्ष्यास्त्यानमृद्धैर्दोषैर्मनोऽश्रद्धं भवति सद्धर्मे, तेन च न मोक्षो नापि स्वर्गः प्राप्यते।[1] मद्यपानम्, मिथ्यादृष्टिः, लोभः व्यापादश्च पतनस्य कारणानि सन्ति। कुदृष्टेः कुफलम् भवति। अतोऽदर्शनमेव श्रेयः। ये नरा अहेतुं हेतुवत् पश्यन्ति, अनित्यं च नित्यवत् पश्यन्ति, ते मिथ्यावादेन वञ्चिता नरकमेव गच्छन्ति। एते च मिथ्यादर्शनतत्पराः प्रज्ञाभिमानिनो जना अपरानपि मोहयन्ति। मोहान्धकारेणावृता इमे भवार्णवे भूयो भूयो निमज्जन्ति। अतः—

क्लेशनागाद् विमोक्षो यो यस्य ज्ञानपुरःसरः।
प्राप्यते वीतकैः रूपैः पुरुषैस्तत्त्वदर्शिभिः॥ इति।

औद्धत्यपापसंसर्गः, कौसीद्यम्, लोभः, शीलस्य च वर्जनं नरकस्य हेतवः सन्ति। मद्यपानम्, हिंसा, परदाराभिदर्शनम् चाऽपि नरकस्य कारणान्येव। मिथ्यामानम्, अतिमानञ्च अविद्यायाः हेतुः।[2] यथोक्तं भिक्षुणा अवलोकितसिंहेन—

तच्चेष्टितमविद्यायाः कथयन्ति तथागताः।
मिथ्यामानोऽतिमानी च सर्वथा परिवर्ज्यताम्।
परिवर्ज्याः सदा ह्येते दुःखवृक्षस्य हेतवः॥ इति।

---

१. क्रोधेर्ष्यास्त्यानमिद्धं हि त्वश्रद्धं यन्मनस्तथा।
मोहशोकभयग्रस्ता न स्वर्गं प्रभवन्ति ते॥
— धर्मसमु० १४।२०।

२ औद्धत्यपापसंसर्गः कौसीद्यं लुब्धता तथा।
हेतवो नरकस्यैते शीलस्य हि विवर्जनम्॥
मद्यपानं सदा हिंसा परदाराभिदर्शनम्।
लोभः क्रूरा मतिश्चैव हेतवो नरकस्य ते॥
—धर्मसमु० १४।२९-३०।

ज्ञानेन मुक्तिर्भवति, न तु क्लेशपर्वतैः (संयोजनसमूहैः)। ज्ञानाग्निना हि क्लेशकाष्ठान्यशेषतो दह्यन्ते। अत एव सद्धर्मसेनापतिना रागसेना (सर्वाण्यपि संयोजनानि) विगर्हितेति। अत एवोपसंहरति—

तमग्निं ज्ञानयोगेन निर्वाप्य सुखितो भवेत्।
तस्माज्ज्ञानाग्निना नित्यं निर्दहेत् क्लेशपर्वतम्।
क्लेशपर्वतदग्धस्य सुखं पदमवस्थितम्॥ इति।

## (१५) पापवर्गः पञ्चदशः

सर्वाण्यशुभानि कर्माणि अकुशलानि च यानि शास्त्रे परिगणितानि तान्यस्मिन् प्रकरणे 'पाप'संज्ञयाऽभिधीयन्ते। तेषामेव परिहारमुपदिशति ग्रन्थकारः। स ह्याह—क्रियमाणस्य पापस्य कटुकं फलं विज्ञेयम्। तस्मादात्मने सुखेप्सुभिः पापं न सेव्यम्। पापस्याल्पतापि नरकगामिका भवतीति अल्पमपि पापं न करणीयम्। अल्पो वह्निरत्र दृष्टान्तः। पापाचारी पुरुषो न क्वचित् सुखमेधते।[१]

पापस्य वेदना कष्टप्रदा भवति। शस्त्राग्निप्रपातेभ्यो यादृशं दुःखं भवति, ततोऽप्यधिकं पापाचरणेन भवतीति दुःखहान्यै पापानि नाचरणीयानि। अथ च—

यथा निषेवितं मिथ्यापापं पापेषु कल्प्यते।
विनिर्वर्जितपापस्य नित्यं च शुभचेतसः॥
देहिनो शान्तवक्त्रस्य निर्वाणं नातिदूरतः।
तीव्रात् तीव्रतरं यान्ति नराः कुकृतकारिणः॥ इति।

परन्तु—

सुखात् सुखतरं यान्ति नराः सुकृतकारिणः।
न हि तीव्रस्य पापस्य सुखं फलमवाप्यते॥ इति।

तस्मात् पापं विवर्जयेत् धीमान्। यतो हि शुभकर्मा एव सुखमाप्नोति। शुभाशुभकर्मणोः परिणामभेदो दृश्यते। पापस्य परिणामः सुदारुणो दृष्टः, नासौ कल्याणमर्हति। अनन्ता रजनी तेषाम्, येषां पापे स्थितं मनोऽस्ति। परं शुभस्य

१. क्रियमाणस्य पापस्य विज्ञेयं कटुकं फलम्।
यो न जानाति मूढात्मा पश्चात् स परितप्यते॥
फलं च लभते पुरुषः सर्वपापस्य कर्मणः।
तस्मात् पापं न सेवेत यदीच्छेत् सुखमात्मनः॥
—धर्मसमु० १५/१-२।

वासना रम्या भवति । प्रभातं रजनी तेषां येषां धर्मे स्थिता मतिः । ये न पापात्मनो भूतास्ते नित्यं स्वर्गभोगिनो भवन्ति । अल्पभारा यथा नौका प्लवते, न निमज्जति, परन्तु यस्य पापरता बुद्धिर्नित्यं विषयतत्परा भवति, विषयारामचपला रागानुचारिणी च भवति, स नरो दुःखभागी एव भवति । मानवजीवनं प्राप्तवन्तो वयं सर्वे क्षीणपापा अल्पपापा वा, येन पुनरिह लोके समायाताः । यतो हि सुकृतस्य फलं साध्येत्र भवति अनेकगुणमण्डितम् । दुष्कृतस्य फलं तु विसंवादकं दुःखमेव भवति । ते वयं सुखादुःखाभ्यां भवसङ्कटे भ्रमामः । अस्मच्चित्तमिदं सुखदुःखैः दोलादोलैः खरीभूतम् । सुखात् सुखपरिभ्रान्ता भ्रमचारिणो मूढाः पद्मकोटिशतानि दुःखानि भुञ्जन्ति, न खिद्यन्ति न चोद्विजन्ति । पापस्य परिणाममुपस्थापयता श्रीमद्भगवद्गीतायाम् अर्जुनेनोक्तम् —

अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः ॥

तदनन्तरम्

सङ्करो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥

एतावता

दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः ।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥ इति ।

एवं पापवर्जनमावश्यकम् । पापाचारिणः सदैव शुभद्वेषिणो भवन्ति । पापफलं सदा आदिमध्यान्तकटुकं भवति । पापिनः लोकविगर्हिता जायन्ते । पापस्य नास्ति प्रायश्चित्तम् ।

धर्मो हि तत्त्वमार्गोन्नायको भवति । सद्भिः विगर्हितं पापं सदा नरकाय उपकल्पते । शुभकर्मा जितेन्द्रियः इह लोके शुभमेधते, देवलोके च जायते । पापस्य कर्मणः फलं प्रतिकूलमेव भवति, दुर्गतौ च पातयति । पापकारी नित्यं कामवशानुगः भवति । ईर्ष्या-द्वेषरहिता जनाः शुभचारिणः न नरके निमज्जन्ति, पापमित्रं संप्राप्य नश्यन्ति, पङ्के च निमज्जन्ति ।[१] अतः गुणदोषपरिज्ञानी जनः सदा पापं

---

१. तथाल्पपापपुरुषः प्लवते न निमज्जति ।
न पापमित्रसंसर्गात् पुरुषः सुखवान् भवेत् ॥
पापमित्रं समासाद्य सर्वानिलपरो भवेत् ।
कर्मारम्भविधिज्ञो यो नित्यं सूक्ष्मार्थदर्शकः ॥
—धर्मसमु० १५।४०-४१ ।

परित्यजेत् । पापकर्त्ता पुरुषः आत्मनः शत्रुरेव भवति । विषयारामचपला बुद्धिः रागानुचारिणी जायते । तेन च दुःखाग्निना दाहमेति । दुष्कृतस्य फलं दुःखमेव । ये दुःखं विस्मृत्य कामवशानुगाः भवन्ति, ते सदैव तृष्णावासनानुविद्धाः वासनात्मके जगति जायन्ते म्रियन्ते च । एकेनैव पापकर्मणा जनाः चक्रवत् जगति भ्रमन्ति । मोहपीडिताः प्राणिनः सदा दुःखमेवानुभवन्ति । परमक्षेमस्य सर्वदुःखविवर्जितस्य सुखस्य तु आशापि वृथैव । जीविकाहेतावपि विचक्षणः पापं नैव कुर्यात् । यतः अनागतस्य दुःखस्य नास्ति प्रतीकारः । सर्वे एव पापैः नरकद्वारम् अनावृतमेव तिष्ठन्ति । अतः विषकल्पं पापं परित्यज्य सुखकरं धर्मं सदा सेवेत् । सुकृतिनः एव सुखमाप्नुवन्ति । सत्यं दानं शान्तिः अपापमित्रता सर्वभूताभिरतिः स्वर्गस्य साधनम् । अतः स्वर्गसाधनभूतं सुकृतं कर्म सदाऽऽचरणीयम्, दुःखकरं पापञ्च दूरादेव परित्यजनीयम् ।

ज्ञानी न अनागताद् दुःखान्न बिभेति । अपापभीरुता तस्मात् कर्त्तव्या सुखमिच्छता । तथा चोपसंहारश्लोकाः—

हिंसा मिथ्यावचोऽब्रह्मचर्यं भूयः सुखोदयम् ।
आह्रीक्यमनपत्राप्यमौद्धत्यं पापमित्रता ॥
विषाग्निसदृशा ह्येते तेभ्यो रक्षेत् प्रयत्नतः ।
दुःखं हि मारधर्मोऽयं सुखं धर्मसमन्ततः ॥
लक्षणं सुखदुःखानां विदुस्तत्त्वविदो जनाः ।
सत्य दानं तथा क्षान्तिः सदा चापापमित्रता ।
मैत्री सदाभिभूतेषु प्रस्थानं त्रिदिवस्य हि ॥ इति ।

## (१६) नरकवर्गः षोडशः

धर्मसमुच्चयानुसारं शास्त्रेऽष्टौ नरकाः प्रामुख्येणोक्ताः । ते यथा—

सञ्जीवं कामसूत्रं च सम्पातं द्वौ च रौरवौ ।
तमोपरं महाचित्रपतनं च प्रपातनम् ॥
इत्येते नरका अष्टावाख्याता दुरतिक्रमाः ।
रौद्रकर्माभिसङ्कीर्णाः प्रत्येकं क्षोभदाः मताः ॥ इति ।

तेषां स्वरूपाप्याह—

चतुःस्कन्धाश्चतुर्द्वारा विभक्ता भागशो मिताः ।
अयः प्राकारपर्यन्ता अयसा प्रतिदुःखिताः ॥ इति ।

प्रसङ्गतो नरकाणां भयानकत्वं विस्तारयति ग्रन्थकारः—

> तप्तायोमयसं भूमिर्ज्वलन्ती तेजसोद्गता।
> अनेकयोजनशतं दहति स्वार्चिषा भृशम्॥
> कन्दर्पदमना घोरा अर्चिष्मन्तो दुरासदाः।
> रोमहर्षणरूपास्तेऽप्याहुर्दुःखा भयानकाः॥ इति।

एवमसत्कारिणः पापिनो नरकेषु पतिता भृशं तप्यन्ते, नारकैः पुरुषैर्द्रुताश्च भीताः सन्तः सर्वा दिशो धावन्ति। यैः परवित्तानि हृतानि, परयोषितः संसेविताः, ते तस्य कर्मविपाकस्य वशं गत्वा नरकं महारौरवं यान्ति। येषां च सांक्लेशिकं चित्तं तृष्णया परिवञ्चितमस्ति, तेषां मृत्युकाले समुत्पन्ने न दारा न सुता न मित्राणि नरकात् त्रातुं शक्नुवन्ति।[१] मोहावृत्तैः जनैः कृतानि कर्माणि पापजनकानि नरकसाधनानि भवन्ति। घोरे नरके सम्प्राप्ते अश्रुविमोचनेन निस्तारः न सम्भाव्यते। द्वेष्टा कदापि धर्मचारी न भवति। अपि तु रागादिभिः शत्रुभिः दग्धः दुःखमेव प्राप्नोति। एवम् अस्मिन् प्रकरणे विभिन्नानां नरकानां घोरावस्था उपवर्णिता। अत्रैव भयङ्करदुःखानां वर्णनमपि ग्रन्थकारेण कृतम्।

जगतिप्राणिनां समागमः पक्षिणां नीडवासवत् भवति। अत्र स्वस्मै कुटुम्बाय च कृतं पापं नरके पातयति। यतो हि फलं पापानुगं प्रोक्तम्। अतो यदि दुःखं न वाञ्छ्यते तर्हि पापं न सेव्यम्। नास्ति दुःखादतो दुःखं यत् पापमनुसेव्यते। यतो मोहवशानुगा नराः निरय एव गमिष्यन्त्यतः स्वपापानि विवर्जनीयानि, तेन दुःखं न प्राप्यते। धर्माचरणे सावहितैर्भवितव्यं शाश्वतशान्त्यभिलाषुकैः। अन्यथा मृत्युपाशेन बद्धस्य शरणं नैव दृश्यते। अतः कर्मजं सुखं नित्यं समीक्ष्य ध्येयो हेतुः पुनः पुनः।

परेषां सम्पदं दृष्ट्वा 'मम स्यात्' इति यश्चिन्तयेत् तस्या मिथ्यासमुत्थस्य विषस्य नरकरूपमेव फलं प्राप्यते। अधर्मो धर्मरूपेण यदि कथ्यते, तर्हि तस्यापि फलं नरक एव। धर्मं वर्जयित्वा साधूंश्च विनिन्द्य यदुपार्जितम्, तस्यापि विपाको नरकपात एव।

> आर्यापवादका ये च ये च कर्मफलद्विषः।
> ते मृत्वा नरकं यान्ति ये च मिथ्याविनीतकाः॥ इति।

---

१. न दारा सुता नार्थं न मित्राणि कथञ्चन।
मृत्युकाले समुत्पन्ने रक्षन्ति समुपस्थिताः॥
—धर्मसमु० १५।२०।

धर्मवञ्चका अपि नरकं यान्ति ।[१] तस्मात् साधुमतिः पुमान्—

तस्मादवञ्चकार्ये न मतिं कुर्यात् कथञ्चन ।
हीनान्यवञ्चकार्याणि नरके पातयन्ति च ।। इति ।

अधर्मिणः अकल्पितकालपर्यन्तं नरके निवसन्ति । यथोक्तम् श्रीमद्भगवद्-गीतायाम् अर्जुनेन—

उत्पन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरकेऽनियतं वासो भवतीत्यनुशुश्रुम ।। इति ।

एवम् एतदवगम्यते यत् दुष्कर्मवशाद् दुःखप्राप्तिर्भवति इति हेतो । दुष्कर्मणि प्रवृत्तिः कदापि न करणीया, अपि तु अपवर्गसाधनानि कर्माणि एव करणीयानि । अतः मोहवशाद् दुराचारिभिः न भवितव्यम् । अन्ते च सर्वसाधारणहितकरीं शिक्षाम् उपसंहरति --

कर्माणि कुर्यात् कुशलानि नित्यं परार्थबद्धेन मनोरथेन ।
हितः सदैवं नरकस्य रोधी सेव्योऽपवर्गो दशधर्म एषः ।। इति ।

## (१७) प्रेतवर्गः सप्तदशः

प्रेतः + प्रेतयोनिः = प्रेतलोकः इत्यर्थः । यमलोक इति यावत् । इह लोकेऽशुभानि कर्माणि कृत्वा मनुष्यः प्रेतलोकमेव गच्छति, न तु स्वर्गमिति भावः । एतदेव विवृणोति ग्रन्थकारः --

तव यत् कुकृतं दग्धाः प्रेतलोकेष्ववथिताः ।
क्षुत्पिपासामयेनेह वह्निना परिदीपिताः ।। इति ।

मार्गामार्गविहीनः पुरुषो दुःखित एवेह जीवति । स हि क्लेशान्धकारवदनः, निराशः, त्यक्तजीविकः त्यक्तस्नायुजालबद्धश्च सन्निह दुःखी भूत्वैव जीवति। मनुष्य-योनावुत्पद्यापि तेन कस्यान्नाचरितो धर्मः । समदृष्टिपथेन स स्वर्गसोपानमाश्रितो भवितुं शक्नोति । अनेनैव पथा अस्य सर्वे ते सहायाः गताः, येषामर्थे एतेन बहुपापम् आचरितम्, परन्तु अयं यमदत्तैस्तीव्रैबन्धनैर्बद्धोऽत्रैव स्थितोऽस्ति । पापरज्ज्वा चाकृष्यमाणः स्वकृतं भुनक्ति । कुकर्मणैव मुद्गराशिमया जनाः प्रेतभवनं यान्ति । यथोक्तं भिक्षुणा अवलोकितसिंहेन --

---

१. जननीगृहपापीया ये चान्ये धर्मवञ्चकाः ।
तेषामिष्टकरा लोके नरकस्य च गामिनः ।।
—धर्मसमु० १६ । १३१ ।

मुद्गराशिमया दाराः न पुत्राः न च बान्धवाः।
वञ्चितोऽस्मि स्वचित्तेन कर्मणा परिवञ्चिता।।
प्राप्तोऽस्मि प्रेतभवनं मित्रज्ञाति निराकृतः।
न दाराः नापि मित्राणि न पुत्राः नापि बान्धवाः।। इति।

दानं विना कस्यापि सुखस्य तथैव नास्ति आशा, यथा दीपं विना प्रकाशस्य। सुकर्मिण एव संसारे सुखम् अनुभवन्ति। विना सुकृतं प्रेतः क्षुत्पिपासामयेन वह्निना दह्यते। क्षुत्पिपासात्मकात् वह्नेः सर्वथैव प्रेताः दुःखानि अनुभवन्ति। अशुभस्य अशुभफलप्राप्तिः अनिवार्यैव। स्वर्गसोपानप्राप्तिस्तु कदापि न संभाव्यते। किमन्यत्र घोरयमलोकस्य प्राप्तिस्तु भविष्यति एव। परन्तु इहापि दुःखमाप्नोति। स्वकृतस्य कर्मणः स्वयमेव भोगः न तु अन्येन। क्षुत्पिपासाग्नेः शान्तिः लवमात्रमपि नैव जायते। दुःखाद् घोरतरं दुःखं प्राप्य नरः सदा शुष्यति। महातीक्ष्णैः वज्रदंष्ट्रैः काकोलूकैः परिभक्षितः चरमं दुःखमाप्नोति। तस्मात् सुकृतं कर्म सदैव आचरणीयं येन अस्माकं सुखलाभः स्यात्। पापकर्मजन्यफलप्राप्तिः नेह लोके न वा परत्र जायते इति सुकृतकर्मणः आचरणं सदैव करणीयं मोक्षानुगामिभिः सुखैकाभिलाषिभिः।

प्रेतलोकस्यानलो महान् क्षुत्पिपासामयो विद्यते। न क्षणो नापि लवो न मुहूर्तोऽस्ति यदा मृत्युः सौख्यमयः स्यात्। अत्र प्रेतलोके नोत्सदेषु तोयं दृश्यते, तडागाः सरितश्च शुष्काः दरीदृश्यन्ते, दुःखिनो जनान् शैलवनकाननानि शुष्कसलिलानि दृश्यन्ते। सलिलार्थं यत्र तत्र परिधावन्ति। कष्टं व्यसनमाश्रिताः अभिद्रुताः वा गुराजाल क्वचिदपि सौख्यप्रदं शरणं नाधिगच्छन्ति। यत्तैः दुश्चरितं कृतं पूर्वम्, तस्य प्रतिबिम्बमिदमापतितम्। कर्मवागुरया बद्धाः कर्मसूत्रेण परिचितास्ते चिरं प्रेतलोक एव वसन्ति। यतो हि कर्मक्षयादृते न मुक्तिः।[1] अतोऽशुभानि कर्माणि न कुर्यात् कदाचिदपि शुभकर्मणैव प्रेतलोकात् विमुक्तिर्भवति।[2] तथाचोक्तमन्ते ग्रन्थकर्त्रा—

न भूयः पापकं कर्म करिष्यामि कथञ्चन।
उष्णान्युष्णविपाकानि महापीडाकराणि च।
कुकर्माण्यशुभानीह तस्मात्तानि विवर्जयेत्।। इति।

---

१. पलायनं न पश्याम ऋते कर्मक्षयादिति।
यस्य पापान्यनिष्टानि वह्निवत् तानि पश्यति।।
—धर्मसमु० १७।२४।

२. कर्मणो हेतुभूतस्य यत्कृतं फलमागतम्।
यदि मुच्यामहे पापात् प्रेतलोकाद् दुरासदात्।।
—धर्मसमु० १७।३४।

## ( १८ ) तिर्यग्वर्गोऽष्टादशः

योनयः चतस्रः—देवयोनिः, मनुष्ययोनिः, प्रेतयोनिः, तिर्यग्योनिरिति । तेन शुभकर्मकारकाः पुरुषा देवयोनावुत्पद्यन्ते, शुभाशुभमिस्रकर्मकारकाश्च मनुष्ययोनावुत्पद्यन्ते । अशुभकर्मकारकाश्च प्रेतयोनौ तिर्यग्योनौवोत्पद्यन्ते इति शास्त्रकाराणां मतम् । सन्ति कानिचित् कर्माणि येषां तिर्यग्योनिषूत्पादोऽवश्यम्भाविफलम् । ग्रन्थकारमतेन परद्रोहस्य कारणात् तिर्यग्योनिषूत्पादः । तदेव कथयति—

भक्षणं भवदन्योन्यवधबन्धावरोधनम् ।
तिर्यग्योनिं समासाद्य तस्माद् द्रोहं विवर्जयेत् ।। इति ।

अथ च द्रोहवशात् यदि कश्चन कस्यापि बधं करोति परस्परं च उच्छिष्टभोजनं करोति तर्ह्यसौ तत्कर्मवशात् तिर्यग्योनिमासाद्य सर्वथा दुःखितः तिष्ठति । मोहोपहतचित्ताः शीलदानविवर्जितास्तृष्णाविडम्बिता बालास्तिर्यग्योनावुत्पद्यन्ते । तत्रोत्पन्नाः धर्माधर्मतिरस्कृताः कार्याकार्यबहिर्भूताश्च भक्ष्याभक्ष्यं न जानन्ति ।[१] क्रोधेर्ष्याप्रतिग्रस्ता अपि पञ्चेन्द्रियजरामूढाः नराः तृष्णापाशवशानुगा भूत्वा तिर्यग्योनावुत्पद्यन्ते[२] ।

मात्सर्योपहतो दुष्कृतं न कुर्यात् । यथोक्तं ग्रन्थकारेण—

न कुर्याद् दुष्कृतं कर्म मात्सर्योपहतः परम् ।
मात्सर्योपहता यान्ति प्रेतास्तिर्यक्षु जन्तवः ।। इति ।

अन्यथा तद्वशात् तस्य प्रेतयोनौ तिर्यग्योनौ वोत्पादोऽवश्यं भवति । इह लोके आगत्य तेषामेव सफलं जन्म बुद्धिश्च तेषामेवावस्थिता, येषां धर्मे सदा मतिः ।[3] त एव धर्मचारिणः सद्भिः पूज्या भवन्ति । अतः शुद्धसत्त्वैर्भाव्यम् । एवं तिर्यग्वर्गमुपसंहरति ग्रन्थकर्त्ता —

एवं त्रिदोषाकृतकर्मसारं जगद् भ्रमत्येव दुरावगाधम् ।
करोति यस्तस्य च शुद्धसत्त्वोऽवमाननां ज्ञानरथावरूढः ।। इति ।

---

१. गम्यागम्यं न विन्दन्ति भक्ष्याभक्ष्यं तथैव च ।
कार्याकार्यबहिर्भूता धर्माधर्मतिरस्कृताः ।।

२. पञ्चेन्द्रियजरामूढास्तृष्णापाशवशानुगाः ।
क्रोधेर्ष्यामतिसंग्रस्तास्तिर्यग्योन्युपगा नराः ।।

३. तेषां हि सफलं जन्म तेषां बुद्धिरवस्थिता ।
ते च पूज्याः सदा सद्भिर्येषां धर्मे सदा मतिः ।।
— धर्मसमु० १८।३, ८, ४ ।

## (१९) क्षुद्वर्ग एकोनविंशः

जगति प्रायशो त्रैधातुकं क्षुधामयं दुःखं भवति। अर्थात् अशुभकर्मकारिणो जनास्तत्फलभूतात् वित्ताभावात् कारणान्तराद् वा बुभुक्षिताः सन्तो दुःखिता भवन्ति। एषो हि बुभुक्षादोषो द्रुमान् कल्पानल इव लोकान् दहति। अथाप्येवं वक्तव्यम्—नानलस्य तद्वीर्यं यादृशं क्षुधाया इति। यतो हि—

मोहयेद् विविधा चिन्ता लोके मनुजसम्भवा।
ताः सर्वा भोजनार्थाय भवन्ति त्रिभवार्णवे॥ इति।

कर्मभिः कृष्यमाणस्य दीर्घागमस्य क्षुद्दोषस्य दुःखं वर्णयितुमक्षमम्। अविद्येन्धनमग्नस्य, ऊष्मणा दह्यमानस्य च गर्भस्थस्य दुःखमपि वक्तुमक्षमम्। यस्य अप्रियैः सह संसर्गः, तस्य विषया नित्यश उपस्थिता भवन्ति, तेषु प्रणष्टेषु जातं दुःखम् अवर्णनीयमस्ति। पापमित्रजमपि दुःखं वर्णयितुमक्षमम्। एवमेव पुत्रदाराणां व्यसने जातं दुःखमसह्यम्। एतेभ्यः सर्वेभ्योऽपि अधिकं क्षुज्जातं दुःखं कष्टतममस्ति। यथोक्त भिक्षुणा अवलोकितसिंहेन—

अव्युच्छिन्नं बहुविधं यद् दुःखं पापमित्रजम्।
अपायजनकं यस्य न तद् वर्णयितु क्षमम्॥
व्यसनं पुत्रदाराणां यद् दृष्ट्वा हृदि जायते।
नरकाणां महामार्गो न तद् वर्णयितुं क्षमम्॥ इति।

क्षुद्विमोहिता जना दुःखेन सर्वथा अशुभमाचरन्ति। लोकान् क्षुदग्निरेव दहति आत्मनिर्वाणस्य तु कल्पान्तरेऽपि कथा वृथा। क्षुधायां यादृश बलं तादृशम् अनलस्यापि नास्ति। भोजनार्थमेव सर्वः दुष्कर्म करोति। तृष्णैव अत्र कारणम्। क्षुत्पिपासातृष्णाविषदग्धस्य यादृशं दुःखं तादृशं कदापि अनलेन न जायते।[१] अतः दुःखपरित्यागार्थं दुर्गतिनिरोधार्थं च तृष्णाप्रधानस्य क्षुद्रूपस्य विषयस्य परित्यागः समुचितः। मृत्युना ह्रियमाणस्य जन्तुनो लोकात्मनो रसाच्चित्तवृत्तौ जातं दुःखमपि न वर्णयितुं शक्यते। एतानि सर्वाण्यपि दुःखानि अशुभजानि अनिर्वचनानि च सन्ति अशुभं च दानेन शीलेन वा नाशयितुं शक्यते। तदेव कथयति ग्रन्थकारः—

यत् कुर्वन्त्यशुभं बाला यच्च गच्छति दुर्गतिम्।
तदाहरति दानेन कथयन्ति मनीषिणः॥

---

१. क्षुत्पिपासाविदग्धस्य दीप्यमानस्य वह्निना।
यद् दुःखं नष्टमनसो न तद् वर्णयितु क्षमम्॥
—धर्मसमु० १९।१४

अतो सुकृतेषु मनः कार्यम्—

प्रतिदुष्कृतकर्माणि वर्जनीयानि सर्वदा।
सुकृतेषु मनः कार्यं दानशीलविभूषितम् ॥ इति।

## (२०) कौसीद्यवर्गो विंशः

'कुसीदः' ऋणं दत्वा तद्वृद्धया जीवनम् (सूदखोरी इति हिन्दीभाषायाम्)। कुसीदस्य भावः कुशलेषु अनुत्साहश्च कौसीद्यम्। आलस्यमित्यप्यर्थः। कौसीद्येनापि ज्ञाने बाधा भवति। तथाचोक्तं ग्रन्थकारेण—

कौसीद्यमतिमाया च दम्भः पारुष्यमेव च।
निपातभूमयो दृष्टा ज्ञानस्य च विवर्जनम् ॥ इति।

प्रसङ्गोपात्ता निपात ( अनर्थ ) भूमीर्दर्शयति-असाधुभिः संश्लेषः, साधुभिः वियोगः, मिथ्यादृष्टिः, अदेशकालसंरम्भः, वाच्याऽवाच्याज्ञानम्, येन तेन च सम्प्रीतिः, यत्र तत्र च भोजनम् इति। एते दोषा आत्मनो लाघवं प्रदर्शयन्ति। अथ च—

अकर्माफलतत्त्वज्ञो धर्माधर्मबहिष्कृतः।
पुरुषः साधुनिर्मुक्तः प्रपातगमनाशयः ॥
कौसीद्यमतिनिद्रा च रसना गृह्यते तथा।
पुंद्वेषयोनयः प्रोक्ताः पारुष्यवचनं तथा ॥ इति।

यः पापसेवी प्रचण्डश्च कौसीद्यमपि सेवते स क्रूरो धर्मविद्वेषको जन्तुरुत्पथानुपधावति। कौसीद्यं सर्वाधर्माणाम् अजरामरकरं स्मृतम्। एतेन दोषेण नरो दुःखभाग्भवति।

कौसीद्यमतिनिद्रा च सदा नाशकारणे भवतः। अकर्मफलतत्वज्ञः धर्माधर्मबहिष्कृतः सदा नाशमेति। धर्मवर्जितं कामसेवनं लोभातिशयात् कदापि न करणीयम्। एतेषां सर्वेषां कौसीद्यमेव मूलम्। कृतस्य कर्मणः फलमवश्यमेव भुज्यते। पापसेवी प्रचण्डः सदा धर्मविद्वेषकः कौसीद्यमेव सेवते। कौसीद्यं हि प्रमादविषसाधनं भवति। कौसीद्यं सर्वेषामधर्माणां साधनं महतः दुःखस्य कारणम्। तस्मात् शुभाचारी कौसीद्यं परिवर्जयेत्। कौसीद्यविहितो नरो जीवन्नपि न जीवति। आहारतत्परः तत्त्वसाधनरहितः उत्पन्ने मृत्युकाले स्वयमेव दह्यते। तस्मात् शीलसम्पन्नो जनाः कौसीद्ये कदापि मतिं न कुर्यात्। कुकर्मरताः शान्तिशून्याः त्रिदोषानलसंतृप्ताः लोके परं कष्टमाप्नुवन्ति। दशविधानि कौसीद्यानि शास्त्रे वर्णितानि सन्ति, तेन पापप्राप्तिः नरकवासश्च भवतः।

आह्रीक्यम्, औद्धत्यम्, पापभिन्नता चैतानि दुःखस्य हर्म्यभूतानि। पण्डितः एभ्यो दोषेभ्य आत्मानं सततं रक्षेत्। कौसीद्योपहता नरा जीवमाना अपि समाजे ससम्मानं न जीवन्ति। ये कौसीद्यपङ्कमग्नास्ते दुःखसंस्तरे मग्नाः भवन्ति। मानवानां निर्धनत्वे कौशीद्यमेव कारणम्। अतः सुखार्थिना कौसीद्ये न मतिः कार्या। एवंविधायां दुःखपरम्परायां सत्वः कौसीद्ये कुकर्मे च न मतिं कुर्यात्। यथोक्तं ग्रन्थकारेण—

न कौसीद्ये मतिं कुर्यात् कुशीले शीलकामुकः।
संसारे सीदति नित्यं न च दुःखात् प्रमुच्यते॥
एवंविधा दुःखपरम्परा हि सत्त्वः कुकर्मेषु मतिं न कुर्यात्।
लोके त्रिदोषानलसम्प्रदीप्ते कुर्यात् परां शान्तिकृपा मृते न॥ इति।

## (२१) करुणावर्ग एकविंशः

करुणायाः स्वरूपमुपस्थापयता ग्रन्थकारेण स्वयमेव निगदितम्—

गुणानामद्वयं श्रेष्ठं विना चित्तेन भूषणम्।
साधूनां दयितं नित्यं कारुण्यमिति कथ्यते॥ इति।

एवं दया, कृपा, करुणेत्यनर्थान्तरं कोशप्रसिद्धम्। सर्वेषु भूतेषु करुणा मातेव हितकारिणी भवति। पुरुषा यां समाश्रित्योत्तमं सुखं प्राप्नुवन्ति।[१] देवा अपि एतादृशं दयावन्तं सदावृत्तं सर्वभूतहिते रतं जनं प्रणमन्ति। अतः सुखार्थिना करुणाभावना सेवितव्या। एतदेव प्रशंसति ग्रन्थकारः—

मृद्वाशया हि ये मर्त्याः साधुवत् काञ्चनोपमाः।
कारुण्यमक्षयं येषां सदा मनसि वर्तते॥
ते च सत्त्वाः सदोद्युक्ता नित्यं धर्मपरायणाः।
येषां कारुण्यदीपेन हृदयं सम्प्रकाशितम्॥ इति।

लोके हि कारुण्यमविनाशि धनं प्रोक्तं महर्षिभिः।[२] कारुण्यं सर्वदोषनिर्घाति

---

१. कृपा सर्वेषु भूतेषु मातेव हितकारिणी।
यां समाश्रित्य पुरुषाः प्रयान्ति सुखमुत्तमम्॥
—धर्मसमु० २१।१।

२. कारुण्यं मुनिभिः शस्तं कारुण्यं निर्मलं सरः।
कारुण्यं दोषनिर्घाति कारुण्यं धनमव्ययम्॥
—धर्मसमु० २१।१३।

गुणानां च सर्वेषां भूषणम् । धैर्यपरायणो जनः कारुण्यनावमारुह्य त्रिदोषोर्मिमहावेगं भवार्णवं लङ्घते । अतो दयारत्नं सदा सेव्यम् । सुखस्य मूलं कृपैव । हृदि यस्य कृपा नास्ति स दुःखी परिकीर्त्यते ।

सर्वेषुभूतेषु करुणा हितकारिणी भवति, सन्तः सुखमुत्तमं प्राप्नुवन्ति, सदा सर्वभूतहिते रताः च भवन्ति । अथ च शीलवाक्करुणान्विताः जनाः देवलोकमाप्नुवन्ति ।[१] कारुण्याभिभूषितं चित्तं निर्वाणपथमधिगच्छति । तेषां यशः सदैव अभिवर्द्धते ।[२] अहिंसकाः सदा धन्याः । सद्दृष्टिः शुभा । करुणायाः माहात्म्यम् उपस्थापयता ग्रन्थकारेण स्वयमेव निगदितम्—

अहिंसकाः सदा धन्याः सद्दृष्टिः परमा शुभा ।
एतद् ऋजु सदा सत्यं पापानां चापि वर्जनम् ॥
कर्तव्यः पुरुषैस्तस्मात् कृपासंवेगमानसैः ।
दानशीलक्षमामैत्री ज्ञानाभ्यासश्च निर्मलः ॥ इति ।

## (२२) दानवर्गो द्वाविंशः

महायानसाधकानां कृते बोधिचित्तग्रहणानन्तरं पारमितायाः सेवनमावश्यकमभवति । 'पारमिता' शब्दस्य अर्थः पूर्णत्वमस्ति । अस्य पालिरूपं 'पारमी' इति । अतो निर्वाणप्राप्त्यर्थं षट्पारमिताभावनाऽवश्यकरणीया उक्ता सौगतसाधना पद्धतौ । दानपारमिता, शीलपारमिता, क्षान्तिपारमिता, वीर्यपारमिता, ध्यानपारमिता प्रज्ञापारमिता चेति षट्पारमिताः । आसां षण्णां पारमितानां साधनातः पूर्वं करुणाभ्यास आवश्यकः । यतो हि करुणाभ्यास एव महायानसाधनापद्धतेर्मूलम् । करुणाभ्यासं सम्पूर्य प्रथमा दानपारमिता भावयितव्या, अनया करुणाभ्यासः पूर्णो भवति, चित्तं च निर्मलं भवति । एवम् एकैकपारमितापूर्त्यनन्तरं क्रमशोऽन्या अपि पारमिताः भावनीयाः । शुद्धाशुद्धदान स्यस्वरूपमुपस्थापयता ग्रन्थकर्त्रा भिक्षुणा अवलोकितसिंहेनोक्तम्—

गुणद्वादशसंयुक्तं मलैर्द्वादशभिर्विना ।
दानं भवति शुद्धं तद् विपरीतं सकलमषम् ॥ इति ।

---

१. प्रयाति देवलोकं च शीलवान् करुणान्वितः ।
कृपान्वितः स पुरुषो चन्द्रमा इव शोभते ॥
—धर्मसमु० २१।४ ।

२. यस्य वाक्कायचित्ते च कारुण्येन विभूषिते ।
तस्य मित्रमया लोका भवन्ति यशसा वृताः ॥
—धर्मसमु० २१।६ ।

लोके हि धनबलमुत्तमं परिगणितम्। तेन धनेन यदि दानं न क्रियते तर्हि स धनवानपि पुरुषोऽधम एवोक्तः। दानं विना केवलाहारकांक्षिणः पुत्रदारवशानुगाश्च पुरुषाः लोभमात्सर्यमलिना भवचक्रे एव भ्राम्यन्ति। अतो लोभग्रन्थिविमोक्षाय याञ्चावृक्षक्षयाय च दानमालम्बनीयम्, येन तमोनिचयनाशो भवेत्। शीलेन परिभाविते दानाम्भसि नरः स्नात्वा दुःखस्य ज्ञानविस्तीर्णविमलं पारं यातुं समर्थः। आत्मनो हितमिच्छता पुरुषेण स्वस्मै त्रयो दीपा अवश्यं प्रज्वालनीयाः दानं, शीलं ज्ञानञ्चेति। एतत्त्रयं भवक्लेशनाशकं भेषजम्। यथोक्तं ग्रन्थकर्त्रा —

पुरुषेण त्रयो दीपाः प्रज्वाल्या हितमिच्छता।
दानं शीलं तथा ज्ञानमेते दोषविनाशकाः॥ इति।

एवं दानी भवार्णवं तरति। दानं सुखानुगन्ता मार्गः। यतो हि दानेन शीले ज्ञाने च मतिर्भवति। अतः शीलरक्षायै ज्ञानप्राप्त्यै, तृष्णानाशाय च साधकेन दाने रतिः कार्या। तथाचोक्तम्--

शीलवानपि कालज्ञोऽज्ञानाद् वै परिमुच्यते।
दुःखनैर्याणिको मार्गः शस्तोऽयं मुनिपुङ्गवैः॥ इति।

अथ चायं मनुष्यलोक एव कर्मभूमिः। न देवा दानपतयः श्रुताः। फलभूमिस्तु सुरालयः। दानमाहात्म्येनैव सुरालयः प्राप्तुं शक्यते।

एवं दानमेव सदा प्रशस्तं कर्म। दानेनैव दुःखात् विमुक्तिर्जायते। यावत् तृष्णा तिष्ठति, तावत् ज्ञानिनोऽपि दानशीलाः न भवन्ति। लोके सर्वेषु दर्शनेषु, सर्वेषु धर्मेषु च सुखावहं दानमेव प्रशस्तं कर्म विद्यते। दानस्य स्वरूपं प्रतिपादयता श्रीकृष्णेन निगदितम्—

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम्॥
यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम्॥
अदेशकाले यद्दानमपात्रेभ्यश्च दीयते।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम्॥[१] इति।

सुखाय सर्वः जनः सचेष्टो भवति। सुखं विना दानं कदापि न संभाव्यते। दानवशादेव शीलवृद्धिः तृष्णानिवृत्तिश्च जायेते। अदानात् मृतः सन् प्रेतभूमिं सम्प्राप्य क्षुत्पिपासाभ्यां दह्यते। दानरतः सुधार्मिकश्च चक्रवर्ती राजा भवति। दातारो मात्सर्यमलवर्जिताः भवन्ति। अतः देवत्वं पूर्णत्वञ्च प्राप्त्यर्थं दाने स्वाभाविकी-प्रवृत्तिः करणीया। लोकः दानेन प्रियत्वमाप्नोति, तुष्टिमधिगच्छति श्रीमान् च

१. श्रीमद्भगवद्गीता–१७।२०, २१, २२।

भवति जनः । गुरुभ्यः शोभनकर्मभ्यः यद् दीयते तत् सदा सुखाय एव भवति । दान-रहितः पापाचारी भवति । दानं मातृवत् पितृवदेव नित्यं सुखावहं भवति ।[१]

इह लोके सुवर्णकंकणैर्युक्तः पुरुषः यदि ध्यानाध्ययननिर्मुक्तो दानशीलविव-र्जितोऽस्ति, स जीवन्नपि मृतवदेव ।[२] यस्य दानदीपेन ज्ञानप्रदीपेन च हृदयं नाव-भासितं सोऽज्ञानी मनुष्यचर्मणाच्छन्नोऽपि तिर्यग्भूत एवात्र चरति । किं बहुना, दान-हीनो न मर्त्यः, अपि त्वयं प्रेतविग्रहवानेव मन्तव्यः । एवं दानशीलज्ञानयुतो गुणवानेवात्र लोके महीयते । एतदेवालक्ष्योपसंहरति—

एतां भूमिमवस्थाप्य सत्त्वो दानरतो भवेत् ।
दानशीलरता नित्यं मुच्यन्ते भवसङ्कटात् ।। इति ।

## (२३) शीलवर्गस्त्रयोविंशः

धनानामुत्तमं शीलं सूर्यो ज्योतिष्मतामिव ।
विहाय गच्छति धनं शीलं स्थितमिवाग्रतः ।। इति ।

एवं यदि चेतनाभावितं दानं शीलं च परिरक्षितं स्यात् तर्हि तेन परिरक्षितेन शीलेनैव तथा सुखं प्राप्तुं शक्यते यथा माता पित्रादिभिरपि न दातुं पार्यते । शील-वानेव निर्वाणसुखं प्राप्नोति । शीलेन परिरक्षितो जनो मृत्युकाल उपस्थिते न बिभेति, यतो हि शीलं सर्वसौख्यप्रवर्तकमाद्यन्तकल्याणं चास्ति । शीलवस्त्रेण येच्छन्नास्तेच्छन्नाः पुरुषा मताः ।

शीलं स्वर्गस्य सोपानमस्ति । शीलं निर्वाणसुखगामिकमिति धर्मज्ञैः सङ्केति-तम् । अतः शीलवानसंख्यानि सौख्यान्युपभुनक्ति । अतः सर्वसौख्यदायकं शीलं सता पुरुषेणावश्यमेव भावयितव्यम् । एवं दान-शीलयुता दान्ता सर्वभूतहिते रता मैत्रीभावनया युक्ता देवसद्मानि यान्ति । शीलवाजिनमारूढाः पुरुषस्तत्त्वचिन्तका अन्ते देवभवनं त्ववश्यं प्रयान्ति, यतो हि इहलौकिकं पारलौकिकं च सुखं शीलाचाराधीनमेव । अत एवोक्तम्--

स्वगृहं हि यथा मर्त्याः प्रविशन्ति गतव्यथाः ।
तथा शीलसमाचाराः प्रयान्ति त्रिदिवं नराः ।।
एतत् सुजीवितं श्रेष्ठं यच्छीलपरिरक्षणम् ।
मरणानां परं मृत्युः यच्छीलपरिवर्जनम् ।। इति ।

---

१. पञ्चगत्युपपन्नानां सत्त्वानां स्वेन कर्मणा ।
मातृवत् पितृवद् दृष्टं दानं नित्यं सुखावहम् ।।
—धर्मसमु० २२।४७ ।

२ ज्ञानशीलविनिर्मुक्तो दानरत्नविवर्जितः ।
जीवमानोऽपि पुरुषो मृत इत्यभिधीयते ।।
—धर्मसमु० २२।४३ ।

शीलं संसारोत्तरणाय प्लवभूतः। शीलाचरणस्य परिणामो निर्वाणसुखम्। परन्तु यः कश्चित् स्वर्गाकाङ्क्षयैव शीलमाचरति, तर्हि तस्य तृष्णाक्षयो न भवति, तेन निर्वाणं ततो दूरमेव स्यात्। अतो भौतिकसुखं प्रति निरपेक्षेण निर्वाणाकाङ्क्षयैव शीलमाचरणीयम्।[१]

तच्च शीलं त्रिविधम्--हीनम्, मध्यम् विशिष्टं च। तस्य फलमपि त्रिविधम्-हीनम्, मध्यम्, उत्तमं च। अप्रमादोपबृंहितं शीलं नित्यं सुखदमितिशीलस्य धर्मता। शीलप्रभा सूर्यसहस्रप्रभामप्यत्येति। यो नरोत्तमः शीलं संरक्षति, स सुगतेन देशितं फलं प्राप्नोत्येव।[२] ये केवलं कष्टतपः कारिणः, परं शीलाचारं विनैव सम्यग्दर्शनाभिलाषुकाः भवन्ति, तेषां श्रमो व्यर्थ एव।

शीलं धनेषु सर्वोत्तमम्। मानवः शीलेन देवलोकं परमं सुखञ्च प्राप्नोति। दुष्चरितं परित्यजति मोहान्धसंसारात् विनिवृत्तो भवति। शीलरक्षितः मृत्युनाऽपि न विभेति। सदा कार्याकार्यतत्त्वज्ञः शीलवान् भवति। शीलस्य फलं विपुलं सुखमेव। शीलरहितः पुरुषः कदापि प्रसन्नो न भवति। यदि शीलं परित्यजति जनः, तदा नरके गच्छति दुःखञ्चाऽनुभवति। शीलचारी क्षमावान् सुप्रसन्नो भवति। तस्मात् सुप्रसन्नेन मनसा शीलं रक्षणीयम्। शीलं बहुविधं भवति। मानवाः शीलमाश्रित्य सम्यक्दर्शनतत्पराः जायन्ते। दानधर्मशीलाः शान्तिमधिगच्छन्ति। सत्यमेतद् यत् शीलादृते अन्यत् सुखसाधनं नास्ति। तस्मात् देवसुखं यदि अभीष्टं तर्हि शीलं समाचरेत्। शीलेन रक्षितः पुरुषो देवसान्निध्यं गच्छत्येव। अतो दौशील्यं सदा वर्ज्यम्।[३] यतो हि अनुत्तरः शीलवतां सुगन्धः। यथोक्तं भिक्षुणा अवलोकितसिंहेन—

---

१. शीलप्रशस्तसम्बुद्धैर्निर्वाणपुरगामिकम्।
आयुर्याति ध्रुवं धीमान् नित्यं शीलेन बृंहितम्।
—धर्मसमु० २३।१५।

२. शीलोद्भवा या विमला प्रभा भवति देहिनाम्।
न सा सूर्यसहस्रस्य संयुक्तस्य भविष्यति॥
शीलं सप्तविधं रम्यं यो रक्षति नरोत्तमः।
स कामं भुञ्जति फलं सुगतेन च देशितम्॥
—धर्मसमु० २३।७२-७२।

३. तस्माच्छीलं सदा कार्यं दानज्ञानतपोधनैः।
दौःशील्यं च सदा वर्ज्यं विषशस्त्रानलोपमम्॥
—धर्मसमु० २३।८३।

न केतकी चम्पकपुष्पगन्धा तमालके नागचरुश्च गन्धः ।
प्रयान्ति गन्धा हि यथा सुरेण अनुत्तरः शीलवतां सुगन्धः ।। इति ।

यतः शीलेन सुखमवाप्नुते--

एवं सुरक्षितं शीलं नरान् नयति सद्गतिम् ।
न हि शीलादृते कश्चित् पदं सुखमवाप्नुते ।।

तर्हि देवगुणसदृशं शीलं सदैवाऽऽचरेत् इत्युद्घोषितं ग्रन्थकर्त्रा—

तस्मात् देवगुणं मत्वा शीलमेव सदाऽऽचरेत् ।
न शीलसदृशं किञ्चिदन्यत् त्राणमिहास्ति वै ।। इति ।

## (२४) क्षान्तिवर्गश्चतुर्विशः

क्षान्तिः, क्षमा तितिक्षा चेति एकस्यैवार्थस्य विभिन्नाः पर्यायाः । तितिक्षाऽपि निर्वाणगामिनोऽत्यावश्यिकी साधना । तदेव विवृणोति--

क्षमावान् पुरुषः सर्वप्रियो भवति देहिनाम् ।
पूज्यते दैवतैर्नित्यं तस्मात् क्षान्तिः परंतप ! ।।

क्षमा हि परमं तप इति भावः । क्षान्त्या यथा भूषितो भवति पुमान्, तथा नेतरैर्धनैरिति क्षान्तिधनं सर्वधनप्रधानम् । क्षमावन्त एव लोके वस्तुतो धनवन्तः भवन्ति । यथोक्तं भिक्षुणा अवलोकितसिंहेन--

क्षान्तिर्धनं धनं शीलप्रज्ञावर्धनमेव च ।
धनान्यन्यानि शस्तानि न हितस्य कथञ्चन ।। इति ।

क्रोधदोषैर्विवर्जितः क्षमायुक्तो पुरुष इह लोके परत्र च सर्वत्र पूज्यते । सद्भिः अपि यशसा क्षमावानेव पूज्यते ।[1] सर्वेषां धनानां सत्यपि विनाशे क्षान्तेः कदापि विनाशो न भवति । सर्वप्राणिप्रियः क्षमावान् भवति । निखिलदोषशून्यः इहलोके परत्र च यशसामपि बर्धते । क्रोधविषस्य क्षान्ति एव परममौषधम् । सर्वेषां तपसां परमं तपः क्षान्तिरेव । दुःखविघातिका सुखावहा क्षान्ति । इयमेव स्वर्गसोपान-

---

१. क्षमावान् पुरुषः सर्वैः क्रोधदोषैर्विवर्जितः ।
यशसा पूज्यते नित्यमिह लोके परत्र च ।।
पूज्यते सततं सद्भिर्यशसा चैव पूज्यते ।
क्षमावान् पुरुषः सर्वस्तस्मात् क्षान्तिपरो भवेत् ।।
—धर्मसमु० २४।३-५ ।

भूताः ।[१] क्षान्तिरेव शिवात्मिका मातेव हितकारिणी सन्मार्गप्रदायिनी च । एतस्याः क्षमायाः माहात्म्यमेवं वर्णितं ग्रन्थकारेण--

सा गुणौघैः सदा पूर्णा शिवा भवति देहिनाम् ।
सा प्रशस्ते सुखे प्राप्ते क्षान्तिः कार्या प्रयत्नतः ।
सर्वलोकस्य मातेव सन्मार्गामृतदीपिका ।। इति ।

## (२५) वीर्यवर्गः पञ्चविंशः

वीर्यम् = उत्साहः । चतुर्थी वीर्यपारमितां विवरीतुमिच्छति श्री श्रीलःभिक्षु-अवलोकितसिंहः —

देशकालोपपन्नस्य क्रियातिथ्योचितस्य च ।
न्यायेनारभ्यमाणस्य वीर्यस्य सकलं फलम् ।।

अर्थात् न्यायदेशक्रियाहीना अधर्मेण विवर्जिताः वीर्येण परिवर्जिताः पुरुषस्य कार्यनिकराः सीदन्ति ।[२] आरब्धवीर्याश्च निर्वाणरूपं भवजालमोक्षमधिगच्छन्ति । वीर्यवान् पुरुषो यानि कार्याण्यारभते, तानि समृद्धानि पूर्णानि च भवन्ति । लोक-सम्मताः लोकोत्तराश्चार्थाः वीर्येणैव साधयितुं शक्यते । यथोक्तम्—

मन्दवीर्यं चिरोत्साहं सद्धर्मेण विवर्जितम् ।
नरो विशति लोकं च शशाङ्कमिव कल्मषम् ।। इति ।

परन्तु मानवः वीर्येण सद्धर्मे प्रवृत्तो भवति । उत्साहस्य प्राप्तिरपि वीर्येणैव भवति । शक्त्या बोधितत्त्वस्य प्राप्तिः भवति । यथोक्तं ग्रन्थकारेण—

वीर्येणावाप्यते बोधिः स्ववीर्येण तथा मही ।
अर्हत्त्वं वीर्यवद्भिश्च तस्मान्नाग्निसमा गतिः ।। इति ।

जरामरणवर्जितमनुत्तमं स्थानं ज्ञानेन लभमानो नरः वीर्यवशात् शान्तेन्द्रियः जायते ।

---

१. स्वर्गसोपानभूता सा नरकाग्निविनाशिका ।
त्रायते प्रेतलोकात्सा तिर्यग्योनौ तथैव च ।।
—धर्मसमु० २४।१३ ।

२. न्यायदेशक्रियाहीना अधर्मेण विवर्जिताः ।
सीदन्ति कार्यनिकरा वीर्येण परिवर्जिताः ।।
—धर्मसमु० २५।२ ।

स एव नरो यदि वीर्यधनो महोत्साहश्च भूत्वा आर्याष्टाङ्गमार्गेण ज्ञानं परि-पालयति, सोऽन्ते परमां गतिं प्राप्नोति।[1] अतः साधकेन उत्तमस्थानप्राप्त्यर्थं वीर्यारम्भे मतिः कार्या। यथोक्तम्—

तस्मात् देवान् गुणान् मत्वा वीर्यवान् नियतेन्द्रियः।
वीर्यारम्भे मतिं कुर्यान्नास्ति वीर्यसमर्थनम्॥

वीर्यार्थी स्मृतिमान् यश्च नरो ज्ञानपरायणः।
प्रयात्यनुत्तमं स्थानं जरामरणवर्जितम्॥ इति।

## (२६) ध्यानवर्गः षड्विंशः

अथ ध्यानपारमिता पञ्चमी। तां विवृणोति ध्यानम्=एकाग्रता। तथा चोक्तं ग्रन्थकारेण भिक्ष्ववलोकितसिंहेन—

असंसक्तमतेर्नित्यं नित्यं ध्यानविहारिणः।
विशुद्धमनसो नित्यमेकाग्रभिरतस्य च॥

अर्थात् यस्य चित्तमन्यत्र न तदेकाग्रमस्ति दोषास्तस्य कथमपि बाधका न भवितुमर्हन्ति। स दोषभयनिर्मुक्तो भवति। तस्य चित्तमेकाग्रं भूत्वा विवेकम् अनुसरति, विवेकेन च स सर्वतर्कविनिर्मुक्तो भूत्वा स्वस्थो (निर्मलेन्द्रियो) भवति।[2]

ध्यानजं समाधिजं च चित्तम् एकाग्रतासुखं लभते। एकान्तमनाः संक्षिप्तेन्द्रियश्च पुरुषो दोषनिचयविनिर्मुक्तो भवति। बुधो हि ज्ञानाम्भसा तृष्णाग्निनातिवृद्धं दोषजालं हन्ति। हत्वा च स विशुद्धस्तृष्णाविमुक्तो भवति।

ध्यानं निर्वाणपुरगामीश्रेष्ठो मार्गः। अतो योगी मनो निगृह्यैव ध्यानजं सुखं लब्धुं शक्नोति। ध्यानजं सुखं निरुपम् भवति। यथोक्तम्—

तत्र स्थिताः नराः श्रेष्ठाः श्रद्धावन्तो मनीषिणः।
प्रयान्ति परमं स्थानमशोकं हतकिल्विषम्॥

---

१ आर्याष्टाङ्गेन मार्गेण न ज्ञानपरिपालितः।
वीर्यवत्तामहोत्साहो प्रयाति परमां गतिम॥
—धर्मसमु० २५/७।

२. यस्यैकाग्रकरं चित्तं तस्य दोषा न बाधकाः।
स दोषभयनिर्मुक्तः स्वस्थ इत्यभिधीयते॥
एकाग्राभिरतञ्चेतो विवेकमनुधावति।
सर्वतर्कविनिर्मुक्तः स्वस्थ इत्यभिधीयते॥
—धर्मसमु० २६/२, ३।

निर्विषस्कस्य तुष्टस्य निरागस्यापि धीमतः ।
यत् सुखं ध्यानजं भाति कुतस्तस्योपमा परा ? ॥

एवं परमं पदं प्राप्त्यर्थं ध्यानैः मनः कार्यम् इति निगदितं ग्रन्थकर्त्रा भिक्षुणा अवलोकितसिंहेन —

एतत्सारं सुधीराणां योगिनां पारगामिनाम् ।
यदेवेदं मनः श्रुत्वा प्रयान्ति पदमच्युतम् ॥ इति ।

## (२७) प्रज्ञावर्गः सप्तविंशः

प्रज्ञा = ज्ञानम् । सेयं वीर्येण बौद्धराद्धान्ते मातेव हितकारिणी मता । तथा चोक्तं ग्रन्थकारेण —

धर्मानुसारिणी प्रज्ञा वीर्येण परिबृंहिता ।
समाधिबलसंयुक्ता मातेव हितकारिणी ॥ इति ।

सा हि सर्वान् नरान् गतिपञ्चकात् त्रायते । मृत्युकाले च सम्प्राप्ते न माता न पिता न च बान्धवास्तमनुगन्तुं शक्नुवन्ति परं सा तमनुगच्छत्येव । ज्ञानी शील-कन्दरशोभनं प्रज्ञाशिखरमारुह्य सर्वं भवदोषं द्रष्टुं शक्नोति ।[१]

ज्ञानी समाधिना प्रज्ञां लब्ध्वा भवसागरं तरति । ज्ञानं (प्रज्ञा) च दान-शील-तपोध्यानैः श्रेष्ठमुच्यते । महायाने प्रसिद्धेषु अष्टसु मार्गेषु प्रज्ञा ( सम्यग्ज्ञानम् ) मोक्षप्रदोष्टमो मार्गः श्रेष्ठ उक्तः ।[२] सत्यचतुष्टये दुःखनिरोधः दुःखनिरोधगामिनी-प्रतिपच्चेति द्वे सत्ये स्तः । सर्वा जन्मपद्धतिः सर्वो दोषनिग्रहश्च ज्ञानशस्त्रेण छेत्तुं शक्यौ । नास्ति लोके ज्ञानात् परः सहायवान् बन्धुभूतः ।

प्रज्ञा समाधिबलसंयुक्ता सर्वथाहितकारिणी भवति । यत्र पितरौ न गच्छतः, तत्र प्रज्ञा गच्छति । दानशीलतपोध्यानैः प्रज्ञायाः प्राधान्यं वर्धते । प्रज्ञाबलमेव सर्वोत्कृष्टं बलम् । अमृतानां परं ज्ञानं श्रेयसामुत्तमं निधिभूतम् । अतः गतस्पृहैरेव प्रज्ञा सेवनीया । अतो ज्ञानशीलयुता वीतरागा गतस्पृहा वृद्धास्तत्त्वमार्गनिदर्शकाः

---

१. सा हि सन्त्रायते सर्वान् पुरुषान् गतिपञ्चकात् ।
न माता न पिता तत्र गच्छन्तमनुगच्छति ॥
प्रज्ञाशिखरमारुह्य शीलकन्दरशोभनम् ।
भवदोषमिदं सर्वं पश्यति ज्ञानभूषणः ॥
—धर्मसमु० २७।२, ३ ।

२. चक्षुषां च परा दृष्टा प्रज्ञोक्ता या सुनिर्मला ।
मार्गाणां चाष्टमो मार्गः शिवः प्रोक्तस्तथागतैः ॥
—धर्मसमु० २७।६ ।

सदैव सेव्याः । सर्वं खल्विदमुपसंहरति—

ज्ञानशीलयुतावृद्धा वीतरागा गतस्पृहाः ।
सेवितव्याः सदा सन्तस्तत्त्वमार्गनिदर्शकाः ।।

प्रज्ञावज्रेण तीक्ष्णेन महोदयवसेन च ।
महायोगरथारूढः क्लेशादीन् प्रविदारयेत् ।। इति ।

## (२८) निर्वाणवर्गोऽष्टाविंशः

क्लेशक्षयात् परं सौख्यं कथयन्ति मनीषिणः ।
एष निर्वाणगो मार्गः कथितस्तत्त्वदर्शकैः ।।

एवं क्लेशक्षय एव निर्वाणमार्गः, तं मार्गं तथागतैः शाश्वतं पदं प्रोक्तम् यत्र हि दुःखसम्भवं जन्म मृत्युश्च न विद्येते।[१] विषयेष्वप्रमत्तः साधकः निर्वाणं नातिचिरमेव प्राप्नोति । सदैव शुभकार्येषु लीनस्य करुणाभ्यासरतस्य संसारभयाच्च भीतस्य निर्वाणं नातिदूरमस्ति । यो हि नैरात्म्यस्य क्लेशक्षयस्य च विधिं जानाति, यश्च कौसीद्यान्मुक्तः, स एव निर्वाणप्राप्त्यधिकारी ।[२]

क्लेशक्षया निर्वाणमार्गमधिगच्छन्ति । मनीषिजनस्य तत्र गतवतः पुरुषस्य न वा जातिः, न वा मृत्युः, न वा दुःखप्राप्तिः । भवरागविवर्जितस्य मित्रामित्र-विहीनस्य निर्वाणं नातिदूरे तिष्ठति । चतुःसत्यविधिज्ञस्य शान्तस्य निर्वाणं नातिदूरे भवति । स दोषनिर्मुक्त एव मुनिरुच्यते । अतः निर्वाणार्थिभिः शुभकर्मकर्त्तव्यम् । एतदेव शाश्वतं शान्तं स्थानम् । यथोक्तं ग्रन्थकर्त्रा—

चतुःसत्यविधिज्ञस्य त्रिदोषवधसेविनः ।
वश्येन्द्रियस्य शान्यतस्य निर्वाणं नातिदूरतः ।।

एवं सुखदुःखमयैर्बन्धनैर्यो न बद्धो भवति, स दोषभयनिर्मुक्तो भूत्वा निर्वाण-गामी भवत्येव । अन्ते चायमुपसंहारश्लोकौ—

सुखदुःखमयैः पाशैर्यस्य चेतो न हन्यते ।
स दोषभयनिर्मुक्तः पारगो मुनिरुच्यते ।।

पुरुषोऽपायभीरुश्च प्रमादबलवर्जकः ।
शुभकारी शुभान्वेषी निर्वाणमधिगच्छति ।। इति ।

---

१. तत्पदं शाश्वतं जुष्टं कथयन्ति तथागताः ।
यत्र जन्म न मृत्युर्न विद्यते दुःखसम्भवः ।।

२. क्लेशक्षयविधिज्ञस्य नैरात्म्यस्यापि तस्य च ।
कौसीद्याच्चैव मुक्तस्य निर्वाणं नातिदूरतः ।।

—धर्मसमु० २८।२,६ ।

## ( २९ ) मार्गवर्ग एकोनविंशः

सत्यानि चत्वारि शिवानि तानि सुभावितान्येव समीक्ष्य विद्वान् ।
सुचिन्तको जाति जरा भयेभ्यः प्रमुच्यये पारमुपैति शान्तः ॥

इति श्लोकेन आर्यचतुष्टयमार्गोपासक एव भवपारं गच्छतीति निगदति ग्रन्थकारः । यस्तु कामेषु आसक्तो भवभोगबद्धो जगति विहरति स कामबन्धनैर्बद्धो जातिजराभयेभ्यो मुक्तो न भवति । भवे एव सुखद्रष्टा नरस्तृष्णाविषेणेह दग्धो नरके कष्टामवस्थां प्राप्नोति । आत्यन्तिकं सुखं ( निर्वाणं ) हित्वा बालाः कामभोगेष्वेव रमन्ते ।[१] एते न जानन्ति मृत्युर्नातिचिरमेवैतान् ग्रहीष्यतीति । तत्त्वमार्गप्रदर्शकैर्बुद्धैश्चायमात्मा अनित्यः शून्यो दुःखात्मक एव कथितः । एतां धर्मतां तत्त्वविदेव पश्यति । यथोक्तम्--

अनित्यदुःखशून्योऽयमात्मा कारकवर्जितः ।
संसारः कथितो बुद्धैः तत्त्वमार्गप्रदर्शकैः ॥ इति ।

एतदार्यमार्गचतुष्टयम् अन्योऽन्यफलसम्भूतमस्ति । यो हीदमार्यचतुष्टयं न जानाति स विषयेषु संघुष्टो जगत्येव चक्रवद् भ्रमति । अयं सत्यचतुष्टयमार्गो निर्वाणस्य प्रापयिता, अत एव शिवः पन्थाः । अनेनैव मार्गेण प्राचीना मनीषिण उदयं याताः । तस्यैव जीवनं श्रेष्ठं यस्य बुद्धोपदिष्टे मार्गे मनस्तिष्ठति ।[२] बुद्धोपदिष्टं मार्गं विहाय प्रयातुः पुरुषस्य जीवनं पशुसदृशमेव । धर्मचारिण एव जीवनं श्रेष्ठम् । एवमेव सङ्घं कल्याणमित्रं मन्यमानस्यैव जीवनं सुखदम् । अर्थात् त्रिशरणगन्ता सत्यमार्गानुयायी एव प्रशस्तं जीवनं जीवति । अत एवोक्तम्—

निर्वाणगमने यस्य नित्यं बुद्धिरवस्थिता ।
स दोषादेव निर्मुक्तो न देवः क्रीडति स्वयम् ॥

सुखादीनिह सत्यानि यदा दान्तेन विन्दति ।
तदा क्षेमं शिवं स्थानं प्राप्नोति पुरुषोत्तमः ॥ इति ।

---

१. अचिन्तको यस्तु विभूतबुद्धिः कामेषु सक्तो भवभोगबद्धः ।
स बन्धनैः काममयैर्निबद्धो न मुच्यते जातिजराभयेभ्यः ॥

२. स मार्गो देशकः श्रेष्ठो यो मार्गो भाषितः शिवः ।
येन मार्गेण प्राचीना ध्रुवं याता मनीषिणः ॥
—धर्मसमु० २९।२,१५ ।

## (३०) भिक्षुवर्गः त्रिंशः

षण्णां पारमितानां साधकः आर्यसत्यचतुष्टस्थः भावयिता त्रिशरणगन्ता एव भिक्षुर्लोके महीयते इति ग्रन्थकृन्मतम्। यो हि अदत्तादानविरतो जितेन्द्रियश्चास्ति, यस्येन्द्रियाणि शान्तानि स तीर्णभवसङ्क्रमो भिक्षुरित्यभिधीयते। यो हि समलोष्टकाञ्चनो वीतशोकः सततं समाधिनिष्ठः स 'मुक्तः' इति कथ्यते। यस्य च अर्थानर्थौ समौ, लाभालाभौ अपि तथैव सुखदुःखे अपि समे स 'भिक्षुः' इति प्रोच्यते।[1] उदयव्ययतत्त्वज्ञः, सम्यग्दृष्टिः, अलोलुपो भिक्षुः संसारान्मुच्यते।

प्रसङ्गोपात्तास्तथागतोपदिष्टाः भिक्षुधर्माः प्रोच्यन्ते–विषयैस्तृष्णानद्या च न वाह्यते, यश्च स्वकर्मफलतत्त्वज्ञोऽस्ति, बुद्धया च गतस्पृहोऽस्ति, प्रत्युत्पन्नक्रियायोगी च, सततं निर्वाणमतिश्च, शुक्लधर्मसमावृतो भिक्षुः सुखदुःखयोस्तत्त्ववित् उत्तमाध्वयायी भवति। सर्वेन्द्रियविघाती यः सर्वभूतहिते रतः शान्तः, दान्तेन्द्रियः, स्वस्थः, प्रज्ञाधीरः, अरण्यवासी, भूमिवासी, शुभचर्यासु रतः, तत्त्वदृष्टिः साधक एव भिक्षुरुच्यते। दयासम्पन्नो भिक्षुर्निर्वाणमार्गे स्थितो भवति। हेतुप्रत्ययतत्त्वज्ञः सूक्ष्मार्थे कृतनिश्चयः संसारं दीप्तं पश्यन् योगी सतां सम्मतो भवति।

भिक्षुणा के के धर्मा न सेव्याः ? इति कथयति–भिक्षुणा दर्शनारामेषु रतिर्नकार्या, न च नृत्यगीतेषु। नोत्तमवस्त्राभिलाषुको भवेत् सः, अतिकार्यारम्भको न भवेत् भिक्षुः। पापकैः धर्मैरलिप्तः सर्वाशयविवर्जितश्च भिक्षुर्भवेत्। कौसीद्याभिरतो भिक्षुर्न हि कल्याणमर्हति। नाध्यापने रतिर्यस्य, यश्च विहाराभिरतः, स्त्रीमद्यलोलुपमतिश्च स भिक्षुर्नोच्यते। यः केवलं पिण्डभोजी, न च ध्यानरतो भवेत्, यश्च नारिदर्शनतत्कांक्षी न स भिक्षुः, गृहीव सः। यो हि उपायनान्युपादाय राजद्वाराश्रितो भूत्वा गृहिभिः सरब्धो भवति, स न भिक्षुः।

भिक्षोर्गुणानां माहात्म्यं प्रोच्यते यो भिक्षुर्दर्शनतत्त्ववित् दोषान् प्रहायरूपादिस्कन्धतत्त्वज्ञो भूत्वा सततं मोक्षाय यतते, यश्च धर्मावबोधाभिरतो ध्यानारामविहारवान्, मैत्र्यारामः सततं धर्मगोचरे उद्युक्तो भवति, तादृशो भिक्षुर्लोके प्रशस्यते। सर्वभूतरतो दृढः शान्तः सर्वसङ्गविवर्जितः कनकवन्निर्मलः सर्वबन्धननिर्मुक्तश्च सन्तुष्टो भिक्षुः सर्वत्र प्रशस्तो भवति। वनारण्यविहारेषु श्मशाने तृणसंस्तरे च यस्य समानं चित्तम्, हतकिल्विषकान्तारः, जितेन्द्रियः पुनर्भवविधिज्ञः शान्तमना भिक्षुर्लोके प्रशस्यते। यथा चोक्तम्–

---

१. अर्थानर्थसमो यस्य लाभालाभौ तथैव च।
सुखदुःखसमायुक्तः भिक्षुः स कथ्यते॥
—धर्मसमु० ३०।५।

न परार्थं न लोभार्थं यशोऽर्थं कुरुते न तु।
सङ्घकार्ये मतिर्यस्य स मुक्तः सर्वबन्धनैः॥

न स्वर्गार्थं मतिर्यस्य लाभार्थं यशसे न वा।
निर्वाणार्थं क्रिया सर्वा स भिक्षुः स्रोत उच्यते॥

पापेभ्यो नित्यविरतः सत्कृत्येषु रतः सदा।
न पापमित्रसंसर्गी भिक्षुः स्याद् बुद्धशासने॥

अतो धर्मविनयाद् रिक्तो भिक्षुर्दुःखभागभवेदिति। यतो हि धर्मं उच्चतमः पुण्यतमश्च मार्गः।

इदानीं जीवन्मुक्तेन भिक्षुणा संसारे कथं व्यवहरणीयमिति प्रसङ्गोपात्तां भवचारिकां कथयति—

आकाशसमचित्तस्य निर्वाणं नातिदूरतः।
बहुबद्धपदैर्युक्ता विज्ञेया भवचारिका॥

नाशिका ब्रह्मचर्यस्य निर्वाणगतिदुःखिका।
सेव्यते या जनैर्नित्यं प्राकृतैः शीलवर्जितैः॥

अजस्रं परिबर्ज्या सा ध्यायिभिस्तत्त्वदर्शिभिः।
दौर्बल्यमूलमेका सा मनस्कारप्रणाशिका॥

बुद्धशासनं विहाय परधर्मावलम्बनं पापकरमिति तत् निषेधति--

विवर्जितः शुभैर्धर्मैरपापगमनाय सः।
स्वधर्मं यः परित्यज्य परधर्मेषु रज्यते॥

धर्मद्वयपरिभ्रष्टो विनिपाताय कल्पते।
स्वगृहं यः परित्यज्य परवेश्यानि तिष्ठति॥ इति।

अथ च--

न च कामेषु संसक्तो नित्याहारविहारवान्।
काषायसंवृतः क्षौरो नासौ भिक्षुरिहोच्यते॥

निमित्तबोधको यस्तु नक्षत्रगतिचिन्तकः।
राजसेवाप्रमत्तश्च न स भिक्षुरिहोच्यते॥

एवं निगदति ग्रन्थकारो भिक्षुणा राजसेवा कदापि न करणीयेति। यतः राजसेवा कुकषायोक्तिसदृशा भवति।[१] अतः—

---

१. राजसेवा विगर्ह्यास्ति भिक्षोश्चारण्यवासिनः।
कुकषायोक्तिसेवाऽसौ मृत्युतस्करजीविका॥
—धर्मसमु० ३०।१४२।

निर्मलस्य निरामस्य निःस्पृहस्य च देहिनः ।
संसारभयभीतस्य राजसेवा न शोभते ॥ इति ।

एवं सर्वभूतहिते रतस्य मित्राचारसम्पन्नस्य अहिंसकस्य पितृवत् सर्वभूतानां दर्शकस्य प्रशंसा विद्यते । एतादृशी एव तद्विषये सर्वेषां जनानां दृष्टिः भवति। लोष्ठकाञ्चनेव समा दृष्टिः येषां जननां विद्यते, स अनन्तसुखमाप्नोति । एतादृशः पुरुषः सदा सन्तुष्टः विषयतृष्णाशून्यः तत्त्वज्ञः भिक्षुः भवति । प्रत्युपन्नक्रियायोगैः कर्मासक्तिः कदापि न जायते । स आनन्दयुक्तः प्रियदर्शनः प्रज्ञाधीरः प्रत्यहं सुखमाप्नोति वेदनाफलं तस्य न जायते । मोहात्मके जगति तदपि तेषाम्-आवृत्तिर्न भवति । बोधिमार्गानुयायिभिक्षुः प्रशंसनीयः, कदापि बन्धनेन आबद्धो न भवति परं कर्मतत्त्वज्ञो दक्षः च जायते । निर्वाणार्थं सर्वां क्रियां कुर्वन् न कदापि दुःखभाग् मलिनो वा जायते । न कदाचित् नरकाय तस्य किया भवति, न वा अशुभं तस्य वर्तते । निर्वाणे सचेष्टः भूतले सापि सततं ब्रह्मचारी बुद्धः सन्तुष्टः अध्यायिभिक्षुर्भवति । भिक्षुः ध्यानरतः राजसेवाशून्यः अरण्यस्थ विहारादिषु निवसन् कुशलधर्मं कुर्वन् व्यसनशून्यः भिक्षुर्भवति । स कदापि क्लेशेन न दह्यते । नाशौ शुभाशुभानां कर्मणां फलं भुञ्जते । भिक्षुः नित्यं ध्यानपरायणः शान्तचित्तः छिन्नबन्धनः कल्याणपथगामी । तेषां कृते अद्वयवादिभावनायाः परिपालनम् आवश्यकं भवतीति । यथोक्तं भिक्षुणा अवलोकितसिंहेन—

योऽत्यन्तशान्तमनसा नित्यं ध्यानपरायणः ।
आदिमध्यान्तकल्याणो नित्यमद्वयगोचरः ॥ इति ।

## (३१) पुण्यवर्ग एकत्रिंशः

इदानीं पुण्यवर्गमारभमाणो ग्रन्थकारः इदानीं पुण्यं प्रशंसति—

पुण्यं निधानमक्षय्यं पुण्यं रत्नमनुत्तमम् ।
प्रदीपसदृशं पुण्यं मातृवत् पितृवत् सदा ॥ इति ।

पुण्यं हि शुभकर्मणां शुभं फलं कथ्यते । पुण्यं कृत्वैव मानवाः देवा भूत्वा देवलोकेषु सुखेन मोदन्ते । इहापि ते यावज्जीवं सुखेनैव विहरन्ति तत्प्रभाप्रभावेण ।[१]

---

१. पुण्यं कृत्वा गता देवाः पुण्यं नयति सद्गतिम् ।
पुण्यं कृत्वा नरा लोके मोदन्ते त्रिदिवे हि ते ॥
—धर्मसमु० ३१/१ ।

पुण्येन लोकत्रयहितकरो भवति जनः। पुण्यं हि छायावदनुगामिकं पुरुषस्य। ये तु नित्यं कुगतिगन्तारो दुर्दान्ताः सन्ति, कुतस्तेषां सुखं दृष्टम्? यस्य चात्मा प्रियः, यश्च सौख्यमभिवाञ्छति, स देवलोकोपपत्तये पुण्यं करोतु। पुण्यैर्विना न हि भवन्ति समीहितार्थाः। यथा यादृशं शुभं कर्म क्रियते तथा तादृशमेव तस्य पुण्यं लभ्यते। अतः पुण्यलाभाय धर्माचरणमत्यावश्यकम्। तदर्थं च शास्तुः सुभाषितेषु सततं मनो देयम्, तदुपदिष्टश्चमार्गोऽनुसरणीयः। तेनैव पुण्यफलावाप्तिः सुकरा।

अथ प्रसङ्गेन साधारणद्रव्याद् धर्मद्रव्यस्य वैलक्षण्यं बोधयति ग्रन्थकृत्—

न पदं लभते शान्तं यद् धनैरुपलभ्यते।
द्रव्यं साधारणं दृष्टं न धर्मो बुद्धिबन्धनम्॥

द्रव्यं विनश्यति नृणां धर्मद्रव्यं न जातु वै।
आभ्यन्तरसहस्राणि धर्म एकोऽनुगच्छति॥

अथ च धर्मद्रव्यमक्षुण्णमपि भवति। यथोक्तम्—

न धनं पदमप्येकं गच्छन्तमनुगच्छति।
हीयते द्रविणं तेषां राजचौरोदकाग्निभिः।
धर्मवित्तं न तच्छक्यमपहर्तुं कथञ्चन॥ इति।

तस्माद् बुद्धिमता धर्मपरेण भवितव्यम्। यो हि धर्मचारी धर्ममेव सततं निषेवते, स सुखपरम्परामेव प्राप्नोति, न दुःखम्।[१] अधर्मचारी च दुःखपरम्पराधीनः पुनः पुनः नरकेष्वेव गच्छति।[२]

एतस्य पुण्यस्यात्यन्तिकं फलं निर्वाणम्। यस्य शीले रतं मनस्तस्य विपुलः पुण्यप्रभावः। धर्मविगर्हणान्मरणमेव श्रेयः। इन्द्रियाणां वशे योऽस्ति स मारं नानिवर्तयितुं शक्नोति। यतो हि स सर्वबन्धनैर्बद्धोऽस्ति। इन्द्रियनिग्रहकारकाणां च जनानां धर्मे रतिरुत्पद्यते। धर्माणां तत्त्वदर्शकस्थागतोऽग्र्यः सर्वलोकेषु। अतस्तदुपदिष्टमार्ग एवानुसरणीयः। तत्र दृढमभ्यस्यान्येभ्यो धर्मदानं देयम्। आ समग्रं जन्म च पुण्यानि करणीयानि। यथोक्तं ग्रन्थकर्त्रा—

---

ो धर्मचारी धर्ममेव निषेवते।
( सुखमाप्नोति न दुःखमनुपश्यति॥
ी पुरुषो यदाऽधर्मं निषेवते।
माप्नोति नरकेषु पुनः पुनः॥
—धर्मसमु० ३१।२४-२५।

यावत् समग्रं जन्मेदं ज्ञानं याति विनाविलम्।
तावत् कुरुत पुण्यानि दुःखं ह्यकृतपुण्यता॥ इति।

धर्मविशेषज्ञैः समाजे सुव्यवस्था सम्पादनाय पुण्या-पुण्योर्विवेचनं सम्यक्तया कृतम्। पुण्यम् उत्तमरत्नभूतं दीप्तिसन्निभम् अक्षयं सदा मातृपितृवत् रक्षको वर्तते। पुण्यवन्तः पुरुषा सुखमाप्नुवन्ति। त्रिदिवं च गच्छन्ति। सुखार्थिभिः सदा पुण्य-कर्मैव करणीयम्। सिक्तासु यथा न घृतं तथैव पापकर्मणा सुफलकथा वृथा। धर्म-अधर्मप्रधाने जीवलोके पुण्यमेव सुखरूपेण परिपच्यते। धर्मा एव गच्छन्तमनुगच्छन्ति। धर्माः परा गतिः परमत्राणभूता सर्वदा सुखसाधिकाश्च। धर्मवीर एव सुखान्वितो भवति। अलिप्तपापैः धर्मैः निर्वाणमार्ग अधिगम्यते। विद्याया एतदेव फलं यद् मानवः धर्मे कर्मणि सदा आस्थावान् भवति। शीलं, ज्ञानं दानं च सदा पुण्यजन-कानि। अत एव अभ्युदयार्थिभिः पुण्यकर्माऽऽचरणीयम्।

## (३२) द्वात्रिंशो देववर्गः

द्योतनाद्दीपनात् देवनात् वा देवशब्दः दीप्त्यपरपर्यायः। तथा च दीप्ति-स्वरूपताप्राप्त्यर्थं क्रूरकर्मपरित्यक्तव्यम्। तदैव मित्रवान् देवानामन्तिकं गच्छति। मनुष्याणां सुगतिः देवत्वप्राप्तिश्च धर्माधीना। तस्मात् देवसाधकं पुण्यं कर्मकर-णीयम्। शुभहेतुकमेव सकलं सुखसाधनम्। सुकृतकर्मणि लोकानां यथा प्रवृत्तिर्भवेत् तथाऽऽचरेत् अन्येच्छाधीनविषयस्य सुखस्य कर्मविपाकरूपत्वात् तावत् तत्फलप्राप्तिर्न संभाव्यते यावत् पुण्यकर्मणि प्रवृत्तिर्न भवति।

शुभानि कर्माणि कृत्वा नर इह लोके भौतिकानि सुखान्युपभुज्यमृत्योरनन्तरं देवलोके देवयोनावुत्पद्यते इति धर्मवृद्धाः शास्त्रकाराः। कानि तानि शुभानि कर्माणि? इत्यत्र ग्रन्थकार आह—

पन्थानो मुनिना शास्त्रे उक्ता ये तत्त्वदर्शिना।
तैस्तु सम्प्रस्थितास्ते हि पुरुषा देवसम्मताः॥ इति।

को हि सुगतोक्तो मार्गः? इत्याशङ्कायामाह—

सत्यं हि दानं च तथैव मैत्री,
सत्त्वेषु रक्षा प्रियवादिता च।
सम्यक्त्वदृष्टिर्विमलं मनश्च,
पन्थानमाहुस्त्रिदिवस्य बुद्धाः॥

एवं हि सिद्धम्—आचारवान् शुद्धचित्त एव देवानामन्तिकं गच्छति। ध्यान-

यस्य बुद्धिर्न क्वचिद् रागिणी, स जितारिर्विशुद्धात्मा देवसायुज्यं प्राप्नोति। पापमित्रविनिर्मुक्तः तृष्णापाशविवर्जितः स्त्रीमयैः पाशैश्च न बद्धो जनो देवेषूपपद्यते।[१]

सर्वं सुखं धर्माधीनम्। निर्वाणमपि धर्माधीनम्। सुप्तेषु जनेषु धार्मिक एव जागर्ति। यतो हि धर्मो नराणां परमा गतिः।[२] येषां वाक्-संयता, वागिन्द्रियनिग्रहेण ये शान्ताः ते स्वशरीरेण जातया प्रभया दीप्यमाना इहलोके स्वर्गे च रमन्ते। शुभचारी, सदादानी, सर्वभूतदयारतः मैत्र्यादिभिर्युक्तश्च नरो देवानां समतां करोति। अहिंसादानपरमा सद्धर्मपरायणाश्च नराः सत्यक्षान्तिदमैर्युक्ताः सन्तः देवसाधर्म्यं भजन्ते।

देवा यदेतैर्विविधैः सौख्ये रमन्ते, न तत्र वयं हेतवोऽपि तु तैः पुराकृतं शुभकर्मैव। शुभेन कर्मणैव प्राणी नित्यं देवेषु जायते। यतो हि येन येन विपाकेन यत्र यत्र प्राणी उत्पद्यते स स्वस्य प्रारब्धस्य शुभाशुभमेव लभते। जन्तुः शुभेन कर्मणा नित्यं देवलोकेषूपपद्यते। अशुभेन कर्मणा च स पुरुषाधमो नरके पततीति सुनिश्चितम्।

त्रिविधं सुकृतं कृत्वा मात्सर्यं विनिन्द्य प्राणिनां प्रणयमनुकम्पया रक्षयित्वा, अदत्तं धनं दत्त्वा, परदारांश्च मातृवत् दृष्ट्वा पैशून्यं च हित्वा पापकैर्धर्मैः अलिप्तो जनो देवानामन्तिकं व्रजेत्।

देवैरुपभुज्यमानमपि सुखं हीनमध्योत्तमं दृश्यते, तथा च येन येन यथा चीर्णं तस्य तस्य तथा फलम्। ये हेतुफलसादृश्येन सुरोत्तमानिच्छन्ति, ते हेतुफलतत्त्वज्ञाः सुखभाजो भवन्ति। यतो हि विना बीजं फलं नास्ति, विना दीपं कुतः प्रभा? अतः ज्ञानादेव मुक्तिः भवति।[३]

---

१. यस्य शुद्धं सदा चित्तं निर्मलं मणिवत् सदा।
स शान्तो निर्मलो धीमान् देवानामन्तिकं व्रजेत्॥
तृणवत् काञ्चनं यस्य कामा यस्य विषोपमाः।
स कामवर्जको धीमान् देवानामन्तिकं व्रजेत्॥

२. धर्माधीनं सुखं सर्वं धर्माधीना हि निर्वृतिः।
धर्मः सुप्तेषु जागर्ति धर्मो हि परमा गतिः॥
—धर्मसमु० ३२/५,९,२०।

३. विना बीजं फलं नास्ति विना दीपं कुतः प्रभा।
विना शीलैः कुतः स्वर्गो मुक्तिर्ज्ञानं विना कुतः॥
—धर्मसमु० ३२/८२।

इत्येवम् अशुभकर्माणि विस्तरेण सन्दूष्य शुभकर्मणां च माहात्म्यमभिधाय तत्फलभूतो देवानां लोकः प्रशस्तो ग्रन्थकारेण। अस्य वर्गस्यायमुपसंहारश्लोकः—

इत्येतानि महार्थानि नित्यं दुःखकराणि च।
कुर्वन्ति विधिवत् सर्वं ते जनाः स्वर्गगामिनः॥ इति।

## (३३) सुखवर्गस्त्रयस्त्रिंशः

'पापस्याकरणं सुखम्' इति वृद्धानां वचनम्, यतो हि प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनमेव वरम्। तदेव सुखं यदात्यन्तिकम्, तद् विवृणोति ग्रन्थकारः—

अनुत्तरेषु सौख्येषु ध्यानोपात्तेषु ये रताः।
तेषां सुखं यथावत् स्यात् निर्वाणपुरदर्शकम्॥

इतोऽन्यत् सर्वं लौकिकं सुखं धूममिश्रं काष्ठमिव, विष्ठामिश्रितमोदनमिति वा जानीयात्। वास्तविकं सुखं तु वितृष्णानामेकान्तसुखचारिणां निर्मोहिणाम् अरागाणां चैव भवति। तदात्यन्तिकसुखं श्रेयो यत्र मृत्युर्न विद्यते। यत्तु कामजन्यं कामजनकं वा सुखं न तत् सतां सम्मतम्। यत्र तृष्णाविनिर्मुक्तिः, तत्र सुखं तथैव मङ्गलप्रदम्, यथा पयोमिश्रमोदनं भवति। तत्र दुःखमार्गणा तथैव, यथा पद्मवने गृध्राणां क्रव्यगवेषणम्। वितृष्णान्मुनेर्दुःखं दूरे तथैव तिष्ठति, यथा सूर्यतः शैत्यम्।

अत एव ग्रन्थकारो कथयति—

नार्हा यूयं रागगणं सेवितुं भो सुरोत्तमाः।
यदेतद् भवतां सौख्यमेतन्न खलु शाश्वतम्॥ इति।

भिक्षूणां वने एकान्तवास एव सुखावहः। विपरीतं रागचारिणां चित्तं वने न रमते। अतो यैर्मनसा नित्यं ध्याननियोगः कृतस्तेषां कृत एव वनं रम्यम्, न तु रागगवेषिणां कृते। तदेव कथयति भिक्ष्ववलोकितसिंहः—

वनेषु भावितं चित्तं नगरेषु न कुप्यते।
तस्माद् वनं सदा सेव्यं नगरं नैव शस्यते॥

अथ च तत्त्वविदो धीराः ये जगतः वास्तविकीं स्थितिम् अनित्यदुःखशून्यतारूपां पश्यन्ति, तेषां दुःखं न विद्यते। ये न खिद्यन्ति दुःखेषु सुखे येषां न सङ्गतिः, दुःखसुखविमुक्तास्ते निर्वाणसुखगामिनो भवन्ति।

स्त्रीमयं सौख्यं तु दुःखायैव कल्पते। यतो हि यत् सुखमन्ते दुःखजनकं कथं तत् सुखमिष्यते। यच्चैतत् लोके भौतिकं सुखमुपभुज्यते तदपि कालेन नश्यति। अतो यदिदं मनोवाक्कायजं सुखं दृश्यते तद् अनित्यम्, तस्य विनाशोऽचिरेण

भविष्यति । अतो लौकिकं सुखं दुःखमेव । एतादृग्भिः सुखैर्बालो न तृप्यते, यथा काष्ठेनानलः ।

सुखस्य स्वरूपनिरूपयता आचार्यैः उक्तम् तृष्णाविरहितं परमं शान्तं सुखं प्राप्नुवन्ति जनाः । तेन च शान्तिलाभः जायते । योगिनाम् एव शान्तमालयं सम्प्राप्य सदा दुःखविरहितः सुखपूर्णः जनः तिष्ठति । सुखञ्च नाहैतुकं दृष्टं तस्मात् सुखार्थिभिः पूर्वोक्तं तत् साधनं पुण्यादिकं सर्वथा करणीयम् । एवमवगम्यते यत् 'मैत्री-करुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातः चित्तप्रसादनम्' इत्येतस्य योगसूत्रस्य पूर्णः प्रभावोऽत्र दरीदृश्यते । एवं ज्ञानेनैव हि इन्द्रियाणि स्वगोचरे निवर्तन्ते । अन्यथा बाला दुःखे सुखाभिषक्ताः परिश्रान्ता गतिपञ्चके एव भ्रमन्ति । वर्गमुपसंहरति ग्रन्थकर्ता—

यदत्यन्तसुखं दृष्टं तत्सुखं सत्यमुच्यते ।
यत्र दुःखं विपाकं स्यात् तत् सुखं दुःखमेव तत् ॥
अन्यागतस्य दुःखस्य प्रतिघातयते बुधः ।
पापस्य हेतुजं दुःखं पापस्याकरणं सुखम् ॥ इति ।

## (३४) मित्रवर्गश्चतुस्त्रिंशः

वर्गेऽस्मिन् मित्रशब्दः परिभाष्यते—

तन्मित्रं मित्रमित्युक्तं यन्मित्रं साम्परायिकम् ।
निवर्तयति यः पापाद् व्यसनाच्चापि रक्षति ॥ इति ।

जगति पूतिसंसर्गात् पूतिरेव ( अपवित्र एव ) जायते । न पूतिः पूतसंश्लेषेण अपूतिर्भवितुमर्हति ।[१] शुभं न कदापि दुःखमुत्पादयति । अतो मानवस्यैतत् सारभूतं कर्त्तव्यमस्ति ।

एतत् सारं सदा कार्यं यदसाधुविवर्जनम् ।
साधुभिश्च सदा वासो दुष्टाणां च विवर्जनम् ॥

कल्याणमित्रैः सहैव सदा वासो विधेय इति भावः । मानिनम्, अलसम्, सर्वानुशङ्कितम् चञ्चलं च पुरुषं सम्यग्दृष्टिर्न कदापि मित्रं कुर्यात् । अपि तु जगति

---

१. अपूतिः पूतिसंश्लेषात् पूतिरेवोपजायते ।
न पूतिः पूतसंश्लेषमपूतिं कर्त्तुमर्हति ॥
यादृशेन हि संश्लेषं कुरुते पुरुषः सदा ।
तद्दोषात् सदृशो दृष्टः शुभो वा यदि वाऽशुभः ॥
—धर्मसमु० ३४।३,४ ।

अलिप्तं कोमलस्वभावं धर्मिष्ठं निर्दोषं च पुरुषं मित्रं मन्येत्। उद्वृत्तो हि पुरुषः प्रमादाकुलितेन्द्रियो भूत्वा अस्मिन् लोके लघुतां याति, प्रेत्य च पापेषु पच्यते। यदेतत् कुलं, ये च विभवाः, यच्चान्यत् सुखमत्र दृश्यते, सर्वाण्येतान्यनित्यानि सन्ति। तस्मात् तेषु न विश्वसेत्। यथोक्तं ग्रन्थकर्त्रा—

एतत्कुलं ये विभवा यच्चान्यत् सुखमिष्यते।
सर्वाण्येतान्यनित्यानि तस्मात्तेषु न विश्वसेत्॥

वर्गेस्मिन् मैत्रीभावप्राप्तिरेव अभीष्टा। शुभार्थिभिः पुरुषैः शुभसाधनं पुण्यं कर्म सदाऽऽचरणीयम्। न ज्ञानशीलनिर्मुक्ताः पण्डिता अपि जना कुशलं प्राप्नुवन्ति। ज्ञानवन्तः शीलवन्त एव अग्रिमजन्मनि महति कुले उत्पद्यन्ते। दानशीलतपोध्यानैः युताः सत्यैश्वर्यपराक्रमिण एव पुरुषाः कुलीना भवन्ति। कुलीनान्येव मित्राणि कुर्यादिति वर्गं संक्षिपति उपसंहारश्लोकेन—

नैश्वर्यंज्ञानहीनस्य न कुलं नापि सङ्गतिः।
तस्मात् कुलं ज्ञानमयं ज्ञानहीनं न तत् कुलम्॥ इति।

## (३५) राजाववादवर्गः पञ्चत्रिंशः

अववादः=अनुशासनम्, राज्ञोऽववादः राजाववाद इति पदार्थः। अस्मिन् कुशलस्य राज्ञो गुणान् बोधयति ग्रन्थकारः। धार्मिको राजा प्रजायै श्रेयस्करो भवति। कश्च धार्मिकः? इत्युच्यते—

भुवं परिजनो पश्यन् धर्मचारी जितेन्द्रियः।
स राजा धार्मिको धीमान् स्वर्गलोकोपपत्तये॥

गुणी राजैव देवानामधिपो भवति। संक्षेपेण एभिर्गुणैः राजा पूजितो भवति क्षमा-प्रियवचन-क्रोध-हर्षादिनिगृहीतः। एतादृश एव राजा महीं पालयितुं शक्नोति, देवलोकाय च कल्पते। यो न स्त्रीणां वशगः, साधूनां च वशी भूत्वा प्रजाः पालयति सोऽमृतः, तत्त्वदर्शी च राजा नावमेवाधिरोहति। यो हि निन्दामलविनिर्मुक्तः सङ्गदोषेण च विवर्जितोऽस्ति स ज्ञानी राजैव देवलोकेषु पूज्यते। सन्मन्त्रिभिः सन्मित्रैश्च परिवारित एव देवानामधिपो भवति। अथ च यः सुनिश्चितं चिन्तयति यश्च धर्मेषु वर्तते, स तेन दृष्टेन धर्मोदयेन त्रिविष्टपे मोदते। धर्मेण प्रजापालक एव राजा स्वर्गसुखं लब्धुं शक्नोति। किमधिकम्, सत्कर्मनिरतः भृत्योऽपि लोके महीयते आकाशे शरच्चन्द्र इव।
यथोक्तं ग्रन्थकर्त्रा—

सत्कर्मनिरतो भृत्यो नृपे सद्गुणशालिनि।
जनो निर्मलतां याति शरच्चन्द्र इवाम्बरे॥ इति।

धार्मिको राजा स्वर्गप्राप्तौ समर्थः भवति। लोभनिर्मुक्तः राजा महीं पालयन् श्रेष्ठः भवति।[१] वृद्धदर्शी गुरुपूजकः, दानशीलः, धर्मवादी, जितेन्द्रियः कृष्णामहीं देवलोकत्वं प्रापयति। राजा कदापि स्त्रीवशो न भवेत्, सदैव साधूनां सेवकः स्यात्, मिथ्यादर्शनविरहितः शीलरतः मेरुरिवाऽचलः भवेत्। निद्रामलविनिर्मुक्तः सङ्ग-दोषविवर्जितः सदैव पूज्यो भवति। धर्मेण प्रजाः पालयन्, धार्मिक राजा लोके महीयते अनादिबलकर्मणा सुखप्राप्तिर्जायते। नृपः सदा सद्गुणशालिनीं बुद्धिमाश्रयेत्। यथोक्तमाचार्येण भिक्षुणा अवलोकितसिंहेन—

धर्मेणैव प्रजा नित्यं प्रपालयति यो नृपः।
स धार्मिकः प्रशस्तात्मा सुरलोके महीयते ॥ इति।

## (३६) षट्त्रिंशः स्तुतिवर्गः

'स्तु' धातोः क्तिन् प्रत्यय कृते प्रशंसायां 'स्तुति' शब्दः प्रयुज्यते। अस्मिन् वर्गे सर्वैरपि षोडशश्लोकैः बुद्धस्तुतिः कृता ग्रन्थकर्त्रा। येषां स्तुतिः सर्वेषां मातेव हितकारिणी भवति। अस्य वर्गस्य समाधाननाम्ना ग्रन्थान्तरेषु निर्देशः कृतः। वर्गेऽस्मिन् किमेतस्य ग्रन्थस्य अध्ययनफलम्? का च उपलब्धिः? इत्येतेषां विषयाणां तात्पर्यं संक्षेपेण प्रतिपादितम्। स्तुतिवर्गे एतदाचारफलं सम्यक् निरूपितम्[२] तत्र च सर्वसत्त्वेषु बान्धवत्वं भवबन्धनभेदकत्वं विभेददृष्टिशून्यत्वं सम्यकृदृष्टिज्ञानदीप्तिपूर्वकं, सम्यकृदृष्टिलाभार्थं त्रिदोषमलशोधनपूर्वकं, सर्व-सङ्कटनिवारणार्थं सर्वबीजफलप्राप्त्यर्थं लोकनाथस्य शान्तप्रतिमादर्शनं भवभयेभ्यः निवृत्तिः शान्तपदस्य च प्राप्ति इति एते विषयाः वर्णिताः। तत्त्वचिन्तकाः पुरुषाः एतद्दृष्टिसमारुह्य भवसागरं तरन्ति। ज्योतिषाञ्च परं ज्योतिराप्नुवन्ति।

---

१. क्षमावान् प्रियवाक्यो यः क्रोधहर्षादिधारकः।
स महीं पालयेत्त्वेनां लोके हि श्रेष्ठतां गतः ॥
—धर्मसमु० ३५।३।

२. समसत्त्वाग्रवेदाय सर्वसत्त्वेषु बन्धवे।
सन्मार्गसार्थवाहाय भवबन्धनभेदिने ॥
नानादृष्टिविभेदाय सर्वसंशयमोचिने।
सम्यग्दृष्टिनिवेशाय नमः सञ्ज्ञानचक्षुषे ॥
सर्वसङ्कटभेदाय त्रिदोषमलशोधिने।
नमो नक्षत्रभूताय सर्वबीजफलोरुहे ॥
—धर्मसमु० ३६।१, २, ३।

महर्षिपतञ्जलिमनुसृत्य आदिमध्यावसानेषु मङ्गलाचरणप्रथनम् अस्माकं पुरातनीपरम्परा, तस्यानुसरणं स्तुतिवर्गद्वारा भिक्षुणा अवलोकितसिंहेन कृतम्।

एवमनेन ग्रन्थकर्त्रा सर्वेऽपि बोधिपाक्षिका धर्माः ( यैर्विना निर्वाणाधिगतिः असम्भवा ) सद्धर्मस्मृत्युपस्थानसूत्र-वैपुल्यसूत्राभ्यां सङ्गृह्य विशदं व्याख्याता। एषां धर्माणामहर्निशं स्मृत्या ध्यानेन च निर्वाणाभिलाषुकः क्रमशो निर्वाणपथ-मधिरोढुं शक्नोतीति ग्रन्थस्य प्रयोजनम्। धर्मसमुच्चयो नाम एष ग्रन्थः मोहान्धकारविनिवारकः विद्वेषरहितलोके सम्प्रथितः विराजते। अत एतदनुकूलम् आचरणं कर्त्तव्यमिति परमोपदेशः। अत्र च पूर्ववर्तिनां सर्वेषां बौद्धाचार्याणां तदनुकूलानाञ्च सनातनधर्माणां सारांशः सङ्गृहीतः, कर्त्तव्यत्वेन च सन्निविष्टः अत्र न सम्प्रदायाग्रहः, न वा काचिद् धर्मविशेषे आसक्तिः। उदारश्च विचारः अत्र सङ्ग्रथितः विराजते। बौद्धेतरधर्माणामपि विषये न तादृशी विरोधभावना अत्र विद्यते, येन ग्रन्थकर्त्तुः धर्मविशेषविषये आग्रहः प्रतीयेत। नूनम् एष ग्रन्थः बहुजनहिताय बहुजनसुखाय कर्त्तव्यमार्गनिर्देशाय एवेति अलमतिविस्तरेण।

धन्येयं समन्वयवादीभावना, आचार्यस्य अत्र केनापि रूपेण पक्षपातः न संलक्ष्यते अस्माभिस्तु एवं चिन्त्यते यद् अस्मिन् धर्मसमुच्चये कर्त्तव्यभावनैव विरोधभूमिं परित्यज्य सङ्ग्रथिता। अवश्यमेतादृशाचरणेन बुद्धत्वप्राप्तिः पुरुषो-त्तमत्वलाभश्च स्याताम् इति।

## प्रस्तुतं संस्करणम्

हर्षस्य गौरवस्य च अस्माकं कृते अयमवसरो यद् अस्य ग्रन्थस्य प्रकाशनं मन्दमतिना मया यथामति सम्पाद्य प्रथमवारमेव वाराणसीस्थ सम्पूर्णानन्द-संस्कृतविश्वविद्यालयस्य अधिकारिणाम् अनुग्रहेण विधीयते। अस्य सम्पादनप्रसङ्गे पाण्डुलिपियुगलम् उपलब्धं नेपालस्थश्रीराष्ट्रिय-अभिलेखालयतः श्रमणविद्या-सङ्कायस्य जनकानां परमगुरूणाम् आचार्यश्रीजगन्नाथोपाध्यायानां कृपाप्रसादतः। अस्य ग्रन्थस्य सन्दर्भे मया अन्यानि यानि सूचनास्रोतांसि उपलब्धानि तेषां विवरणम् इत्थम् अस्ति—

1. NEW CATALOGUS CATALOGORUM.
2. SURVEY OF INDIAN BUDDHISM.
3. JUORNAL OF THE RAYAL ASIATIC SOCIETY OF GREAT BRITAIN AND IRELAND, LONDON.
4. INDIAN HISTORICAL QURTERLY, CALCATTA.
5. JOURNAL OF INDIAN AND BUDDHIST STUDIES, TOKYO.

एवमेतेषाम् आधारेण मया अस्य ग्रन्थस्य समीक्षात्मकं सम्पादनं कृतम्। धर्मसमुच्चयस्य पाण्डुलिपियुगलमनुसृत्य गाथा-संख्या २६४८ वर्तते ; किन्तु मदीया गाथा-संख्या २३२५ इति विद्यते। यतस्तत्र अर्थानुसन्धानदृष्टया मया काश्चन गाथाः पङ्क्तिद्वयेषु, काश्चन च एकस्यां पङ्क्तौ उपन्यस्ताः। अतः पाण्डुलिपियुगलस्य मदीयस्य च गाथासंख्यायामिदम् अन्तरं समागतम्। अस्य विभाजनं मया उदानैः, वर्गैश्च विहितं ग्रन्थकारमनुसृत्य। विषयानुसरणपूर्वकञ्च अवतरणान्यपि तासु तासु गाथासु उपन्यस्तानि। अस्य ग्रन्थस्य भाषा संकरसंस्कृतमस्ति, अतस्तत्र यास्त्रुटयो व्याकरण-दृष्ट्या छन्दोदृष्ट्या च अनुभूताः, ता मया परिष्कृत्य तत्र तत्र कोष्ठकेषु उपन्यस्ताः। पाठभेदाश्च 'क, ख' सङ्केताभ्यां प्रदत्ताः। तत्र 'क, ख' इति सङ्केतद्वयं यत्र वर्तते तत्र उपरितनपाठः परिष्कृतोऽवगन्तव्यः। पादटिप्पण्यां विभिन्नग्रन्थेभ्यो मया उद्धरणानि उट्टङ्कितानि। तत्र बौद्धपारिभाषिकशब्दानाम् अर्थविन्यासः, धर्म-समुच्चयस्य गाथाभिः साकं तुलनीया अन्ये श्लोकाश्च मया सङ्कलिताः। अन्ते परिशिष्टमपि स्थापितम्। तद्यथा—

(अ) बौद्धधर्मस्य विकासक्रमः।
(आ) श्रीधर्मादित्यस्य लेखः।
(इ) धर्मसमुच्चयकोशः।
(ई) गाथानुक्रमणिका।
(उ) सन्दर्भग्रन्थाः।

मन्ये, परिशिष्टमिदं जिज्ञासूनां ज्ञानपिपासाशमनं स्यादिति।

## कृतज्ञताज्ञापनम्

परमगुरुवराणाम् आचार्यश्रीजगन्नाथोपाध्यायानां मदीयोपरि महती अनु-कम्पाऽऽसीत्, यद् वशाद् अहं धर्मसमुच्चयस्य सम्पादनकर्मणि संलग्नः। १९८२ ई० वर्षे आचार्यैः उपाध्यायमहाभागैः नेपालयात्रायां श्रीराष्ट्रिय-अभिलेखालयतः अस्य ग्रन्थस्य दुर्लभं पाण्डुलिपियुगलम् उपलब्धम्। तस्य च छायाचित्राङ्कनं कारयित्वा भारते समानीतम्। अहञ्च तदानीं सम्पादनकर्मणि तैः प्रोत्साहितः। १९८३ ई० वर्षे वाराणसीस्थसम्पूर्णानन्दसंस्कृतविश्वविद्यालयेन शोधोपाधये अस्य ग्रन्थस्य समीक्षा-त्मकसम्पादनाय मह्यम् अनुमतिः प्रदत्ता। १९८६ ई० वर्षे मया प्रो० महाप्रभुलाल-गोस्वामिमहोदयानां निर्देशने अस्य सम्पादनं विधाय विद्यावारिधिः ( Ph. D. ) इति शोधोपाधिरुपलब्धः। अनन्तरं कुलपतीनां **प्रो० विश्वनाथवेङ्कटाचलम्-**महाशयानां कार्यकाले शोधप्रबन्धस्य प्रकाशनाय अनुमतिः प्रादीयत।

अतः सर्वप्रथमं परमगुरुवरेभ्यः प्रो० जगन्नाथोपाध्यायेभ्यः सप्रश्रयं प्रणामा-ञ्जलयो निवेद्यन्ते, यैर्विना अस्य प्राकट्यं सुतरामसम्भवमासीत्। प्रो० गोस्वामि-

चरणेभ्यः कैः शब्दैः साधुवादं प्रकाशयामः, यैः पदे पदे मे मार्गनिर्देशनं विहितम् । प्रो० वि० वेङ्कटाचलम्महाभागानां प्रोत्साहनादेव इदं ग्रन्थं मुद्रणाय प्रकाशनाय च अग्रेसृतम्, येन मम बालचापलमिदम् उत्साहमापत् । कुलपतिचरैः प्रो० राजदेवमिश्रैः विशेषरूपेण ग्रन्थलेखने सम्पादने च अपेक्षितं साहाय्यं प्रदत्तम्, तेषामहम् आजीवनं ऋणी अस्मि । अस्य प्रणयनप्रसङ्गे पूज्यगुरुवर्यैः केन्द्रीय-उच्च-तिब्बती-शिक्षा-संस्थान-सारनाथस्य वरिष्ठाचार्यैः **प्रो० रामशङ्करत्रिपाठिमहोदयैः** महती अनुकम्पा प्रदर्शिता । यतो हि काले काले साहाय्यं प्रदत्तम्, तत्कृते तेभ्य आभारं निवेदयामि ।

एवमेव प्रो० विद्यानिवासमिश्र-( कुलपतिः-सं० सं० वि० वि०, वाराणसी ) प्रो० मण्डनमिश्र-(कुलपतिः-ला० ब० के० संस्कृत-विद्यापीठ देहली) प्रो० व्रजवल्लभ-द्विवेदि-( उपनिदेशकः-के० उ० ति० शि० सं० सारनाथः ) प्रो० केदारनाथमिश्र-( दर्शनसङ्कायप्रमुखः-का० हि० वि० वि० ) प्रो० लक्ष्मीनारायणतिवारि-( श्रमण-सङ्कायाध्यक्षः-सं० सं० वि० वि० ) पं० श्रीजगन्नाथशास्त्रितैलङ्ग-आचार्यश्रीशिवजी-उपाध्याय-डॉ० जानकीप्रसादद्विवेदि-डॉ० रमेशकुमारद्विवेदि-आचार्यरामेश्वरमिश्र-डॉ० धर्मदत्तचतुर्वेदि-डॉ० बनारसीलाल-डॉ० सुभाषचन्द्रबरुआ-डॉ० आर० एस्० यादव-श्रीआनन्दशङ्करचौबेप्रभृतीनाम् अस्माकं शुभेच्छुकानां गुरुवर्याणां सहयोगिनाञ्च अविस्मरणीयः सहयोगो मया लब्धः । एतत्कृते एते धन्यवादार्हाः ।

येषां निरन्तरं प्रोत्साहनेन वारं वारं सङ्कटेषु आपतितेष्वपि अहम् अबाधम् अध्ययनाय प्रवृत्तः, तेभ्यः श्रद्धास्पदेभ्यः पितृभ्यः श्रीमतीचम्पादेवीभ्यः पं० श्रीरामानुग्रहचतुर्वेदिभ्यश्च कृतज्ञतां ज्ञापयामि । सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य प्रकाशनाधिकारिणा **डॉ० हरिश्चन्द्रमणित्रिपाठिना** अस्य ग्रन्थस्य प्रकाशनप्रसङ्गे यादृशी अभिरुचिः प्रदर्शिता, सा अविस्मरणीया विद्यते । अतस्तेषां धन्यवादं करोमि । एवमेव डॉ० हरिवंशपाण्डेयः, श्रीकन्हईसिंहकुशवाहा, मुद्रणालयकर्मचारिणश्च कृते साधुवादं वितरामि ।

अन्ते मन्दमतिना सागरोल्लङ्घनमिव लघुप्रयासो भवतां पुरस्तात् प्रस्तूयते । आशासे सुधियो नीर-क्षीरविवेकन्यायेन दोषान् विहाय गुणान् ग्रहीष्यन्ति । भवतां समक्षं सदाचारसन्दर्भे जिज्ञासाशमनं भिक्षु श्री अवलोकितसिंहसमुद्भावितस्य 'धर्मसमुच्चय'ग्रन्थस्य साफल्यं मन्ये इति ।

गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।
हसन्ति दुर्जनास्तत्र समादधति साधवः ॥

विदुषां वशंवदः
**विजयशङ्करचौबे**
वाराणसीस्थः

रामनवम्याम्
२०४९ वैक्रमाब्दे

# विषयानुक्रमः


| | |
|---|---|
| आशीर्वाद | — प्रो० स० रिन्पोछे |
| शुभाशंसनम् | — डॉ० राजदेवमिश्रः |
| प्राक्कथन | — प्रो० रामशङ्कर त्रिपाठी |

| | |
|---|---|
| भूमिका | १— ८३ |
| प्रथमम् उदानम् | १—१२९ |
| वर्गनाम | पृष्ठाङ्कः |
| जितवर्गः | ३ |
| धर्मोपदेशवर्गः | ११ |
| कायजुगुप्सावर्गः | १८ |
| परिवर्तवर्गः | २२ |
| अनित्यतावर्गः | ३१ |
| अप्रमादवर्गः | ५५ |
| कामजुगुप्सावर्गः | ७९ |
| तृष्णावर्गः | १०१ |
| स्त्रीजुगुप्सावर्गः | ११४ |
| मद्यजुगुप्सावर्गः | १२५ |
| द्वितीयम् उदानम् | १३०—१९१ |
| चित्तवर्गः | १३० |
| वाग्वर्गः | १४३ |
| कर्मवर्गः | १५० |
| संयोजनवर्गः | १५५ |
| पापवर्गः | १६१ |
| नरकवर्गः | १६८ |
| प्रेतवर्गः | १८० |

| | |
|---|---|
| **तिर्यग्वर्गः** | १८४ |
| **क्षुधावर्गः** | १८६ |
| **कौसीद्यवर्गः** | १८८ |
| **तृतीयम् उदानम्** | १९२—२४३ |
| **करुणावर्गः** | १९२ |
| **दानवर्गः** | १९६ |
| **शीलवर्गः** | २०३ |
| **क्षान्तिवर्गः** | २११ |
| **वीर्यवर्गः** | २१४ |
| **ध्यानवर्गः** | २१६ |
| **प्रज्ञावर्गः** | २१९ |
| **निर्वाणवर्गः** | २२१ |
| **मार्गवर्गः** | २२३ |
| **भिक्षुवर्गः** | २२६ |
| **चतुर्थम् उदानम्** | २४४—२७८ |
| **पुण्यवर्गः** | २४४ |
| **देववर्गः** | २५२ |
| **सुखवर्गः** | २६३ |
| **मित्रवर्गः** | २७० |
| **राजाववादवर्गः** | २७३ |
| **स्तुतिवर्गः** | २७७ |
| **परिशिष्टम्** | २७९—४३२ |
| ( अ ) बौद्धधर्मस्य विकासक्रमः | २७९ |
| ) श्रीधर्मादित्यस्य लेखः | २८३ |
| ) धर्मसमुच्चयकोषः | २९३ |
| ( ई ) गाथानुक्रमणिका | ३४५ |
| ( उ ) सन्दर्भग्रन्थाः | ४२९ |

"अल्पामपि संहितां भाषमाणो
धर्मस्य भवत्यनुधर्मचारी।
रागं च द्वेषं च प्रहाय मोहं
सम्यक् प्रजानन् सुविमुक्तचित्तः।
अनुपादान इह वाऽमुत्र वा
स भगवान् श्रमणस्य भवति॥"

—धम्मपद १/२०

॥ श्रीः ॥

भिक्षुणा अवलोकितसिंहेन समुद्भावितः

# धर्मसमुच्चयः

## प्रथमम् उदानम्

(जित-धर्म-कायवर्गाः परिवर्तो ह्यनित्यता ।
अप्रमादः काम-तृष्णे स्त्री च मद्येन ते दश ॥)

## (१) जितवर्गः

**मङ्गलाचरणम्**

॥ ॐ नमो बुद्धाय ॥

[1]प्रहीणसर्वास्रव[१]निर्मलश्रीर्यः क्लेशजम्बालनिमग्नलोकम् ।
कृपागुणेनोदहरत्समेन प्रणम्यतेऽस्मै[२] त्रिभवोत्तमाय ॥ १ ॥

---

1. सास्रवा आस्रवास्तेषु यस्मात्समनुशेरते इति । मार्गसत्यं त्यक्त्वा अन्ये सर्वे हेतुप्रत्ययजनिताः ( संस्कृताः ) धर्माः सास्रवाः । कुत इमे सास्रवाः ? यतः तेषु धर्मेषु आस्रवा रागादयो मला आश्रयम् उपगृह्णन्ति, तेषामाश्रयेण पुष्टिं वा लभन्ते । इत्थम् आस्रवाणां ( रागादीनां ) आर्द्रपट इव रजस आश्रयप्रदानाद् रूपादयः सास्रवा उच्यन्ते ।

एवं काम-भव-दृष्टि-अविद्या च चत्वार आस्रवाः सन्ति ।

—"सास्रवाऽनास्रवा एते त्रयः शेषास्तु सास्रवाः" इति ।

इमे च मनो-धर्म-मनोविज्ञानधातवः सास्रवा अनास्रवाश्च भवन्ति । शेषाः पञ्चदश धातवः केवलं सास्रवाः (समलाः) एव ।

—इति अभिधर्मकोशस्य धातुनिर्देशे विवृतः ।

---

१. सर्वाश्रव—क । २. प्रणम्य तस्मै—क । तस्य—ख ।

**ग्रन्थकारप्रतिज्ञा**

सद्धर्म[1]स्मृत्युपस्थानसूत्र-[2]वैपुल्यसागरात् ।
[3]गाथाः[१] समुद्धरिष्यामि लोकलोचनतत्पराः ॥ २ ॥

**मोक्षस्यायतनानि षट्**

अप्रमादस्तथा श्रद्धा वीर्यारम्भस्तथा धृतिः ।
ज्ञानाभ्यासः सतांश्लेषो मोक्षस्यायतनानि षट् ॥ ३ ॥

**नव शान्तिसम्प्राप्तिहेतवः**

दानं शीलं दमः क्षान्तिर्मैत्रीभूतेष्वहिंसता ।
करुणामुदितोपेक्षा शान्तिसम्प्राप्तिहेतवः ॥ ४ ॥

**नरकस्याग्रहेतवः**

चापल्यं पापसंश्लेषः[२] क्रूरता वितथं वचः ।
मिथ्यादृष्टिः प्रमादश्च नरकस्याग्रहेतवः ॥ ५ ॥

---

1. काय-वेदना-चित्त-धर्मेति चत्वारि स्मृत्युपस्थानानि सन्ति। एते चत्वारः 'सतिपट्ठान' सत्त्वानां विशुद्धयै दुःखदौर्मनस्योरतिक्रमणाय परमज्ञाननिर्वाणयोः प्राप्त्यै च सर्वोत्तमा एकैकमार्गा विद्यन्ते ।

2. विपुलस्य भावो वैपुल्यम्, तानि कृतानि वैपुल्यसूत्राणि । बौद्धदर्शनस्य महायानग्रन्थेषु एतेषां सूत्राणां समधिकं महत्त्वमस्ति, यद्यपि सन्त्यनेकानि महायानसूत्राणि, किन्तु नवसंख्याकानां सूत्राणामेव देशे विदेशेष्वपि विशेषतयाऽध्ययनाध्यापनयोः क्रमो जायते, नामान्येतेषां सूत्राणां यथा—सद्धर्मपुण्डरीकसूत्रं–ललितविस्तरं–लङ्कावतारसूत्रं–अष्टसाहस्रिका प्रज्ञापारमिता–गण्डव्यूहसूत्रं–सुवर्णप्रभासूत्रं–दशभूमीश्वरसूत्रं–समाधिराजसूत्रं-तथागतगुह्यकं ( गुह्यसमाजतन्त्रं ) सूत्रं चेति ।

3. सूत्रं गेयं व्याकरणं गाथो-दानाऽवदानकम् ।
इति वृत्तिकं निदानं वैपुल्यं च सजातकम् ॥
उपदेशोऽद्भुता धर्मा द्वादशाङ्गं इदं वचः ॥

—इति अभिसमयालङ्कारे विवृतोऽस्ति ।

---

१. गाथां–ख । २. संक्लेशः–ख ।

## प्रेतेषु षट् उद्भवकारणानि

मात्सर्यमीर्ष्या कटुवाक्यता हि प्रमादसेवा विरतिः शुभाच्च ।
तत्त्वेष्वभिद्रोहरतं[१] मनश्च प्रेतेषु पन्थान इहोद्भवन्ति[२] ॥६॥

## तिर्यग्योनौ उद्भवसाधनानि

अज्ञानसेवा जड ( ता ) च बुद्धेः सद्धर्मनाशः प्रियमैथुनत्वम् ।
आहारशक्तिः प्रबला[३] च निद्रा तिर्यग्गतौ च प्रवदन्ति हेतुम् [1]॥७॥

## कर्मफलम्

अशुभं त्रिविधं कृत्वा कायवाङ्मनसां महत् ।
उत्तरोत्तरसम्बद्धं कर्मणा सम्प्रदृश्यते [2]॥८॥

बालानामपि सम्बद्धमुत्तरोत्तरमेव तत् ।
शुभञ्च त्रिविधं कृत्वा साधवो यान्ति निर्वृतिम् [2]॥९॥

तस्मात् कर्मफलं मत्वा प्रमादस्य च वर्जनम् ।
श्रेयसे क्रियते[४] बुद्धेरेतत् सुखमनुत्तमम् ॥१०॥

---

1. आहारनिद्राभयमैथुनञ्च सामान्यमेतत् पशुभिर्नराणाम् ।
धर्मो हि तेषामधिको विशेषो धर्मेण हीनाः पशुभिः समानाः ॥ –हितो०१/२५
इति पद्ये अज्ञानसेवायाः बुद्धिजडतायाः सद्धर्मनाशस्य च हेतुत्वेन समुल्लेखो न वर्तते । परं भयस्य विशिष्टोल्लेख इति तुलनीयम् ।

2. तुलनीयमिदं पद्ययुगलम्—
—शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासनासरित् ।
योजनीया शुभे मार्गे प्रयत्नैः पौरुषाश्रितैः ॥
–दुर्गादत्तद्विवेदिकृते दशकण्ठवधे

—कायवाङ्मानसं कर्म सर्वं सम्यक् परीक्ष्य यः ।
परात्महितमाज्ञाय सदा कुर्यात् स पण्डितः ॥ –नागार्जुनकृत रत्ना० १/६
—कायिकं वाचिकं मानसं त्रिविधं कर्माऽपि मोक्षभागीयम् । प्राधान्येन तु मानसमेव । उत्तरकुरुवर्जितानां त्रयाणां द्वीपानां मनुष्येष्वेव मोक्षभागीयं कर्माक्षिप्यते । देवाऽपायोत्तरकुरुषु हि अपेक्षितानां निर्वेदप्रज्ञादीनामभावः । इति अभिधर्मकोशः ।

---

१. भिद्रोहः रतं–ख । २. मिहोदभवार्य्याः–क. ख ।
३. प्रबलं –ख । ४. क्रीयते –ख ।

दानशीलवतो नित्यं सर्वसत्त्वानुकम्पिनः।
सिद्धचन्ति सर्वशस्तुल्यास्तस्माच्छीलपरो भवेत्[1]॥११॥

**कस्य कार्यसिद्धिः भवति ?**

मैत्रीकरुणायुक्तस्य गताकांक्षस्य देहिनः।
परानुग्रहयुक्तस्य कार्यसिद्धिर्ध्रुवं स्थिता ॥ १२ ॥

सन्तुष्टस्याप्रमत्तस्य सर्वसत्त्वहितैषिणः।
रागद्वेषविमुक्तस्य कार्यसिद्धिर्ध्रुवं स्थिता[2]॥ १३ ॥

मित्रामित्रप्रहीणस्य समचित्तस्य देहिनः।
अपायगतिभिन्नस्य कार्यसिद्धिर्ध्रुवं स्थिता ॥ १४ ॥

एवं च तस्य धीरस्य धर्मदानरतस्य च।
मात्सर्येर्ष्याप्रमुक्तस्य कार्यसिद्धिर्ध्रुवं स्थिता ॥ १५ ॥

[3]संवरस्थस्य शान्तस्य गुरुपूजारतस्य च।
कार्याकार्यविधिज्ञस्य कार्यसिद्धिर्ध्रुवं स्थिता ॥ १६ ॥

---

1. पुत्राश्च विविधैः शीलैर्नियोज्याः सततं बुधैः।
नीतिज्ञाः शीलसम्पन्ना भवन्ति कुलपूजिताः॥ —चा० नी० २/१०

2. सन्तोषप्रकर्षेण योगिनस्तथाविधमान्तरं सुखमाविर्भवति, यस्य बाह्यविषयसुखं शतांशेनापि न समम्। भोजदेवकृतवृत्तितः।
सन्तोषादनुत्तमसुखलाभः।" इति "व्याख्यानं —(पा० यो० सू० २।४२) इत्युपरि द्रष्टव्यम्

3. जीवाऽजीवाऽऽश्रवबन्धसंवरनिर्जरामोक्षाः सप्तास्तिकायाः, यत्र पञ्चमः अस्तिकायः संवरः। नाश्रवलक्षणं भवप्रवाहद्वारं संवृणोतीति संवरः।
उक्तञ्च जैनैः—
आश्रवाणामशेषाणां निरोधः संवरः स्मृतः।
कर्मसंव्रियते येनेत्यन्वयस्यावलोकनात् ॥
धर्मात्ममितिगुप्तिभ्यामनुप्रेक्षानुचिन्तनात् ।
असावुदेति चारित्रादरिषट्कजयादपि ॥
—इति 'चातुर्वर्ण्यशिक्षा' दुर्गादत्तद्विवेदिकृता, पृ. १०२-१०३।

**संवरभेदास्तु—**

संवरः प्रातिमोक्षाख्योऽनास्रवो ध्यानजस्तथा।
अष्टधा प्रातिमोक्षाख्यः वस्तु तस्तु चतुर्विधः॥ इति।

एवं संवरः त्रिविधः-प्रातिमोक्षसंवरः, ध्यानसंवरः, अनास्रवसंवरश्च। प्रथमः कामधातौ शीलम्। ध्यानसंवरो ध्यानोत्पादितो रूपधातौ शीलम्।

अशठस्यातिदक्षस्य प्रियवाक्यस्य नित्यशः ।
[1]ध्यानाध्ययनशक्तस्य कार्यसिद्धिर्ध्रुवं स्थिता ॥ १७ ॥
देशकालविधिज्ञस्य साध्यासाध्यं विजानतः ।
शक्योपायविधिज्ञस्य कार्यसिद्धिर्ध्रुवं स्थिता ॥ १८ ॥

## क्रोधादिविजयसाधनमुखेन धर्मतास्वरूपनिरूपणम्

[2]अक्रोधेन हतः क्रोधः क्षमया क्रूरता जिता ।
धर्मेण निर्जितोऽधर्मः प्रभया विजितं तमः ॥ १९ ॥

---

अनास्रवसंवरो विशुद्धशीलस्य ( मार्गस्य ) उत्पादकः । प्रातिमोक्षसंवरोऽष्ट-विधः—भिक्षु-भिक्षुणी-शिक्षमाण-श्रामणेरश्रामणेरिको-पासको-पासिको-पवासस्थ-सम्बन्धात् । प्रातिमोक्षसंवरः तत्त्वतस्तु चतुर्विध एव । भिक्षुणी प्रातिमोक्षः भिक्षुप्रातिमोक्षतो न विसदृशः, तथैव शिक्षमाणश्रमणेरिकयोः अपि श्रामणेतरप्रातिमोक्षसदृश उपासिकाया अपि उपासकप्रातिमोक्षेऽन्तर्भावो भवितुमर्हति ।

—कर्मनिर्देशे, अभिधर्मकोशस्य ।

—रूंधियच्छिद्दसहस्से जलजाणे जह जलं तु णासवदि ।
मिच्छत्ताइ अभावे तह जीवे संवरो होई ।

—समणसुत्त, गाथा–६०६ ।

—आस्रवनिरोधः संवरः —तत्त्वार्थसूत्रम्–९।१ ।
—कायवाङ्मनः कर्मयोगः । स आस्रवः ।

—तत्त्वार्थसूत्रम्–६।१-२ ।

1. ध्यानानि चत्वारि, तत्रैकैकं द्विविधम् । उपपत्ति-ध्यानान्युक्तानि । समापत्ति-ध्यानमेकस्मिन् आलम्बने कुशलचित्तानां सम्प्रयोगः । तदनुगामिभिः स्कन्ध-पञ्चकैः समापत्तिः सानुगता ।

तत्र चतुर्षु ध्यानेषु द्वौ भेदौ—समापत्तिध्यानं (कारणध्यानं) उपपत्ति-ध्यानम् (कार्यध्यानम्) च । उपपत्तिध्यानानि तृतीयकोशस्थाने लोकनिर्देशे व्याकृतानि । तत्र प्रथम-द्वितीय-तृतीयध्यानानि प्रत्येकं त्रिभूमिकानि, चतुर्थं-त्वष्टभूमिकम् ( ३ : २, ६ : ३८, ४३ : २ : ४१, ८ : १२, १०, १६, १९ ) । इति अभिधर्मकोशे ( ध्यानम् ) विवृतमस्ति ।

2. अक्कोधेन जिने कोधं असाधुं साधुना जिने ।
जिने कदरियं दानेन सच्चेन अलिकवादिनं ॥

—इति धम्मपदे ( १७।३ ) विवृतोऽस्ति ।

**सत्यादेः प्रशंसा**

मृषावाक्यं सत्यहतं पैशुन्यं च समाधिना ।
पारूष्यं मार्दवं जितं अबद्धं बन्धना[१] जितम् ॥ २० ॥

प्राणातिपातो मैत्र्या च स्तेयं[२] दानैः सदा जितम् ।
[1]अयोनिशोमनस्कारो[३] [2]योनिजेन[४] सदा [3]जितः ॥ २१ ॥

---

1. अयोनिशोमनस्कारः = अयोन्या अन्यायेन क्लेशयोगेन यः प्रवृत्तो मनस्कारः।

अयोनिशोमनस्कारः = भ्रान्तनिर्णयः। तद्यथा—कामराग उत्पद्यते— (१) यदा रागानुशयोऽप्रहीणः, अनुच्छिन्नस्वप्राप्तिः अपरिज्ञातः, अनुत्पन्नप्रतिपक्षः (२) यदा चायोनिशोमनस्कारः।

—इति अभिधर्मकोशस्य चतुर्थे पञ्चमे च कोशस्थाने उल्लिखितमस्ति।

2. चतस्रो योनयस्तत्र सत्त्वानामण्डजादयः।
चतुर्धा नरतिर्यञ्च नारका उपपादुकाः।
अन्तराभवदेवाश्च प्रेता अपि जरायुजाः॥ इति।

अण्डज-जरायुज-संस्वेदजो-पपादुकेति चतस्रो योनयः सत्त्वानां भवन्ति। मनुष्याः तिर्यञ्च चतुर्धा अपि जायन्ते। तद्यथा अण्डजौ शैलोपशैलनामानौ क्रौञ्चाण्डतो जातौ, मृगारमातुः विशाखाया द्वात्रिंशत्पुत्राः, पञ्चालराजस्य पञ्चशतपुत्राश्च श्रूयन्ते, जरायुजा इदानीं सर्वे एव स्वेदजा मन्धातृ-चारू-पचारू-कपोतमालिन्याऽम्रपालीत्यादयः उपपादुकाः कल्पारम्भे जायमानाः सत्त्वाः।

तिर्यञ्चोऽपि चतुर्धा जायन्ते, यथा अण्डजाः पक्षि-सरीसृपादयः, जरायुजाः पशवः, संस्वेदजा मत्कुणादयः, उपपादुकाः वर्षारम्भे शलभादयः, नागा गरुडाश्चोपपादुका अपि। नरके जायमानाः सर्वे एव सत्त्वा उपपादुका एव। नारकवत् अन्तराभवाः देवाश्च उपपादुका एव भवन्ति, न अण्डज-जरायुज-संस्वेदजाः। प्रेता जरायुजाः, अपि शब्देन उपपादुका अपि भवन्ति। तत्र एतेषु उपपादुका योनिरेव अतिसाधारणा।

—इति अभिधर्मकोशस्य लोकधातुनिर्देशे (९) विवृतोऽस्ति।

3. भ्रूमध्ये चित्तधारणात् "जितमनस्कारो" भवति। जितो (अयोनिशो) मनस्कारो येन स। इत्यभिधर्मे (६।११) विवृतः।

---

१. बन्धुना क. ख। २. मैत्र्यास्ते क।
३. शोमन क. ख। ४. शेन क. ख।

अविद्या विद्यया जिता दिवसेन तथा क्षपा।
शुक्लपक्षेण च कृष्णपक्षो (हि) सर्वशो जितः॥ २२॥

मिथ्याकामेष्ववविजितो बुद्धया तत्त्वविचारया।
[1]आर्याष्टाङ्गेन मार्गेण योनिजेन सदा जितः॥ २३॥

[2]वैशारद्यैश्चतुर्भिश्च कदर्य[1] जितमेव तत्।
विस्मृतिश्च हता स्मृत्या क्षणेनात्मानमेव च॥ २४॥

अरण्यवासनियतैर्जिता रागवशा नराः।
मेरुणा पर्वता जिता (वृक्षेण)[2] वनमालिका [3]॥ २५॥

---

1. बोध्यङ्गानन्तरं मार्गाङ्गान्युक्तानि। तान्याह—तत्र कतम आर्याष्टाङ्गो मार्ग इति। आह–सम्यग्दृष्टिर्यावत् सम्यक्समाधिरिति। अत्र च मिथ्यादृष्टिप्रतिपक्षेण यावन्मिथ्या समाधिप्रतिपक्षेण सम्यग्दृष्टयादीनां मार्गाङ्गानां यथाक्रमं व्यवस्था। आर्यमार्गं च समापन्नस्यैकस्मिन्क्षणे युगपदष्टौ मार्गाङ्गानि भवन्ति। भवन्तु तावत्सम्यग्दृष्टयादयः। सम्यग्वाक् कर्मान्ताजीवाः कथं भवन्ति समापन्नस्य। किमसौ तस्यामवस्थायां वाचं भाषते, क्रियां वा करोति, चीवरादीन् वा पर्येषते, न हि। कथं तर्हि तस्यामवस्थायां व्यवस्थाप्यन्ते, उच्यते। तन्मार्गसमापन्नस्य मार्गबलात्तद्रूपामनास्रवामविज्ञप्तिं प्रतिलभते, यस्याः प्रतिलम्भाद् व्युत्थितोऽपि सम्यग्वागादिषु प्रवर्तते, न पुनर्मिथ्यावागादिषु प्रवर्तते।

—अर्थविनिश्चयसूत्रस्य आर्याष्टाङ्गमार्गे।

2. विशारदस्य भावो वैशारद्यम्। सभास्वसांकुचित्यं निर्भयतेत्यर्थः। "सम्यक् सम्बुद्ध इत्यात्मानं प्रतिजानीते" इत्यनेन सर्वधर्माभिसंबोधं कथयति। निमित्तमपि न समनुपश्यामि। इदं प्रथमम्। 'ये वा पुनर्मया अन्तरायिका धर्मा आख्याता' इति अधिगमान्तरायकराः तद्यथा आनन्तर्यादिलक्षणाः। 'या वा पुनर्मया श्रावकाणामित्यादि'। प्रतिपदित्यार्यमार्गः। आर्यो ह्यनास्रवः। नैर्याणिकीति। 'क्षीणास्रवस्येत्यादि'। प्रहीणक्लेशस्य सतः। इमे आस्रवाः क्लेशा न प्रहीणा इति। इत्थं शास्तृसम्पत् स्वपरयोर्यथासम्भवं ज्ञानप्रहाणसम्पत्प्रकर्षप्राप्तिरिति चत्वारि वैशारद्यानि।

—अर्थविनिश्चयसूत्रतः।

3. वनं छिन्दथ मा रुक्खं वनतो जायती भयं।
छेत्वा वनञ्च वनथञ्च निब्बना होथ भिक्खवो॥

—इति धम्मपदे-२०/११ विवृतः।

---

१. कातर्य्यं—क।　　२. सर्वा—क, ख।

समुद्रेण जिता सर्वे तीर्था (हि) जलसम्भवाः ।
आदित्यतेजोविजिता[१] सर्वे च[२] ग्रहतारकाः ।। २६ ।।

नित्या जिता अनित्येन[३] दारिद्र्यं दानसम्पदा ।
शाठ्यं च मार्दव जितं[४] सत्येनानृतिको हृतः ।। २७ ।।

भूतेन निर्जितोऽभूतो[५] वह्निना तरुसम्पदः ।
पिपासा विजिता तोयैर्जिघित्सा[६] भोजनैस्तथा [1]।। २८ ।।

## वीर्यप्रशंसा

सिंहेन विजिताः सर्वे मृगाः सत्त्वाधिकाश्च ये ।
सन्तापेन महेच्छा च जिता नित्यं प्रकीर्त्यते ।। २९ ।।

दया प्रशस्यते नित्यमदया नैव शस्यते ।
वीर्येण निर्जितं सर्वं [2]कौसीद्यं मोहवर्धनम् ।। ३० ।।

## तत्त्वदर्शिपुरुषप्रशंसा

ज्ञानाधिकैः सदा दान्तैः पुरुषैस्तत्त्वद(र्शि)भिः ।
विजिताः क्रूरकर्माणो मिथ्यावादाधिका नराः ।। ३१ ।।

बुद्धेन निर्जिताः सर्वे तीर्थ्याः कुटिलवादिनः ।
असुरा विजिता देवैर्धर्मतेयं व्यवस्थिता ।। ३२ ।।

।। इति जितवर्गः प्रथमः ।।

---

1. नापनेयमतः किञ्चित् प्रक्षेतव्यं न किञ्चन ।
 द्रष्टव्यं भूततो भूतं भूतदर्शी विमुच्यते ।।
 —अभिसमयालङ्कारे–५/२१ ।

2. "कुशलधर्मेषु अनुत्साहः कौसीद्यम्" ।
 —इति अभिधर्मकोशे–२/२६ विवृतः ।

---

१. तेजसा–क. ख पाठोऽयं छन्ददृष्ट्या अशुद्धः ।
२. सर्वाश्च–क । 'ख' पुस्तके किञ्चिदपि नास्ति ।
३. स्तथानित्या–क ।
४. वैर्जितं–क, ख ।
५. तोभूतो–क, ख ।
६. जिघत्सा–क ।

## (२) धर्मोपदेशवर्गः

**गुरुः कीदृग्भवेत् ?**

> यो हि देशयते धर्मं क्षेमं निर्वाणगामिनम् ।
> स सर्वबन्धनच्छेत्ता गुरुर्भवति देहिनाम् ।। १ ।।

> छित्वा[१] मोहमयं पाशं[२] यो हि देशयते शिवम् ।
> सन्मार्गदेशकः प्रोक्तो दुर्मार्गविनिवारकः ।। २ ।।

**धर्मस्य प्रवरत्वम्**

> येन [1]धर्मेण मनुजास्तरन्ति भवसागरम् ।
> सद्धर्मप्रवरः प्रोक्तो न धर्मो लौकिको हि सः ।। ३ ।।

---

1. कामदुःखे ततोऽत्रैव धर्मज्ञानं तथा पुनः ।
शेषदुःखेऽन्वयक्षान्तिज्ञाने सत्यत्रये तथा ।। इति ।

कामधातुगत (कामावचर) दुःखमेव धर्मक्षान्तेरालम्बनम् । धर्मज्ञानेन जायमाना क्षान्तिः, धर्मज्ञानक्षान्तिः । दुःखे धर्मज्ञानक्षान्तेरुत्पत्तेरनन्तरं धर्मज्ञानं कामावचरदुःखालम्बनं जायते ।

दुःखे धर्मज्ञानस्यानुपदम् एव दुःखेऽन्वयक्षान्तिः अन्वयज्ञानक्षान्तिश्च जायेते समस्ताऽऽलम्बने रूपाऽऽरूप्यधातुगत दुःखे । दुःखेन्वय ज्ञानत उत्पत्तिमत्त्वादियं क्षान्तिः दुःखेऽन्वयज्ञान-क्षान्तिरुच्यते ।

दुःखसत्याद्यथा क्षान्तिद्वयं ज्ञानद्वयं च उत्पद्येते, तथैव शेषे सत्यत्रयेऽपि । दुःखेन्वयज्ञानानन्तरं कामावचर-समुदये धर्मज्ञानक्षान्तिरुत्पद्यते, तस्याश्च समुदये धर्मज्ञानं, ततः अन्वयज्ञानक्षान्तिः समुदयेऽन्वय ज्ञानं च ततः । इत्थं निरोधसत्ये, मार्गसत्येऽपि योज्यम् ।

—इति आचार्यवसुबन्धुना उक्तम्–अभिधर्मकोशे-६।२६ ।

---

१. छित्वा–क ।   २. पाशैः–क ।

[1]क्षेत्राणीमानि चत्वारि विद्यन्ते यस्य देहिनः ।
तस्येदं सफलं जन्म कथितं मार्गदेशकैः ॥ ४ ॥

सकलेन्द्रियतां प्राप्य लब्ध्वा[1] बुद्धस्य शासनम् ।
यो न धर्मरतो मर्त्यः स पश्चादनुतप्यते ॥ ५ ॥

## यमसायुज्यम्

व्यासक्तमनसां नित्यं नित्यं कामगवेषिणाम्[2] ।
पुत्रदारप्रसक्तानामन्तकोऽभ्येति[3] देहिनाम् ॥ ६ ॥

## चित्तस्य वशीकरणम्

सङ्कल्पदोषमनसं तैस्तैर्दोषैः[4] समाकुलम् ।
चित्तं नयत्युपायेन चित्तबद्धा हि देहिनः ॥ ७ ॥

दुर्दमस्यातिचण्डस्य सिद्धि[5]प्रेप्सोर्विशेषतः ।
न चित्तस्य वशं गच्छेत् शत्रुभूतं हि तन्नृणाम् ॥ ८ ॥

सश्रुतेन[6] सुदिष्टेन भावितेनाप्यनेकशः[7] ।
धर्मेण शाम्यते चित्तं जालिनेव यथा हयः ॥ ९ ॥

## सद्धर्मश्रवणफलम्

सद्धर्मश्रवणं कृत्वा[8] पापाद् विरमते पुमान् ।
श्रेयसे प्रतिपत्तिं च नित्यमेवोपपद्यते ॥ १० ॥

---

1. सत्यान्युक्तानि चत्वारि दुःखं समुदयस्तथा ।
निरोधो मार्गः एतेषां यथाभिसमयं क्रमः ॥
—अभिधर्मकोशे–६।२ ।

सर्वप्रथमं दुःखसत्यस्य साक्षात्कारो भवति, ततः समुदयसत्यस्य, ततो निरोधसत्यस्य, ततो मार्गसत्यस्य । एवं (१) पञ्च उपादानस्कन्धाः दुःखसत्यम् । (२) सास्रव-धर्माणां हेतुः समुदयसत्यम् । (३) प्रतिसंख्यानिरोधः ( २।५५ ) निरोधसत्यम् । (४) शैक्षा अशैक्षा धर्मा मार्गसत्यम् । एतेषां सत्यानां ज्ञानेनैव जन्मनः साफल्यं भवति ।

---

१. त्वब्धा–क । २. निवेशिना–क ।
३. कोन्येति–क । ४. दोषः–क ।
५. सिद्ध–क । ६. सश्रुतोन–क ।
७. भाषिते–क । ८. श्रुत्वा–क ।

सद्धर्मश्रवणं कृत्वा[१] मनः प्रह्लादमृच्छति[२] ।
कुशलं चास्य सुमहत् सन्धाने[३] सम्प्रतीक्षते[४] ॥ ११ ॥

श्रुत्वा भवति धर्मात्मा श्रुत्वा पापं न कुर्वते ।
श्रुत्वा कर्मफलं ज्ञात्वा[५] निर्वाणमधिगच्छति ॥ १२ ॥

श्रुत्वा वेदयते धर्मं श्रुत्वा बुद्धः प्रसीदति ।
श्रुत्वा धर्मं विमोक्षाय यतते पण्डितो नरः ॥ १३ ॥

धर्मलक्षणतत्त्वज्ञः श्रुत्वा भवति मानवः ।
तस्माच्छ्रुत्वा प्रयत्नेन बुद्धिः कार्या[६] प्रयत्नतः ॥ १४ ॥

श्रुत्वा संसारविमुखां कथां सुगतदेशिताम् ।
प्रहाय तृष्णां विविधां प्रयाति पदमव्ययम् ॥ १५ ॥

चतुर्विधां [1]प्रत्ययितां धर्माणां चोदमव्ययौ[७] ।
श्रुत्वा तां[८] ज्ञायते सर्वां[९] पुमान् श्रद्धाविभावितः ॥ १६ ॥

[2]स्कन्धायतनधातूनां यदेतल्लक्षणद्वयम् ।
श्रुत्वा तज्ज्ञायते सर्वं तस्मात् धर्मपरो भवेत् ॥ १७ ॥

---

1. चत्वारः प्रत्यया हेतुश्चालम्बनमनन्तरम् ।
तथैवाधिपतेयं च प्रत्ययो नास्ति पञ्चमः ॥
—मूलमाध्यमिककारिकायाम्–१/४ ।

2. **स्कन्धाः**—
—रूपस्कन्धो हि नेत्राद्या दशायतनधातवः ।
धर्मसंज्ञे त्रयस्कन्धाः साऽविज्ञप्तिर्ध्रुवत्रयाः ॥
—अभिधम्मदीपे ।

—सर्वकार्यशरीरेषु मुक्ताङ्गस्कन्धपञ्चकम् ।
सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृताम् ॥
—शिशुपालवधस्य, द्वितीयसर्गे ।

—रूप वेदना विज्ञान संज्ञा संस्काराः पञ्चस्कन्धाः । तत्र विषय प्रपञ्चो रूप-

---

१. श्रुत्वा–क । २. मर्छति–क ।
३. समहत्सत्ताने–क । ४. प्रति–क ।
५. सत्वा–ख । ६. कर्म्मा–क ।
७. चोदयात्ययं–क । ८. तं–क ।
९. सर्वं–क ।

प्रबला ये त्रयो दोषाः सर्वसंसारबन्धनाः ।
ते प्रणश्यन्त्यशेषेण[1] सद्धर्मश्रवणेन वै ॥ १८ ॥

प्रवृत्तेर्लक्षणं कृत्स्नं निवृत्तेश्चाप्यशेषतः ।
श्रुतिमांस्तत् प्रजानाति तस्माच्छ्रुतमनुत्तमम् ॥ १९ ॥

मृत्युकालोपपन्नस्य वेदनार्तस्य[2] देहिनः ।
न व्यथा श्रुतमालम्ब्य स्वल्पापि हृदि जायते ॥ २० ॥

---

स्कन्धः । तजज्ञान प्रपञ्चो वेदनास्कन्धः । आलयविज्ञानसन्तानो विज्ञानस्कन्धः । नामप्रपञ्चः संज्ञास्कन्धः । वासनाप्रपञ्चः संस्कारस्कन्धः । एवं पञ्चधा परिवर्तमानो ज्ञान-सन्तान एवात्मा इति बौद्धाः । इति तट्टीकायां मल्लिनाथः ।

**आयतनानि**—पञ्चेन्द्रियाणि[3] शब्दाद्या विषयाः पञ्चमानसम् ।
धर्मायतनमेतानि[4] द्वादशायतनानि च ॥
—षड्दर्शनसमुच्चयः–८ ।

—दुःखाद्यार्यसत्यसंलग्नान्येवायतनानि । धर्मायतनमिति धर्मप्रधानमायतनं चैत्यस्थानमिति । एतानिन्द्रियादीनि द्वादशः । जातिजरामरणभवोपादनतृष्णावेदनास्पर्शनामरूपविज्ञानसंस्काराअविद्यारूपाणि द्वादशायतनानि चेति ।
—चातुर्वर्ण्यशिक्षा–पृ० १०८ ।

**धातवः**—धातवोऽष्टादश स्मृताः ।

एकेन स्कन्धाऽऽयतन-धातुना सर्वसंग्रहः ।
परभावविद्युक्तत्वात् स्वभावेनैव संग्रहः ॥

एवम् अष्टादश–धातवः परिगण्यन्ते । षट् चक्षुरादीनि इन्द्रियाणि, षट् चक्षुर्विज्ञानादीनि विज्ञानानि, षट् रूपादयो विषयाः ( आलम्बनानि ) च । सर्वे संस्कृतधर्माः स्कन्धेषु (१/७) सर्वे सास्रवाः धर्माः उपादानस्कन्धेषु (१|८), संगृहीताः । सर्वे च धर्मा आयतनेषु धातुषु च संगृहीताः ।

स्कन्धेषु आयतनेषु धातुषु चेति त्रिषु सर्वे एव धर्माः संग्रहं गताः । एको धर्मः परधर्मेण विसदृशः, अत एव स्वसदृशेन धर्माणां संग्रहोऽत्र कृतः । तथाहि चक्षुरिन्द्रियं रूपस्कन्धे संग्रहीतं यतो रूपं स्वभावेन

---

१. प्रक्षाश्यन्त्य–क । २. नातस्य–क, ख ।
३. सर्वदर्शनसंग्रहे—पृ० १०१ ।
४. धर्माः सुखदुःखादयस्तेषामायतनं गृहं शरीरमित्यर्थः ।
—गुणरत्नटीकायाम्–पृ० ३१ ।

सम्यग्ज्ञानेन ये दग्धाः [1]क्लेशवृक्षाः समन्ततः ।
न तेषामुद्भवो भूयः कदाचिदुपलभ्यते ॥२१॥

अप्रमादविदग्धं हि श्रुतं सर्वं सुखोदयम् ।
श्रेयसश्च[१] श्रुतं मूलं तस्माच्छ्रुतपरो भवेत् ॥२२॥

सद्धर्मश्रवणं श्रुत्वा वृद्धांश्चोपास्य पण्डितः ।
प्रयात्यनुत्तमं स्थानं जरामरणवर्जितम् ॥२३॥

धर्मेण वर्तते श्रुत्वा दुःखान्मुच्येत[२] वै यथा ।
श्रुत्वा भवति मैत्र्यात्मा तस्माच्छ्रेयः परं श्रुतम् ॥२४॥

कायवाङ्मनसां बुद्धिः श्रुत्वा भवति देहिनाम् ।
तस्मात् सद्बुद्धिकामो यस्तेन श्रोतव्यमादरात् ॥२५॥

श्रुत्वा भावं समाश्रित्य दृढवीर्यपराक्रमम्[३] ।
तरन्ति पुरुषास्तूर्णं त्रिभव विपुलं महत् ॥२६॥

श्रुत्वा यः पुरुषः सर्वे[४]र्धनवानभिजायते ।
अश्रुतार्थधनैर्युक्तं दरिद्रं प्राहुस्तं बुधाः ॥२७॥

### सद्धर्मनाशफलम्

सद्धर्मधननष्टस्य गुरुणा वर्जितस्य च ।
विफलं जीवितं चेष्टं पापैरुपहतस्य च ॥२८॥

---

तत्सदृशम् । चक्षुषां वेदनया तादृशं सादृश्यं नास्ति तेन वेदनास्कन्धेऽस्या संग्रहः ।

—अभिधर्मकोशस्य धातुनिर्देशे--१७ १८ ।

1. यथाऽऽक्षेपं क्रमाद्वृद्धः सन्तानः क्लेशकर्मभिः ।
परलोकं पुनर्यातीति अनादि भवचक्रकम् ॥

—अभिधर्मकोशस्य लोकधातुनिर्देशे-१९ ।

—अविद्यास्मिता रागद्वेषाभिनिवेशाः क्लेशाः ।

—योगसूत्रे-२/१ ।

---

१. श्रेयसाश्च–क ।
२. दुखादिमुच्यते–क, ख ।
३. पराक्रमाः–ख ।
४. सर्वो–क ।

### प्रमादादीनामनिष्टफलसाधनत्वम्

प्रमादिनः [1]कुसीदस्य[१] पापमित्रस्य देहिनः।
जीवितं[२] निष्फलं दृष्टं बीजमुप्तं यथोसरे[३] ॥२९॥

### शास्त्रप्रामाण्यम्

[2]श्रुतदृष्टिविनिर्मुक्तमर्थमाहुर्विचक्षणाः ।
न चक्षुर्भ्यां विनिर्मुक्तमर्थमित्यभिधीयते ॥३०॥

### धर्मसेवनाग्रहः

यो हि धर्मं परित्यज्य अधर्ममनुतिष्ठति।
स भैषज्यं परित्यज्य व्याधिमेवोपसेवते ॥३१॥

सेवतां सेवतां पुंसां धर्मो भवत्यनेकशः।
वर्षाणां समवायेन यथोद्यानं[४] प्रवर्धते[५] ॥३२॥

इह वज्रासने भूमिर्न[६] संसारेऽन्यथा भवेत्।
बोधिचित्तसमुत्थानं बोधिप्राप्तिस्तथोत्तमा ॥३३॥

---

1. कुसीदस्य भावः कौसीद्यम्। जितवर्गे (३०) अस्योपरि विवेचनमस्ति।
2. श्रूयते स्म यत् तत् श्रुतं बौद्धशास्त्रं वा।

—'श्रुतं मे गोपाय' इत्यत्र अभिप्रायः।

—चक्षुः श्रोतमनोविज्ञानानुभूतं त्रिभिश्चयत्।
तद् दृष्ट श्रुत विज्ञात-मतं उक्तं यथाक्रमम् ॥

एवं चक्षुर्विज्ञानानुभूतं दृष्टम् उच्यते, श्रोत्रविज्ञानानुभूतं श्रुतम्, मनोविज्ञानानुभूतं विज्ञानम्, चक्षुरादिमनोविज्ञानपर्यन्तेन त्रयेणाऽनुभूतं च मतम्।
—अभिधर्मकोशस्य कर्मनिर्देशे-७५ ।

---

१. कुशोदस्य—क। २. जीविते—क।
३. मुष्टर्यथोषर—क। ४. यथोद्यानां—ख।
५. प्रवर्त्तते—क, ख। ६. भूमिना—क, ख।

धर्मचारी प्रशान्तात्मा कायोत्थायी[1] समाहितः।
अवश्यं शुभभागीस्यात्[2] स प्रमादेन वञ्चितः ।।३४।।

**ज्ञानसेवनाग्रहः**

तस्माज्ज्ञानगुणान्मत्वा ज्ञानं सेवेत पण्डितः।
नह्यज्ञानेन संयुक्तं पुमान् कश्चित् प्रतिभवेत् ।।३५।।

**धर्मानुसारिणी श्रद्धा**

धर्मानुसारिणी श्रद्धा यथा याति सुखावहा।
सातिदुर्गतिसन्यक्ता[3] व्यसनेषु महद् बलम् ।। ३६ ।।

प्रदीपकल्पा तमसि व्याधितानामिवौषधम्।
अर्थानां नेत्र[4]भूता सा दरिद्राणां महद्बलम् ।। ३७ ।।

भवार्थैर्ह्रियमाणानां पूर्वभूता सुखावहा।
प्रमादमदमत्तानां सा प्रमादविघातिका ।। ३८ ।।

**शान्तपदप्राप्तेः फलम्**

स हि यत्तत्पदं शान्तं[5] निर्वाणमुनिभिर्वृतम्[6]।
तत् प्रापयत्यखेदेन सम्यग्ज्ञानपुरःसरम्[7] ।। ३९ ।।

।। इति धर्मोपदेशवर्गः द्वितीयः ।।

१. कायोत्थायि–क, ख।
२. भागिस्यान्त–क, ख।
३. दुर्गतिसंसता–क, ख।
४. चक्षु–क, ख।
५. शांतंयो–क, ख।
६. वाणैर्मुनिभिर्वतं–क, ख।
७. सरां–क, ख।

## (३) कायजुगुप्सावर्गः

**कायस्य स्वरूपनिरूपणम्**

**सत्कारैर्बृंहणैर्मांसैरपि शय्यासनादिभिः।**
**न स्वीकर्तुमयं [1]कायः कदाचित् केनचित् कृतः ॥ १ ॥**

---

1. **चतुर्भिः** सुख–कायाभ्यां पञ्चभिश्चक्षुरादिमान्।
**सौमनस्यी** दुःखी तु सप्तभिः स्त्रीन्द्रियादिमान् ॥

**अष्टभिः** एकादशभिराज्ञाऽऽज्ञाताविसान्वयः।
आज्ञास्यामीन्द्रियोपेतः त्रयोदशभिरन्वितः ॥

**कायविज्जीवितमनः** सर्वाल्पैर्निःशुभोऽष्टभिः।
आरूप्येषु तथा बाला उपेक्षाऽऽयुर्मनः शुभैः ॥ इति

एवं सुखकायेन्द्रियाभ्याम् एकतरेण युक्तो जीवित मन उपेक्षेन्द्रियैश्चापि युक्तो भवति। चक्षुरादिष्वेकतमेन युक्तः जीवित मन उपेक्षा कायेन्द्रियैरपि युक्तो भवति। सौमनस्येन्द्रियेण युक्तोऽपि पञ्चभिः (सौमनस्य + जीवित + मनः + उपेक्षा + काय)। दुःखेन्द्रिययुक्तः सप्तभिः (दुःख + जीवित + मनः + काय + सुख + सौमनस्य + उपेक्षा)।

स्त्रीपुरुषेन्द्रियैकतरेण युक्तोऽष्टाभिः (७ पूर्वं + १ स्त्री····) दौर्मनस्य युक्तोऽपि तथैव। श्रद्धाद्येकतमेन युक्तस्तदन्यैः चतुर्भिः (जीवित + मनः + उपेक्षा + काय) युक्तो भवति। आज्ञाऽऽज्ञातीविन्द्रियान्यतरेण युक्तो दशभिरन्यैः (जीवित + मनः + सुख + सौमनस्य + उपेक्षा + ५ श्रद्धादि)। जीवित + मनः + काय + सुख + दुःख + सौमनस्य + उपेक्षा + ५ श्रद्धादि) सर्वैः त्रयोदशभिः।

उच्छिन्नकुशलमूलः न्यूनातिन्यूनैः अष्टभिः काय + ५ वेदना (सुख + दुःख + सौमनस्य + दौर्मनस्य + उपेक्षा + जीवित + मनः)। आरूप्यधातौ जाताः पृथग्जनाः उपेक्षा + जीवित + मनः + ५ शुभेति अष्टभिर्वञ्चितो भवति।

—इति निगदितं–वसुबन्धुना अभिधर्मकोशे–२/१७-२०।

### कायस्य रिपुत्वम्

कृतघ्नस्याविदक्षस्य[१] नित्यं रन्ध्रप्रहारिणः ।
कः कायस्य रिपोरर्थं पापं कुर्याद् विचक्षणः [1]॥ २ ॥

रोगानी[२]तमनर्थानां बहूनां[३] भाजनं[४] तथा ।
अशुच्यङ्गस्य निकरं कायमित्यभिधीयते[५] ॥ ३ ॥

### अविज्ञेयं मरणं जीवितञ्च क्षणिकम्

उपस्थितमविज्ञेयं मरणं तत्त्वचिन्तकैः ।
जीवितं च क्षणादूर्ध्वं न गच्छति निरूप्यते ॥ ४ ॥

### कायस्य हेयत्वम्

आयुष्कमर्थनिर्माणमेतं[६] कायं त्यज्ययम् ।
अपि विद्धस्तथा शेते काष्ठलोष्ठसमो भुवि ॥ ५ ॥

क्षणे क्षणेऽपि कायोऽयं जीर्यते न निवर्तते ।
तथा यौवनमदैर्बाला मुह्यन्ते (मुग्धचेतसः) ॥ ६ ॥

धनधान्यमदैर्मत्ताः कुर्वन्त्यहितमात्मनः ।
तन्नाशमुपयात्येवं स च पापेन दह्यते ॥ ७ ॥

### अधार्मिकनिन्दा

न मनुष्या मनुष्यास्ते येभ्यो धर्मो न रोचते ।
न मार्गे च स्थितास्तत्त्वे[७] निर्वाणपुरगामिके ॥ ८ ॥

---

1. कायेन कुरुते पापं मनसा संप्रधार्य तत् ।
अनृतं जिह्वया चाह द्विविधं कर्म पातकम् ॥

—इति वा० रामायणे—२।१०९।२१ विवृतः ।

---

१. विदाक्षस्य—क, ख ।
२. रोगनि—क, ख ।
३. बहुना—ख ।
४. भाञ्जन—ख ।
५. इत्यभिधी—क ।
६. मेते—क, ख ।
७. मार्गेनस्थितासत्वे—क, मार्गेणास्थिता—ख ।

**मनुष्ययोनेः भवसागरतरणोपायः**

कथं प्राप्य हि मानुष्यं श्रेयसामालयं महत् ।
न ज्ञानप्लवमारूह्य तरन्ति भवसागरात् ॥ ९ ॥

**जीवनस्य क्षणिकता**

विद्युदालातसदृशं गन्धर्वनगरोपमम् ।
सदा तद्[१] याति रभसं जीवितं सर्वदेहिनाम् ॥ १० ॥

शरीरे न मदं कुर्यात् क्षणिके भङ्गुरे सदा ।
इत्वरे चपलेऽसारे जरामरणभीरुके ॥ ११ ॥

ध्यायिनान्नगतं ह्येतत् शोकानामालयो महान् ।
शुभाशुभानां क्षेत्रं च शरीरमवधीयते ॥ १२ ॥

**सफलजीवनरहस्यम्**

ज्ञानशीलदयादानैर्यस्य गात्रं विभूषितम् ।
तस्य सत्त्वैकसारस्य शरीरं सफलं मतम् ॥ १३ ॥

**धातुज्ञानात् मोक्षः**

[1]धातूनां मारकात् सर्वमिदं मुक्तं कलेवरम् ।
शरीरधातु विचयात् साक्षाद् भवति नेतरात् ॥ १४ ॥

शरीरधातुं यो मुक्त्वा धातुष्वन्येषु[२] रज्यते ।
स धातुकत्वशिक्षातो दुःखेनैव प्रमुच्यते ॥१५॥

---

1. सुवर्णरुप्यताम्राणि हरितालं मनःशिला ।
गैरिकअञ्जनकासीस सीसलोहसहिङ्गुलम् ॥

हेमताररनागाश्च ताम्ररङ्गे च तीक्ष्णकं ।
कांस्यकं कान्तलोहं च धातवो नवकीर्तिताः ॥

—शब्दस्तोममहानिधितः ।

—अस्य व्याख्यानं पूर्वमपि ( २।१७ ) प्रपञ्चितम् ।

---

२. सदातं—क, ख ।    २. धातुष्वमेषु—क, ख ।

[1]हिरण्यधातुर्न तथा दुःखशान्त्यै[१] हि वर्तते।
शरीरधातुतत्त्वज्ञो यथा दुःखात् प्रमुच्यते ॥१६॥

दुःखाद् दुःखोदयस्तेन[२] दुःखी न परिरक्ष्यते।
प्रवीणो[३] राजचौरादिभयैः सर्वैरूपद्रुतम्[४] ॥१७॥

तस्मादनर्थकं नित्यं दूरतस्तं विवर्जयेत्।
वर्जनात् सुखितो दुष्टसङ्ग्रहाद् दुःखितः पुमान् ॥१८॥

शरीरधातुतत्त्वज्ञो धातुलक्षणतत्त्ववित्।
ध्यानाध्ययनसंसक्तो दहति क्लेशपर्वतान् ॥१९।

तस्माच्छरीरजान् धातून पण्डितः प्रत्यवेक्षते[५]।
तेषां स्वलक्षणं ज्ञात्वा मोक्षो भवति देहिनाम् ॥२०॥

॥ इति कायजुगुप्सावर्गस्तृतीयः ॥

1. हिरण्यं रजतं कांस्यं ताम्रं सीसकमेव च।
रङ्गमायसं रैत्यञ्च धातवोऽष्टौ प्रकीर्तिताः॥
सुवर्णं रजतं ताम्रं लौहं कुप्यञ्च पारदम्।
रङ्गञ्च सीसकञ्चैव इत्यष्टौ देवसंभवाः॥
—शब्दस्तोममहानिध्यात् उद्धृतोऽस्ति।

१. शांताय–क, ख। २. दुःखोदुःखोद्य–क, ख।
३. प्रवीणं–क, ख। ४. सर्वो–ख।
५. प्रत्यवेक्ष्यते–क, ख।

## (४) परिवर्तवर्गः

**कस्य कालः परिवर्तते**

[1]कामैरेवावितृष्णस्य[१] तृष्णया तृषितस्य[२] च ।
चञ्चलेन्द्रियचित्तस्य कालोऽयं [2]परिवर्तते ॥ १ ॥

अनित्यध्येयता[३] यस्य सुखसक्तस्य[४] देहिनः ।
स्त्रीदर्शनेन मत्तस्य कालोऽयं परिवर्तते ॥ २ ॥

जातिमरणवश्यस्य मोहितस्य च तृष्णया ।
बालस्य तु जनस्यास्य कालोऽयं परिवर्तते ॥ ३ ॥

[3]गतिचारकबद्धस्य उद्वेगवशगस्य[५] च ।
प्रमादविषमूढस्य कालोऽयं परिवर्तते ॥ ४ ॥

औद्धत्यादिप्रसक्तस्य[६] गात्रशोभारतस्य च ।
लाभैरतृप्तमनसः कालोऽयं परिवर्तते ॥ ५ ॥

---

1. पुंसो या विषयापेक्षा स काम इति भण्यते ।
2. विनिमयः, युगान्तकालः, ग्रन्थविच्छेदः, अध्यायादिश्च परिवर्तनम् ।
3. नरकादि-स्वनामोक्ता गतयः पञ्च तेषु ताः ।
   अक्लिष्टाव्याकृता एव सत्त्वाख्या नान्तराभवः ॥ इति ।

   अर्थात् तेषु त्रिषु धातुषु नरक-प्रेत-तिर्यङ्-मानुष-देव-नामभिरुक्ताः पञ्चगतयः । ताश्च पञ्चगतयो विपाकतोऽक्लिष्टाव्याकृता एव सन्ति । सत्त्वाख्या सत्वनिवासलोका अन्तराभवः च न गतिषु परिगण्यन्ते । अत एव गतीनां संख्या धातूनां स्थानक्रमेण न पञ्चाधिका ।

   —अभिधर्मकोशस्य लोकधातुनिर्देशे–४ ।

---

१. वितृतस्यष्णया–क ।
२. तृषी–क ।
३. अनित्यताध्येय–क, ख ।
४. शक्तस्य–ख ।
५. नोद्वेग–क, ख ।
६. व्याद्धिप्रशक्त–ख ।

[1]पञ्चबन्धनबद्धस्य षड्भिर्व्यामोहितस्य च।
त्रैलोक्यविधिमूढस्य कालोऽयं परिवर्तते ॥ ६ ॥

विनिपातानभिज्ञस्य वितर्कोपहतस्य च।
जनस्य सक्तमनसः कालोऽयं परिवर्तते ॥ ७ ॥

तत्कालरमणीयेषु परिणामहितेषु च।
कामेषु सक्त[१]मनसः कालोऽयं परिवर्तते ॥ ८ ॥

पूर्वदुःखानभिज्ञस्य दिव्यसौख्यरतस्य च।
विप्रयोगानभिज्ञस्य कालोऽयं परिवर्तते ॥ ९ ॥

[2]कर्मजालेन[२] बद्धस्य[३] मनस्येव विचेष्टिनः।
सत्पथात् परिभ्रष्टस्य कालोऽयं परिवर्तते ॥ १० ॥

भवदोषानभिज्ञस्य[४] तृष्णया[५] मूढचेतसः।
मोहान्धकारमग्नस्य कालोऽयं परिवर्तते ॥ ११ ॥

---

1. रूपरागः (रञ्जनं=रागः), आरूप्यरागः, औद्धत्यं, मानः, मोहश्चेति पञ्च-विधानि ऊर्ध्वभागीयानि संयोजनानि। ऊर्ध्वभागीयं यतो न निम्नधातो तदुपभजनम्। वेदना त्रयवशात् त्रीणि बन्धनानि। रागोऽनुशेते सुखवेदनायां, द्वेषो दुःखवेदनायां, उपेक्षावेदनायां (२।८) मोहश्च।
—अभिधर्मकोशे-५।४५।

2. कर्मजं लोकवैचित्र्यं चेतना तत्कृतं च तत्।
चेतना मानसं कर्म तज्जे वाक्याय कर्मणी ॥ इति।

कर्माणि हि कुशलाऽकुशलादीनि भवन्ति, तेभ्यः एव लोके वस्तूना-मुत्पादः। इत्थं हेतुवैचित्र्यात् फलवैचित्र्यम्। कर्म च द्विविधं चेतना, चेतनाकृतं च। कायिकानि वाचिकानि मानसानि च कर्माणि, "तत्र यच्चेतनेत्युक्तं कर्म तन्मानसं स्मृतम्"। —मध्यमकावतारे।

मानसं कर्म चेतनेत्यभिधीयते, चेतयित्वा वाचा कायेन वा कर्म आरभते, अत एव वाक्कर्म कायकर्म च तज्जे, तत् उत्पन्ने।
—अभिधर्मकोशस्य कर्मनिर्देशे—१।

---

१. शक्त–ख।
२. जालं–क, ख।
३. विद्धस्य–क, ख।
४. दोषो–क, ख।
५. तृष्णाविमद–क, ख।

कामैकपाशबद्धस्य निःसहायस्य देहिनः ।
देवीगणविमूढस्य कालोऽयं परिवर्तते ॥ १२ ॥

इन्द्रियाद् व्यपकृष्टस्य[१] सत्पथभ्रामितस्य च ।
त्रैधातुकरसज्ञस्य कालोऽयं परिवर्तते ॥ १३ ॥

[1]संवरासंवरज्ञस्य व्यापादबहुलस्य च ।
नष्टसम्बुद्धमार्गस्य कालोऽयं परिवर्तते ॥ १४ ॥

हिताहितवहिर्गस्य[२] कार्याकार्यजडस्य च ।
क्रीडाबाल[2]सदृशस्य कालोऽयं परिवर्तते ॥ १५ ॥

[3]नदीप्रस्रवणोच्चेषु[३] वनोपवनभूमिषु ।
(सं)क्रीडातत्परस्यास्य कालोऽयं परिवर्तते ॥ १६ ॥

विमानगिरिपृष्ठेषु धर्माकरवनेषु च ।
रमतः कामभोगेषु कालोऽयं परिवर्तते ॥ १७ ॥

कर्मधर्म[4]विपाकेषु निरासक्तस्य[४] देहिनः ।
केवलाहारसक्तस्य[५] कालोऽयं परिवर्तते ॥ १८ ॥

---

1. चक्खुना संवरो साधु साधु सोतेन संवरो ।
   घाणेन संवरो साधु साधु जिह्वाय संवरो ॥
   कायेन संवरो साधु साधु वाचाय संवरो ।
   मनसा संवरो साधु साधु सब्बथ संवरो ।
   सब्बत्थ संवुतो भिक्खु सब्बदुःखा पमुच्चति ॥
   —धम्मपदस्य भिक्खुवग्गे–१-२ ।

—अस्य व्याख्यानं पूर्वमपि (१।१६) प्रपञ्चितम् ।

2. समानस्य इति छन्दः शुद्धिः ।
3. शून्यमनित्यं क्षणिकं बालाः कल्पेन्ति संस्कृतम् ।
   नदीदीपबीजदृष्टान्तैः क्षणिकार्थो विकल्प्यते ॥
   —लङ्कावतारसूत्रस्य क्षणिकपरिवर्ते (९) विवृतः ।
4. स च निरोधोऽसंज्ञिक समापत्तेरेव 'विपाकः' ।

---

१. द्रापकृष्णस्य–ख ।
२. वहिर्ज्ञस्य–क, ख ।
३. प्रह्मणो–क ।
४. निराकरणस्य–क, ख ।
५. शक्तस्य–ख ।

**शरीरस्थितस्याऽपि शरीरानभिज्ञता**

कर्मणायुः[1] परिश्रान्तं त्रैधातुकमिदं सदा।
भ्रमन्ति[2] चक्रवन्नित्यं न च विन्दन्ति बालिशाः ॥ १९ ॥

**जगतः दोषानभिज्ञता**

विनिपातोच्छ्रयमयं यो नामारोहते[3] जगत्।
न च दोषावधेयत्वं[4] प्रकुर्वन्ति विमोहिताः ॥ २० ॥

**धीरस्य कामपरिवर्जनं सौख्यहेतुः**

एतत् (तु) परमं सौख्यं यत् कामपरिवर्जनम्।
वीतकांक्षस्य धीरस्य गतशोकस्य तापिनः ॥ २१ ॥

**मुनीनां चरमपदप्राप्तिफलम्**

तदादिमध्यनिधने कल्याणं क्षेममुत्तमम्।
यद् प्राप्यमुनयः श्रान्ताश्चरन्ति विगतज्वराः ॥ २२ ॥

**दुःखहेतवः कामाः**

सत्कामजं भवेत् सौख्यं विनिपातगतं तु तत्।
न हि कामविशेषं च किञ्चिद् दुःखविपाकजम् ॥ २३ ॥

तस्मात् कामेषु मतिमान् न लुभ्येत्[5] कथञ्चन।
ते हि संसारदुःखानां हेतुभूताः सुदारुणाः ॥ २४ ॥

वनोपवनशैलेषु पद्माकरवनेषु च।
विभ्रान्तास्तृष्णया बालाः पतन्ति सह दैवतैः ॥ २५ ॥

---

—सौत्रान्तिकाः चतुर्विधं कथयन्ति—(१) विपाककालनियतं विपाकाऽनियतं (नियतवेदनीयम् अनियतविपाकम्), (२) विपाकनियतं विपाककालाऽनियतम् (नियतविपाकम् अनियतवेदनीयं), (३) नियतविपाकं नियतवेदनीयम्, (४) अनियतविपाकम् अनियतवेदनीयं च।

—इति अभिधर्मकोशतः।

---

१. कर्म्मवायु—क, ख।
२. भ्रमते—क, ख।
३. लामारो—क, ख।
४. दोषवधेयत्वं—क, ख।
५. ल्लुभ्येते—क, ख।

**शुभकर्मासक्तेः उपदेशः**

काञ्चनेषु ( च ) शैलेषु वैदूर्यशिखरेषु च।
क्षीयते[१] हि शुभं कर्म यतस्व[२] सह [३]दैवतैः[1] ॥ २६ ॥

कल्पवृक्षेषु रम्येषु नदीप्रस्रवणेषु च।
चरतस्तैः शुभं क्षीणं यतस्व सह दैवतैः ॥ २७ ॥

भूमिभागेषु रम्येषु रत्नाकरवनेषु च।
न शुभं ते सदा चीर्णं यतस्व सह दैवतैः ॥ २८ ॥

पञ्चात्मकेन [2]वीर्येण मनःप्रह्लादकारिणा।
हतस्य गतकालस्य यतस्व सह दैवतैः ॥ २९ ॥

**देवानां हितानभिज्ञता**

कामं संसक्त[४]मनसैर्नित्यं विषयतत्परैः।
न ज्ञायते हितं दैवैर्यदमन्त्राहितं भवेत् ॥ ३० ॥

**देवनिन्दा**

अल्पशिष्टमिदं पुण्यं च्यवनं समुपस्थितम्।
गन्तव्यमन्यत्र सुरैः सुकर्मफलभोजिभिः ॥ ३१ ॥

ये नित्यं शुभसंसक्ताः[५] कुर्वन्ति वा शुभं सदा।
तेषां विसदृशो हेतुर्मूर्खाणां[६] हि विवर्तते ॥ ३२ ॥

---

1. कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।
मा कर्मफलहेतुर्भूर्मा ते सङ्गो ऽस्त्वकर्मणि ॥
—इति श्रीमद्भगवद्गीतायाः श्लोकेन (२।४७) सह तुलनीयम्।

2. वीर्यस्य पुण्य-स्तवनात् समाधि-द्योरनन्तरम्।
पुण्यं क्रिया च तद् वस्तु त्रयं कर्मपथो यथा ॥ इति।
—अभिधर्मकोशस्य कर्मनिर्देशे–११२ विवृतः।

---

१. क्षिपंतो–क, ख।
२. यत्स्व–क, ख।
३. कर्म्मसदैवतै–क, ख।
४. संरक्त–क, ख।
५. संसक्य–क, ख।
६. हेतु मूंछानां–क, ख।

### के मृत्युं प्रतीक्षन्ते

भुक्त्वा मृत्युं प्रतीक्षन्ते[1] ते जनाः काममोहिताः ।
शुभशीलतमोऽज्ञानाः[2] सर्वदा न परायणाः ॥ ३३ ॥

भुक्त्वा मृत्युं प्रतीक्षन्ते[3] ते जनाः काममोहिताः ।
ये न कर्मविपाकस्य ज्ञानं रोषवधे रताः ॥ ३४ ॥

भुक्त्वा मृत्युं प्रतीक्षन्ते ते जनाः काममोहिताः ।
प्रज्ञापयन्ति[4] न समा[5]स्तृष्णाग्निपरिवारिताः ॥ ३५ ॥

भुक्त्वा मृत्युं प्रतीक्षन्ते[6] ते जनाः काममोहिताः ।
विप्रयोगकृतं दुःखं ये न पश्यन्ति दारुणम् ॥ ३६ ॥

भुक्त्वा मृत्युं प्रतीक्षन्ते ते जनाः काममोहिताः ।
स्त्रीजनासक्तहृदया[7] न विन्दन्ति पुनर्भवम् ॥ ३७ ॥

भुक्त्वा मृत्युं प्रतीक्षन्ते ते जनाः काममोहिताः ।
विपत्तिव्याधिशोकेभ्यो नोद्विजन्ति कथञ्चन ॥ ३८ ॥

भुक्त्वा मृत्युं प्रतीक्षन्ते ते जनाः काममोहिताः ।
ये पापमित्रसंसर्गं प्रकुर्वन्ति महारूषम् ॥ ३९ ॥

भुक्त्वा मृत्युं प्रतीक्षन्ते ते जनाः काममोहिताः ।
भावितं चेतसा[8]यैर्न[9] न च तत्त्वप्रवेशिता[10] ॥ ४० ॥

भुक्त्वा मृत्युं प्रतीक्षन्ते ते जनाः काममोहिताः ।
येन सर्वास्ववस्थासु संसारभयभीरवः ॥ ४१ ॥

भुक्त्वा मृत्युं प्रतीक्षन्ते ते जनाः काममोहिताः ।
कार्याकार्येषु ये नित्यं न सुभाषितचेतसः[11] ॥ ४२ ॥

---

१. प्रति–क, ख ।
२. तमाऽज्ञानः–क, ख ।
३. प्रति–क, ख ।
४. पंति–क, ख ।
५. समानाः–क, ख ।
६. प्रति–क, ख ।
७. शक्त–ख ।
८. चेतांसो–क, ख ।
९. येन–क, ख ।
१०. तत्त्वप्रवेक्षिमे–क, ख ।
११. शुभा–ख ।

भुक्त्वा मृत्युं प्रती[1]क्षन्ते ते जनाः काममोहिताः ।
ये न तत्त्वधियो नित्यं सर्वभूतहिते रताः ।। ४३ ।।

भुक्त्वा मृत्युं प्रतीक्षन्ते ते जनाः काममोहिताः ।
ये शरीर[2]सुखार्थेन धर्मं हिंसन्ति मोहिताः ।। ४४ ।।

**पण्डितलक्षणम्**

एकान्तमनसा[3] नित्यं शुभं कार्यं प्रयत्नतः ।
अशुभं च सदा वर्ज्यमेतत् पण्डितलक्षणम् ।। ४५ ।।

**विनिपातसाधनानि**

क्षयं[4] यातं[5] च यत् शीलं स्पृष्ट्वा यः समुपागतः ।
प्रमादावञ्चितोऽवश्यं विनिपातो भविष्यति ।। ४६ ।।

**विषयिणः परिवर्तनशीलता न तु विषयाणाम्**

गता गच्छन्ति यास्यन्ति देवेशाश्चैव सर्वतः ।
तिष्ठन्ति शिखरे[6] रम्ये[6] नानारत्नविभूषिते ।। ४७ ।।

वैदूर्यशिखरा[7] रम्यास्तथान्ये वनमालिनः[8] ।
विषयास्तादृशा[9] एव जनस्तु परिवर्तते ।। ४८ ।।

वनोपवनरम्याणि भूमिभागानि सर्वशः ।
तिष्ठन्त्यविकलान्येव जनस्तु परिवर्तते ।। ४९ ।।

वैदूर्यमयनालानि काञ्चनानि विशेषतः ।
पद्माकराणि तान्येव जनस्तु परिवर्तते ।। ५० ।।

सरांसि सरितो रम्याः पक्षिसङ्घैर्निरन्तरम्[10]।
तथैवाविकला ह्येते जनस्तु परिवर्तते ।। ५१ ।।

विमानानि रथाश्चैव हर्म्याणि[11] च तथैव च ।
तिष्ठन्त्यविकला ह्येते जनस्तु परिवर्तते ।। ५२ ।।

---

१. प्रति–क, ख ।
२. शरिर–ख ।
३. मेनसो–क, ख ।
४. क्षीणं–क, ख ।
५. तत्–क, ख ।
६. शिखरेभ्ये–क ।
७. शिखरो–क, ख ।
८. मालयः–क, ख ।
९. शिवयस्तादृशान्–क, ख ।
१०. सर्गैनित्यशरताः–क, ख ।
११. हर्म्यायानि–क, ख ।

[1]परिवर्तनं लोकस्य विषयैर्वञ्चितस्य च ।
तथापि नामलोकस्य नोद्वेगो हृदि जायते ॥ ५३ ॥

अभ्यासेन खरी[१]भूतं चित्तं संसारचारिणम् ।
येन मन्ये महद् दुःखं हृदये नैव वर्तते ॥ ५४ ॥

शूलिकेन[२] यथा बद्धाः पशवो गृहपञ्जरे ।
एकैकशो विनश्यन्ति[३] शेषाणां नास्ति सम्भ्रमः[४]॥ ५५ ॥

सुखाय कामिनामेव इयं[५] भूमिरवस्थिता ।
च्युताश्चैवोपपन्नाश्च तथामी बालिशाः सुराः ॥ ५६ ॥

**विषयोन्मुखानां मरणानभिज्ञत्वम्**

[2]प्रमादाय हताः सत्वा मृत्युः क्षणिकदुःखदः[६] ।
नावबुद्धयन्ति मरणं पशुवद् वीतसम्भ्रमाः ॥ ५७ ॥

ते पश्चाद् दीर्घमनसः कालस्य वशमागताः ।
पश्चात्तापमयो वह्निर्धक्ष्यते निष्प्रतिक्षयः ॥ ५८ ॥

दारुणं निष्प्रतीकारमवश्यं रूपदेहिनाम् ।
मरणं कालवशगं तद् विदित्वाऽऽगमं चरेत् ॥ ५९ ॥

**विप्रयोगान्ताः सर्वे संयोगाः**

समागमाः प्रियालोके वियोगाश्चाप्रियाः सदा ।
संयोगो विप्रयोगान्तो धर्मतेयं सनातना ॥ ६० ॥

क्षणे लवे मुहूर्ते च दिवारात्रौ तथाऽध्वनि[७] ।
मरणं चिन्तयेद् धीरस्तस्य नास्ति प्रतिक्रिया ॥ ६१ ॥

---

1. परिवृत्तिश्च इति शोभनः पाठः ।
2. प्रमादेन इति समीचीनः पाठः।

---

१. खरि—ख ।
२. सूलि—ख ।
३. विशस्यंते—क, ख ।
४. संभ्रमा—क ।
५. नोसुखमेवार्थमिय—क ।
६. स्वानिकयस्पशा—क, ख ।
७. ध्वनी—क ।

**गतकल्मषा एव शान्तिमधिगच्छन्ति**

स्मृतिमग्न्यां प्रशंसन्ति[१] येषां मरणसंभवा ।
श्रेयसैकपरां[२] शान्ति प्रयान्ति गतकल्मषाः ।। ६२ ।।

मृत्योरर्थमनुस्मृत्य दोषोऽयं कस्य सम्मतः[३] ।
निर्दोषं हि मनः सर्वं शान्तं भवति नित्यशः[४] ।। ६३ ।।

**तथागतैः अप्रमादपरं श्रेष्ठमुक्तम्**

अप्रमादपरं श्रेष्ठमिदमुक्तं तथागतैः ।
यन्मृत्योः स्मरणं नित्यमशुभानां[५] च वर्जनम्[1] ।। ६४ ।।

।। इति परिवर्तवर्गश्चतुर्थः ।।

---

1. पमादमनुयुञ्जन्ति बाला दुम्मेधिनो जना ।
अप्पमादंच मेधावी धनं सेट्ठं व रक्खत ।।
मा पमादमनुयुञ्जेथ मा कामरतिसन्थवं ।
अप्पमत्तो हि झायन्तो पप्पोति विपुलं सुखम् ।। इति ।
—धम्मपदे–२।२६–२७ ।

---

१. प्रसंसन्ति–ख
२. श्रमासेव्य–क, ख ।
३. समनः–क, लक्षणम्–ख ।
४. नित्यसः–ख ।
५. नित्यममशु–ख ।

# (५) अनित्यतावर्गः

## सुखं क्षयान्तम्

क्षयान्तं हि सुखं सर्वं न [1]सुखं[1] विद्यते ध्रुवम् ।
संसृजेन्न सुखं तस्मात्[2] यदीच्छेत्[3] सुखमात्मनः ॥ १ ॥

## मृत्युः सर्वानपि आकर्षति

गच्छतां तिष्ठतां चैव हसतां क्रीडतामपि ।
अविसह्यो[4] महावेगो मृत्युर्नश्यति दारुणः ॥ २ ॥

न तत्स्थ मिहामुत्र यत्रासौ प्रतिपद्यते ।
तथापि नाम संमूढा जनयित्वा वशंगतः ॥ ३ ॥

( न बालं न युवानं वा ) न स्थविरमेव वा ।
गृहस्थमगृहस्थं वा यदाऽसौ नापकर्षति ॥ ४ ॥

सुखितं दुःखितं वापि गुणवन्तं तथैव च ।
व्रतस्थमव्रतस्थं वा यदाऽसौ नापकर्षति ॥ ५ ॥

दुःशीलं शीलवन्तं[5] च (दानिनं च तथोत्तमम्) ।
राजानं चोत्तमं चापि यदाऽसौ नापकर्षति ॥ ६ ॥

दैवं वा नारकं वापि तिर्यञ्चं[6] प्रेतजं तथा ।
प्रमत्तमप्रमत्तं वा यदाऽसौ नापकर्षति ॥ ७ ॥

कामधातूपपन्नं वा रूपधातौ स्थितश्च यः ।
आरुप्यधातूपपन्नं वा यदाऽसौ नापकर्षति ॥ ८ ॥

कर्मपाशो जरादण्डो व्याधिदण्डो महावनम् ।
रक्तोपमो मृत्युरयं सत्त्वानादाय गच्छति ॥ ९ ॥

---

1. 'आत्मन' इत्यधिकः पाठः ।

---

१. सुखमात्मनं—क ।
२. तस्माद्यः—क, ख ।
३. विच्छेत्—क, ख ।
४. विषह्यो—ख ।
५. शीलवान्—क, ख ।
६. तीर्य्यंक—क ।

एवंविधे प्रतिभये मृत्यौ परमदारुणे।
( उपस्थिते प्रवर्तन्ते ) सुराः कामविमोहिताः ॥ १०॥

**पतनान्तं सर्वसुखं सन्त्यजेत्**

यद् दुःखं च्यवमानस्य देवलोकात्[१] सुरस्य च।
नरके यद्भवं दुःखं विप्रयोगपुरःसरम् ॥ ११ ॥

विषमाक्षिकसंयुक्तं यथान्नं चापि ( शोभनम् )।
( ततो ) देवगतं सौख्यं पतनान्तं विसर्जयेत् ॥ १२ ॥

क्षीणपुण्यस्य दीनस्य स्वदारैर्वर्जितस्य च।
यद् दुःखं च्यवमानस्य तस्यौपम्यं न विद्यते ॥ १३ ॥

सुकृतक्षीणमन्दस्य द्विपस्येव[२] गतत्विषः।
शाम्यति देवस्य यद्दुःखं महद्दुःखं प्रजायते ॥ १४ ॥

**देवस्यापि च्यवनम्**

तृष्णाविषयवृद्धस्य[३] शोकोपहतचेतसः।
मन्दवाग्देहचेष्टस्य देवस्य च्यवनाद् भयम् ॥ १५ ॥

**दुःखस्य विषयतरत्वम्**

यथा यथा सुखास्वादाः कामा परमवञ्चकाः।
( तथा ) तथा भवत्येव[४] तेषां दुःखं महत्तरम्[५] ॥ १६ ॥

यतमानस्य यद् दुःखं देवलोकात् प्रजायते।
तस्यान्तरेण नरकं[६] कलां नार्हति[७] षोडशीम् ॥ १७ ॥

च्यवनान्तं[८] देवलोकं मरणान्तं तदा भुवि।
दृष्ट्वा दुःखं ( भवत्येव श्रेयसे क्रियतां मनः ) ॥ १८ ॥

**सौख्यं पतनान्तम्**

पतनान्तं सदा सौख्यं नास्ति लोकस्य नित्यजाः।
तद् बुद्ध्वा[९] कारणं सर्वं श्रेयसे क्रियतां मनः ॥ १९ ॥

---

१. देवलोत्–क, ख।
२. द्विपसेव–क, दीपस्येव–ख।
३. वर्द्धस्य–क, ख।
४. जिध्यागात्–क, ख।
५. महत्तरां–क।
६. नारक–क, ख।
७. नार्घति–ख।
८. च्यवमानान्तं–क, ख।
९. बुद्धा–ख।

## सर्वं दुःखान्तम्

सर्वे क्षयान्ता निचया पतनान्ता समुच्छ्रयाः।
संयोगा विप्रयोगान्ता मरणान्तं[१] हि[२] जीवितम् [1]॥२०॥

जातस्य मरणं नित्यं न तस्यास्तीति नित्यता।
न भूताराविताने न त्रिषु धातुषु दृश्यते॥ २१॥

गर्भमेके विनश्यन्ति तथैके सूतिकागृहे।
परिसर्पणकाश्चैके तथैव (च विनश्वराः)॥ २२॥

## मरणं ध्रुवम्

उदयास्तं[३] च गमनं भास्करस्य प्रदृश्यते।
तथा जातस्य सर्वस्य स्थितं मरणमग्रतः॥ २३॥

## सर्वं सुखं क्षयान्तम्

क्षयान्तं हि सुखं सर्वं यो न विन्दति मोहधीः।
स पश्चान्मरणे प्राप्ते (दुःखाय जनिभाग्भवेत्)॥ २४॥

कुशलं कार्य- (करणं कुशली च) प्रियः सदा।
सुखं हि धर्माचरणं कथयन्ति मनीषिणः॥ २५॥

[2]अनित्यमध्रुवं सर्वं परिणामे कटुः सदा।
संसारः कथितो बुद्धैर्हेतुस्तत्त्वविचारणे[४]॥ २६॥

देवाः सुखप्रमत्ता ये तेषां सुखमशाश्वतम्।
च्यवमानस्य च यद्दुःखं देवलोकात् सुरस्य हि॥ २७॥

---

1. महाभारताद् उद्धृतमिदं पद्यं तत्रैव [ स्त्रीपर्व—११।२।३, अश्वमेधिपर्व—१४।४४।१८, शान्तिपर्व—१२।२७।२९ ] इति पर्वसु प्राप्यते।

2. 'जातिर्जरा-स्थितिरनित्यता' चेति चत्वारि संस्कृतधर्माणां लक्षणानि। अतः जाति-जातिः, जरा-जरा, स्थिति-स्थितिः, अनित्यता-अनित्यता इत्यपि तेषां संस्कृतधर्माणाम् अनुलक्षणानि। इति वसुबन्धुना निगदितम् अभिधर्मकोशे।

---

१. पाठोऽयं भ्रष्टः उभयत्रापि।
२. 'ख' पुस्तके नास्ति।
३. यास्तं—क, ख।
४. बुद्धैर्हेतुविन्ते च पुरक; ख।

तस्योपमानं नैवास्ति नरकान्नरकं हि तत् ।
किमेते नावबुध्यन्ते पतनान्तं सदा सुखम् ॥ २८ ॥

अजरामरवल्लोकं पश्यन्ति सुखमोहिताः ।
च्युत्युपपत्तिमल्लोकः संख्या तस्य न विद्यते ।
न चोद्विजन्ति पुरुषास्तृष्णया[१] परिवञ्चिताः ॥ २९ ॥

अभियाति सदा जन्म त्वरितं याति यौवनम् ।
संयोगो विप्रयोगश्च सहजः परिदृश्यते ।
विमूढा नानुपश्यन्ति[२] विषयैः परिवञ्चिताः ॥ ३० ॥

## तृष्णाविवशा देवाः च्यवन्ति

च्यवन्ति देवाः[३] विवशास्तृष्णया परिमोहिताः ।
सा भूमिस्तानि पद्मानि वनानि विविधानि च ॥ ३१ ॥

## सर्वपदार्थानामापातरमणीयत्वम्

शिखराग्राणि रम्याणि रत्नवन्ति महान्ति च ।
सरांसि[४] नद्यो विविधा रत्नपाषाणभूषिताः ॥ ३२ ॥

वृक्षा विचित्रकुसुमाः पङ्क्तिभिर्विविधैः स्थिताः ।
हर्म्याग्राणि च रम्याणि रत्नवन्ति महान्ति च ॥ ३३ ॥

कल्पवृक्षा हेममया केचिद्वैदूर्य[५] निर्मलाः ।
राजतास्तपनीयाश्च विमिश्रा वररोहिणः ॥ ३४ ॥

भ्रमरैरुपगीताश्च विभान्ति कमलाकराः ।
विभूषणानि रम्याणि देवार्हाणि च सर्वतः ॥ ३५ ॥

## सर्वं क्षणिकम्

सर्वमेतत् तथैवास्ति जनस्तु परिवर्तते ।
मायाबुद्बुदफेनाभं [1]गन्धर्वनगरोपमम् ॥ ३६ ॥

---

1. 'स अन्तराभव एव गन्धर्वः' तथाहि सूत्रे—इध मातापितरो च सन्निपतिता-

---

१. पुरुषारतृष्नाया—क ।
२. असंग्रहीतयाया—क, ख ।
३. दैवा—क, ख ।
४. सरांत्सि—क, ख ।
५. बुद्धैवूर्य्य—क, ख इत्यशुद्धम् ।

सुखं सर्वस्य देवस्य तृष्णया वञ्चितस्य हि।
स विनाश्य जनं सर्वं भ्रामयित्वा[१] भवार्णवे ।। ३७ ।।

## तृष्णैव दुःखमूलम्

तृष्णा विषाग्निसदृशा लोकानामत्र[२] तिष्ठति।
अवितृप्ता[३] कामभोगैरपि तप्ता सुखोद्भवा[1] ।। ३८ ।।

कालानलेन निर्दग्धा क्व ते देवगणा: गता:।
सर्वथाधिगता येयं तृष्णा लोकवितन्विनी[४] ।। ३९ ।।

यया विमोहिता देवा: कालस्य वशमागता:।
देवासुरा नरा यक्षा नरके[५] यान्ति[५] जङ्गमा: ।। ४० ।।

## कालपाशयोजितं त्रैधातुकमिदम्

गच्छन्ति विवशा: सर्वे कालपाशं दुरासदम्।
त्रैधातुकमिदं सर्वं कालपाशेन योजितम्[६] ।। ४१ ।।

## तृष्णाविमोहिता: मरणं न पश्यन्ति

न च पश्यन्ति विवशास्तृष्णामोहेन मोहिता:।
अनेन हि यथा देवा: शतशोऽथ सहस्रश: ।। ४२ ।।

गता: कालाग्निनिर्दग्धा विषयैधन[७]संभवै:।
परस्य दृश्यते मरणमात्मनो नैव दृश्यते ।। ४३ ।।

---

होन्ति, माता च उतनी होति, गन्धब्बो च पच्चुपट्ठितो होति। एवं तिन्नं सन्निपाता गब्भस्स अवक्कन्ति होति।'

—मज्झिमनिकाये-१ : २ : ६ : ५

1. इदं खो पन भिक्खवे दुक्खसमुदयं अरियसच्चं। या यं तण्हा पोनोभविका नन्दिरागसहगता तत्र तत्राभिनन्दिनी, सेय्यथीदं. कामतण्हा, भवतण्हा, विभवतण्हा।

—विनयपिटके-१,१,७।

---

१. भ्रामयीत्वा—क। २. नामाय—क, ख।
३. अवितिमा—क, अवितृमा—ख उभयमशुद्धम्।
४. वितंविना—क, ख। ५. नारकेयान्नु—क, ख—इत्यशुद्धम्।
६. योक्तितं—क, ख। ७. विषयेत्व—क, ख।

पश्चात्ते[1] व्यसने प्राप्ते विन्दन्ते दुःखमात्मनः ।
प्रमादकलुषं चेतो विषयाभिरतं सदा ॥ ४४ ॥

न विन्दन्ति[2] ध्रुवं मृत्युं देहिनां सहजस्थितम् ।
सुखोत्तरमनाशस्य प्रमादाभिरतस्य च ॥ ४५ ॥

मृत्युसैन्यमुपैतीदं प्रमाथि विषसन्निभम् ।
न मन्त्रौषधकर्माणि न देवा नासुरास्तथा ॥ ४६ ॥

**कालपाशबद्धस्य न कोऽपि त्राता**

कालपाशेन बद्धस्य त्रातारो न[3] भवन्ति ते ।
रजसा गुण्ठितं वक्त्रं[4] आत्मनो नैव विन्दति ॥ ४७ ॥

**तृष्णाया हेयत्वे हेतुः**

प्राप्तेश्च्यवनभूतोऽयं मृत्युः पश्चाद् भविष्यति ।
लोलुपस्य सदा [5]यत्नैरवितृप्तस्य तृष्णया ॥ ४८ ॥

सहसाऽभ्येति मरणं यत्नदृष्टं सुखार्थिनाम् ।
अयं तवाग्रहो दुःखं मृत्युना प्रेषितो महान् ॥ ४९ ॥

अस्मादनन्तरं मृत्युर्भविष्यति सुदारुणः ।
महागिरिवरादस्मात्[6] वनोपवनभूषितात् ॥ ५० ॥

बद्धानरा[7] विषयगा[7] स्वकर्मफलभोगिनः ।
क्रीडाविहारिणस्तावत्[8] क्वचित्[9] तृष्णासुखं न हि ।
तर्ष्यया तृष्णया मूढाः पतन्ति विवशा भुवि ॥ ५१ ॥

धूमस्यानन्तरं वह्निर्यथा भवति नित्यशः ।
तथा च्यवनलिङ्गस्य पृष्ठतश्च्यवनं स्थितम् ॥ ५२ ॥

---

१. पश्चातन्ते–क, ख ।
२. विन्दते–क, ख ।
३. हि–क, ख ।
४. वक्रं–क, ख–इत्यशुद्धम् ।
५. यत्नोरवित्–क, ख ।
६. सत्वागिरि–क, ख ।
७. वघ्रानविषयेवर्श–क, ख–इत्युशुद्धम् ।
८. विहारिणो–क, ख ।
९. नचि–क, ख ।

जात्या जात्या ध्रुवं मृत्युश्चारोग्ये सति रुक् स्थिता।
सम्पत्तौ व्यसनप्राप्तिर्यौवने सहजा जरा।
सर्वैः प्रियैर्वियोगश्च[१] न संयोगो ध्रुवं स्थितः॥ ५३॥

**धर्मतायाः महत्त्वम्**

धर्मतेयं सदालोके सम्यग्बुद्धेन देशिता।
उभयस्य क्षयो नाशो जनस्यो परिवर्तते॥ ५४॥

जातौ सत्यां यथा मृत्युरवश्यं स्थित एव हि।
क्षीयते सुकृतं कर्म आयूंषि क्षणिकानि हि॥ ५५॥

**संवरादिकं भजध्वम्**

संवर[२] धर्मविनये भजध्वं पुरुषोत्तमाः।
अभ्येति[३] यौवनं सर्वं जीवितं चानुगच्छति॥ ५६॥

**सर्वस्य नाशशालित्वम्**

नश्यन्ति सर्वदा सर्वा मा प्रमादे मनःकुथा।
न नित्यं लभ्यते स्वर्गो न नित्यं क्षणसम्पदा॥ ५७॥

यस्य यावन्नाभिपतनं[४] तावत् क्षिप्रं[५] (प्र)युज्यताम्।
(तस्य जाते हि पतने तत् प्रयोगो वृथा भवेत्)॥ ५८॥

अयं स[६] हि द्रुमवनो नानारत्नविभूषितः।
लतागह्वरसंच्छन्नः पद्माकरविभूषितः[1]॥ ५९॥

जाम्बूनदमयैश्शुद्धैः प्रासादैः रत्नचित्रितैः।
नानाविधैः प्रस्रवणैर्लताभिरुपशोभितः[2]॥ ६०॥

1. 'इदमद्रिद्रुमवनं नानारत्नविभूषितम्।
लतागह्वरसन्छन्नं पद्माकरविभूषितम्'॥
—इति पाठान्तरं शोभनं स्यात्।

2. 'रुपशोभितम्' इति समीचीनम्।

१. वियोगो च–क, ख।
२. सत्वरा–क, ख।
३. अभियाति–क, ख।
४. पतनान्तास्–क, ख।
५. छूपंयुज्यतां–क, ख।
६. सो–क, ख।

कर्मसाक्षीजनस्यास्य भित्वा गगनमुच्छ्रितः ।
कल्पाग्निविरतो मेरुः सर्वथा न भविष्यति ॥ ६१ ॥

किं पुनर्ये सुरास्तत्र फेनबुद्‌बुदसन्निभाः ।
उत्पद्यन्ते विनश्यन्ति प्रमादमदमोहिताः ॥ ६२ ॥

सुखदुःखमनन्तं च स्वेच्छाकामफलोद्‌भवम् ।
देवलोकाद् यथा देवाः पतन्ति नरके पुनः ॥ ६३ ॥

### तद् दुःखं परमं कटु

शरीरमानसैदुःखैर्विद्यमानेषु[1] सर्वतः ।
न तच्छक्यं प्रमत्ते[2] स्यात् [2]तद्दुःखं परमं कटु ॥ ६४ ॥

वियोगदुःखं दुःखनामग्रतः[3] परिपठ्यते ।
तच्चदेवगतौ नित्यमग्रतः सम्प्रवर्तते ॥ ६५ ॥

सर्वप्रियैर्मनापैश्च विप्रयोगो भविष्यति ।
न च देवाः प्रपश्यध्वं[4] मरणान्तं हि जीवितम् ॥६६ ॥

च्युतिकाले तु सम्प्राप्ते विह्वलेन्द्रियचेतसा ।
जानीध्वं[5] तत्परं दुःखं यदवश्यं भविष्यति ॥ ६७ ॥

### सर्वं क्षणिकम्

अकालचक्रप्रतिमं[6] गन्धर्वनगरोपमम् ।
त्रिभवे संभवं सर्वं फेनबुद्‌बुदसन्निभम् ॥ ६८ ॥

यः फेनराशौ संमूढः कुर्याच्छादनसंस्तरम् ।
स मूढः संस्कृते कुर्यादभिस्वादं[7] भ्रमात्मकम्[8] ॥ ६९ ॥

### मृत्युमहिमा

न देवा न नरा यक्षा नासुरा गरुडास्तथा ।
त्रायन्ते[9] मृत्युसमये कर्मणा परितप्यताम्[10] ॥ ७० ॥

---

१. वीदयमामेसु–क, वीद्यमानेषु–ख । २. प्रमत्तस्यान्त–क, ख ।
३. नामग्रेषु–क, ख । ४. प्रपश्यध्वं–क, ख ।
५. जानध्वं–क, ख । ६. अलात–क ।
७. कुर्यादभिस–ख । ८. चलात्मकं–क, ख ।
९. त्रायंति–क, ख । १०. परियोच्छ्रितं–क, ख ।

यावन्नायाति समये[1] मृत्युराजः सुदारुणः ।
तावत्तु सुकृतं कार्यं मा पश्चात् परितप्यथ ॥ ७१ ॥

यद्भूतकामजं सौख्यं प्राकृतं विषयोद्भवम् ।
मृत्युकाले समुत्पन्ने तिष्ठन्ति[2] न बुधर्षभा[3] ॥ ७२ ॥

किं करिष्यन्ति सौख्यानि किं स्त्रियः किञ्चबान्धवाः ।
मृत्युना ह्रियमाणस्य देवलोकात् समन्ततः ॥ ७३ ॥

स्थिरास्ता भूमयः सर्वा वनोपवनभूषिताः ।
मृत्युरज्ज्वा विबद्धश्च त्वन्तु कालेन नीयसे ॥ ७४ ॥

आकाशे जलदा यद्वद वायुना समुदीरिताः ।
संश्लिष्टाश्च वियुज्यन्ते संसारे प्राणिनस्तथा ॥ ७५ ॥

ऋतौ ऋतौ यथा पुष्पमागतैर्दृश्यते नरैः ।
व्यतीते तु ऋतौ सर्वे प्रतियान्ति यथागताः ॥ ७६ ॥

यथा काले समुत्पन्ने मोदन्ते[4] सुकृतैः सुराः ।
व्यतीते तु शुभे काले प्रतियान्ति यथागताः ॥ ७७ ॥

ऋतौ ऋतौ यथा वृक्षे [1]पर्णं जायतेऽनेकशः[5] ।
व्यतीते तु शुभे काले शीर्यते तत् समन्ततः ॥ ७८ ॥

यथा पर्णोपमावेतन्न सौख्यमभयं भवे[6] ।
शीर्यते सततं सौख्यं नासौख्यं विद्यते ध्रुवम् ॥ ७९ ॥

प्रावृट्काले यथा वर्षमाकाशे न निवर्तते ।
तथा सौख्यमिदं सर्वं गच्छति[7] न निवर्तते ॥ ८० ॥

बर्हिणां च यथा नादो वायुना समुदीरितः ।
श्रूयते[8] तत्प्रणाशाय तथा सौख्यमिदं स्मृतम् ॥ ८१ ॥

---

1. "पर्णमायाति नैकशः" इति कल्पितं पाठान्तरं छन्दोदृष्ट्या व्याकरणदृष्ट्या च उभयदृष्ट्या शुद्धम् ।

---

१. समयो–क, ख ।
२. तिष्ठन्ते–क, ख ।
३. विबुद्धाषमाः–क, ग ।
४. मुदन्ति–क, ख ।
५. जायत्यनेकशः–क, ख ।
६. सौख्यंमभयभयः–क, ख ।
७. गच्छते–क, ख ।
८. नपश्यते–क, ख ।

यथा हि ज्वलने क्षिप्तं ध्रुवं काले[1] प्रदह्यते ।
तथा वह्न्युपमः[2] कालः काष्ठवच्चरतां स्मृतः ।। ८२ ।।

आगताश्च गताश्चैके शतशोऽथ सहस्रशः ।
संवेगो न भवत्येषा तृष्णया मोहितास्तथा ।। ८३ ।।

यथा यथा महासौख्यं स्वयं भोगो यथा यथा ।
तथा तथा महद् दुःखं पतनान्तोद्भवं ध्रुवम् ।। ८४ ।।

## जात्यादि दुःखपरम्परा

जातिर्दुःखा जरा दुःखा मरणं दुःखमेव च ।
प्रियैश्च सह विश्लेषो दुःखस्यैषा परम्परा ।। ८५ ।।

## मृत्युना न विभेत्

एकस्य पतनं दृष्ट्वा कथं नोद्विजते जनः ।
ममापि पतनं ह्येतत् सर्वपापैर्भविष्यति[3] ।। ८६ ।।

यः पश्यति भयं दूरात् प्रतिपत्तौ च वर्तते ।
(स)म्प्राप्ते मृत्युसमये न विभेति गतव्यथः ।। ८७ ।।

विभुज्यमानो[4] दीनैश्च मृत्युः स्वजनबान्धवैः ।
यद्दुःखं मृत्युसमये तन्न शक्यं प्रभाषितुम् ।। ८८ ।।

पतनान्तं[5] हि मरणं पतमानो[6] यथा गिरिः ।
निष्प्रत्यनीकं बलवत् पुरुषानपकर्षति ।
संश्लिष्यते महावेगः सम्प्रहारी च सर्वदा ।। ८९ ।।

तं ज्ञात्वा मा प्रमादेषु स्तुबध्वं[7] देवसत्तमाः ।
संश्लेषयति विश्लेषं यौवने च सदा जरा ।। ९० ।।

जीविते च सदा मृत्युः पदमेतत् सदा स्थितम् ।
अनित्येनाऽग्निनाऽवश्यं[8] दग्धव्यो यत्र गोचरः[9] ।। ९१ ।।

---

१. काष्ठ–क, ख ।
२. वह्न्यूपगः–क, ख ।
३. सर्वोपायैः–क, ख ।
४. विभुंज्यमान–क, ख ।
५. मापतं तं–क, ख ।
६. पतमानं–क, ख ।
७. बद्धं–क, ख ।
८. अनित्यनग्निमवाकाश्यं–क, ख ।
९. गोत्तमः–क, ख ।

कल्पान्ते किं पुनर्देवा ये फेनकदलीसमाः।
न तदस्ति भवेत् किञ्चिद् यद् ज्ञानं संस्कृतं चलम् ॥ ९२ ॥

यन्नित्यं (च) सुखं वा स्यादेतत्स्थानं न विद्यते।
उपस्थितमिव ज्ञेयं मरणं सर्वजन्तुभिः ॥ ९३ ॥

यस्मात् तस्य प्रतीकारः सर्वोपायैर्न शक्यते।
रूपं क्षणिकमेतेषां वयोऽपि क्षणिकं तथा ॥ ९४ ॥

क्षीयते च तथा सौख्यं न च बुद्धचन्त्यमेधसः।
यदा तत् सर्वमेतेषामनेकं शुभलक्षणम् ॥ ९५ ॥

जन्मतः कालचक्रेण परिपाटचा विनाशितम्।
तथैवैतत् पुरा नष्टमनेकशतलक्षणम् ॥ ९६ ॥

तथैतदपि जन्मैषां मृत्युराजो[१] हरिष्यति।
प्रमादमनसां ह्येषां[२] नित्यं सुखविहारिणाम् ॥ ९७ ॥

निधनाय कालपाशोऽयमभ्येति सुखनाशकः[३]।
सुखारोग्यबलप्राणप्रियविश्लेषकारकः ॥ ९८ ॥

बलवन्मृत्युराजोऽसौ समीपमुपसर्पति।
यः समीपगतो ह्येषां प्रमत्तानामनेकशः ॥ ९९ ॥

**सुखनाशः सुनिश्चितः**

जीवितं सह सौख्येन त्वरितं नाशयिष्यति।
दीर्घकालमिदं ध्वस्तं प्रमादापहताः सुराः ॥ १०० ॥

नावबुद्धचन्ति मोहान्धाः सौख्येन प्रतिबोधिताः[४]।
यदा हीनप्रभाह्येते विह्वलेन्द्रियचेतसः ॥ १०१ ॥

यमलोकं पतिष्यन्ति तदा ज्ञानस्य तत्फलम्।
जीयते[५] बत [५]कालोऽयं क्षणिकं च यथा सुखम् ॥ १०२ ॥

तथापि रक्तमनसो नावबुद्धचन्त्यचक्षुषः।
रम्याद् रम्यतरं यान्ति नित्यं सुखविहारिणः ॥ १०३ ॥

---

१. सुखमृत्यु–क, ख। सुख इत्यधिको पाठः।
२. येषां–क, ख।
३. सुखनासकः–क, ख।
४. परिबुध्यता–क, ख।
५. जीर्यंतेवतकायोयं–क, ख।

प्रयास्यन्ति यथा ह्येते मृत्युराजो हरिष्यति ।
जरा जातिविपत्तीनां यो न मूढो विषीदति ।। १०४ ।।

स पश्चात् मृत्युसमये तप्यते (हीनचेतसा)[१] ।
सुखं देवेषु सम्प्राप्य (तदेतद्) गुणसम्मतम्[२] ।। १०५ ।।

कृतहृतं विनाशान्तं क्षणिकं जीवितं चलम् ।
यथा हि यद् विनाशान्तं तथैषामपि जीवितम् ।। १०६ ।।

अचिरेणापि कालेन भविष्यति न संशयः ।
यावन्नायाति मरणं यावद् बुद्धिरनाविला[३] ।। ।। १०७ ।।

## मनसा धर्मरतिः कार्या

तावद्धर्मरतं धार्यं मनोबलेन धीमता ।
सर्वजीवितनाशाय सर्वसौख्यक्षयाय च ।। १०८ ।।

## प्रियवियोगः निश्चितः

सर्वप्रियवियोगाय मृत्युराश्रयमेति[४] च ।
तस्मिन्नाप्ते महाध्याने मृत्युः परमदारुणः ।। १०९ ।

नान्यत्[५]त्राणमृते धर्मात् तस्माद् धर्मरतो भवेत् ।
उपपन्नस्य देवस्य या प्रीतिरुपपद्यते ।। ११० ।।

नासौ[६] च्यवनदुःखस्य कलामर्हति षोडशीम् ।
मृत्युकाले समुत्पन्ने न कश्चित् कस्यचित् तथा[1] ।। १११ ।।

---

1. पद्यमिदं तुलनीयम्—

यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्येते नार्हतः षोडशीं कलाम् ।।

—इति व्यासभाष्ये विवृतोऽस्ति ।

---

१. 'ख' पुस्तके नास्ति ।
२. मनोगुणसंपतं–क, ख । अत्र 'मनो' इत्यधिकः पाठः ।
३. बुद्धिवनाविला–क, ख ।
४. एवावमैति–क, ख ।
५. नानत्रण–क, ख ।
६. नसो–क, ख ।

## सर्वस्य नाशत्वम्

न च गच्छन्तिमप्येकं पदमेकं हि गच्छति।
यदा जातं तदारम्य नरो मृत्युपरायणः ॥ ११२ ॥

नानामोहपरीतस्तु भयमेतन्न विद्यते[1]।
यदा ते च्यवनं प्राप्ते भवभोगकरं परम् ॥ ११३ ॥

तदा विन्दति मूढात्मा यद् भयं मृत्युजं महत्।
विषयोरगसन्दष्टा तृष्णा विषविमोहिता ॥ ११४ ॥

न विन्दन्ति सदा देवाश्च्यवनान्ते महद् भयम्।
च्यवन्ति च तथा दुःखमुत्पादयन्ति देहिनाम् ॥ ११५ ॥

यथोपपत्तिश्च्यवनं देवानां सम्प्रजायते।
कर्मवायुसमुद्भ्रान्तं प्रयोगेण च दुःखितम् ॥ ११६ ॥

पुरुषं नयते मृत्युरवशं (सुखवञ्चितम्)।
न मातरो न पितरो न मित्राणि न बान्धवाः ॥ ११७ ॥

सहायतां व्रजन्तीयं पुरुषं कालचोदितम्।
असहायो जनश्चायं[2] जनः प्रकृतिवञ्चितः ॥ ११८ ॥

## मन एव पाशबन्धनम्

केवलं तु मनःपाशैर्बन्धनैर्बध्यते[3] जनः[3]।
न जनः स्वजनश्चेह त्राता भवति[4] कस्यचित ॥ ११९ ॥

## गृहीत इव केशेषु मृत्युना धर्ममाचरेत्

मृत्युकाले समुत्पन्ने स्वजनोऽपि यथा जनः।
यस्त्वं पश्यसि देवानां सुखमेतन्महोदयम् ॥ १२० ॥

तत् प्रसह्यमहादेवो मृत्युराजो हरिष्यति।
त्वरितं याति जन्मेदं[5] न च विन्दति बालिशः ॥ १२१ ॥

---

१. विन्दते—क, ख।
२. गस्यायं—क, ख।
३. जंनोवश्चयते जने—क, ख।
४. भविष्यति—क, ख।
५. यनन्मेदं—क, ख।

पश्चात्तु व्यसने प्राप्ते प्रतिविन्दन्ति दुःखिनः ।
यदि दुःखाद्भयं त्वरितं[1] यदि मृत्युभयश्च यः[2] ॥ १२२ ॥

धर्मे हि क्रियतां बुद्धिरेवं सुखमवाप्स्यथ ।
विनाशान्तं सदा सौख्यमनित्यं सर्वतश्चलम् ॥ १२३ ॥

**देवत्वं पतनान्तम्**

सर्वदेवकृतं सौख्यं न च विन्दन्ति मोहिताः ।
अभूत्वा च च्यवन्त्येते[3] भूत्वाऽवश्यं हि चञ्चलाः ॥१२४॥

देवाः पतनभावाय धर्मतेयं व्यवस्थिता ।
प्रमत्ताः कामभोगेषु ये देवाश्चलमानसाः ॥१२५॥

न पश्यन्ति सुरास्तीव्रं[4] व्यसनान्तं हि जीवितम् ।
यदैव जायते देवस्तदैव[5] मरणाय सः[5] ॥१२६॥

**श्रेयसे मतिः कर्त्तव्या**

दिवसान्ते यथा रात्रिरवश्यं प्रतिपद्यते ।
दिवसं जीवितं प्रोक्तं रात्रिः स्यान्मरणोपमा ॥१२७॥

तस्मात् तदुभयं ज्ञात्वा श्रेयसे क्रियतां मनः ।
तदेतदर्थं नृणां हि स्त्रीरागवशवर्तिनाम्[6] ॥१२८॥

तदिष्टं मृत्युसैन्येन प्रसह्यमवमर्दितम् ।
भावाभावादिभिर्मूढान् वञ्चयित्वा स्त्रियो नरान् ॥१२९॥

प्रयान्ति मृत्युसमये स्वकर्मफलभोगिनः ।
पद्मोपवनशैलेषु नदीनां निर्झरेषु च ॥१३०॥

बहुशः क्रीडनं कृत्वा कृपायाऽभिगताः प्रियाः ।
अवश्यम्भावि मरणमवश्यं च वियोगिता ॥१३१॥

तथापि नाम पुरुषा नित्यं रागवशानुगाः ।
सुखितं दुःखितं वा(पि) जीर्णमन्यत्र यौवनम् ॥१३२॥

---

१. त्वस्ति–क, ख ।
२. वः–क, ख ।
३. भवत्येते–ख ।
४. रुपन्तीव्रं–क, ख ।
५. देवतदेवमरणायशः–क, ख ।
६. स्त्रीरागवशा–क, ख ।

## मृत्युराजोऽवमर्दति

दुष्कुलीनं[1] कुलीनं वा मृत्युराजोऽवमर्दति ।
सुरूपं वा विरूपं वा बलवन्तं तथाऽबलम् ॥१३३॥

सनाथं नष्टनाथं वा मृत्युराजोऽवमर्दति ।
राजानं वा तथा मृत्युः गृहिणं वा तथा यतिम् ॥१३४॥

क्रूरं वा मृदुकं वापि मृत्युराजोऽवमर्दति ।
निर्धनं[2] वा दरिद्रं[2] वा सगुणं निर्गुणं तथा ॥१३५॥

स्त्रियं वा पुरुषं वापि मृत्युराजोऽवमर्दति ।
प्रवासिनं गृहस्थं वा जले[3] वापि स्थलेस्थितम्[3] ॥१३६॥

स्थितं वा गिरिशृङ्गेषु मृत्युराजोऽवमर्दति ।
जागरन्तं[4] तथा सुप्तं भुञ्जानं[5] वा तथा स्थितम्[1] ॥१३७॥

प्रमाथी सर्वलोकस्य मृत्युराजोऽवमर्दति ।
भूमिस्थं (वा) विमानस्थं विदेशस्थं तथा गृहे ॥१३८॥

क्रकचः कालचक्रोऽयं मृत्युराजोऽवमर्दति ।
भाग्यवन्तं तथा धन्य निस्त्रिंशं(चैव) धार्मिकम्[6] ॥१३९॥

रोगिणं स्वस्थदेहं वा मृत्युराजोऽवमर्दति ।
चण्डं सुशीलिनं चापि कदर्यं धनिनं तथा ॥१४०॥

प्रमत्तमप्रमत्तं वा मृत्युराजोऽवमर्दति ।
नारकेयं तथा प्रेतं तिर्यञ्चो मनुजं तथा ॥१४१॥

अनिवृत्तबलोत्साहो मृत्युराजोऽवमर्दति ।
कामधातौ च ये देवा रूपधातौ च ये स्थिताः ॥१४२॥

---

1. भावदृष्ट्या पद्यमिदं तुलनीयम्—

न अन्तलिक्खे न समुद्दमज्झे न पब्बतानं विवरं पविस्स ।
न विज्जती सो जगति प्पदेसो यत्थ ट्ठितं न प्पसहेय्य मच्चू ॥

—धम्मपदे—१२८।

---

१. दूः कुलीनं–ख ।
२. निधमुदरिद्रं–क, निधनमरिद्रं–ख ।
३. जलेवास्थलेपिवास्थितं–क, ख ।
४. जाग्रमाणं–क, ख ।
५. भुञ्जमानं–क, ख ।
६. धार्मिकंतथा–क, ख ।

तान् सर्वान् हि प्रतिबलान् मृत्युराजोऽवमर्दति ।
आरूप्येषु च ये देवाः समापत्तिनिवेशकाः[१] ।
तान् सर्वानपि वै देवान्[२] मृत्युराजोऽवमर्दति ।।१४३।।

## सर्वं विनाशान्तम्

यद् जातं संस्कृतं किञ्चिद् तद् विनाशान्तमेव हि ।
तन्नास्ति[३] संस्कृतं किञ्चिद् यस्य नाशो न विद्यते ।
मृत्योर्बलमिदं ज्ञात्वा कामदोषं च सर्वतः ।।१४४।।

तृष्णया वञ्चनं चापि विरमध्वं भवार्णवात् ।
तदैतद् व्यसनं मत्वा मृत्योरपि चलाचलम् ।। १४५ ।।

## सुदान्तं क्रियतां चित्तम्

सुदान्तं क्रियतां चित्तं येनेदं भ्राम्यते जगत् ।
वनोपवनशैलेभ्यो विमानेभ्यश्च सर्वतः ।। १४६ ।।

सर्वदेवाः पचिष्यन्ति कालाग्निविनिपातिताः ।
प्रमादमनसो मूढा भूयो विषयजिह्मिताः ।। १४७ ।।

तृष्णापाशेन सम्बद्धा देवाः यास्यन्ति दुर्गतिम् ।
रभसं जीवितं सौख्यं प्रयाति खलु देहिनाम् ।। १४८ ।।

न च विन्दन्ति विबुधा[४] जात्यन्धा इव सत्पथम् ।
जलबुद्‌बुदसंकाशं जीवितं सर्वदेहिनाम् ।। १४९ ।।

नदीतरङ्गचपलं यौवनं व्यतिवर्तते ।
[1]अनित्या[५](हि)कटाक्षेक्षाप्रदुःखास्तुषिताः सुराः ।। १५०।।

---

1. स धर्मस्मृत्युपस्थाने समस्तालम्बने स्थितः ।
तानेव पश्यत्यनित्य–दुःख–शून्यनिरात्मतः ।।

एवं हि समस्तमालम्बनं यस्य तस्मिन् धर्मस्मृत्युपस्थाने स्थितः पुरुषः सर्वान् धर्मान् अनित्यतः, दुःखतः, शून्यतः, अनात्मतश्च पश्यति ।
—इति विवृतोऽस्ति अभिधर्मकोशे–६ : १६ ।

---

१. निसेवकाः–क, ख ।
२. देवानां–क, ख ।
३. तंनष्टं–क, ख ।
४. विबुद्धा–क, ख ।
५. अनित्यता–क, ख ।

### रागस्य हेयत्वम्

निर्वायत्यवशो[1] दीनो[1] दीपः स्नेहक्षयादिव।
कर्मक्षयपरिक्षिप्तो द्वादशारो महाबलः ॥ १५१ ॥

धर्मचक्रो भवत्येष निपाती स्यान्न चञ्चलः।
विचित्रविषयारम्या अनेकसुखमण्डिताः ॥१५२ ॥

### कालग्रासाः सर्वे भवन्ति

तुषिताः पतन्ति विवशाः कालस्य वशमागताः।
कालस्य वशमापन्ना यथा रोहन्ति पादपाः ॥ १५३ ॥

ते पुनः कालमासाद्य भवन्ति विगतत्विषः।
यथा कालं समापद्य भवन्ति सुखिताः सुराः ॥ १५४ ॥

पुनस्तत्रैव संसृत्य पतन्ति विवशा हि ते।
कर्मकालं समासाद्य लोकोऽयं परिवर्तते ॥ १५५ ॥

सुखं[2] व्रजति दुःखं हि[2] कालस्य वशमागतः।
यद्वृत्तं प्राक्शुभं कर्म तच्च[3] दुष्टमहोदयम् ॥ १५६ ॥

तदिदं भुञ्जते स्वर्गं क्षीयते च ततः पुनः।
सहेतुकस्य सर्वस्य क्षणिकस्य विशेषतः ॥ १५७ ॥

अनित्यतापरामर्शो नासौ भवति सर्वतः।
ये भावाः संस्कृता नित्याः सर्वे ते विप्रलोभिनः ॥ १५८ ॥

विप्रलोभ्य जनं याति धर्मतेयं व्यवस्थिता।
शीघ्रस्रोता यथा नद्यस्तथा सौख्यं शरीरिणाम् ॥ १५९ ॥

क्षणिकं जीवितं सर्वं न च विन्दन्ति बालिशाः।
जरा व्याधिश्च मृत्युश्च विपत्तिः कर्मसंक्षये ॥ १६० ॥

भवन्त्येतानि देवानां नित्यानां कामचारिणाम्[4]।
नायुर्ध्रुवं भवत्येव न सौख्यं त्रिषु धातुषु ॥ १६१ ॥

---

१. वशादीनां–क, ख।
२. सुखितो दुःखितो भवति–क, ख।
३. सच–क, ख।
४. कामानुचारिणां–क, ख।

न (च) विन्दन्ति विवशा देवाः कामेन मोहिताः ।
वर्षधारा यथाऽऽकाशे दुःस्था[१] भवति सर्वतः ॥ १६२ ॥

तथा सौख्यमिदं सर्वं वर्षधारोपमं सदा ।
वायुना पांसवो यान्ति[२] अन्योन्य[३]परिघट्टिताः ॥ १६३ ॥

भ्राम्यते गगने[४]ऽवश्यस्तथा श्लेषः शरीरिणाम् ।
सुचिरमपि संरम्यं नित्यता नास्ति देहिनाम् ॥ १६४ ॥

अचिन्त्यार्थे सौख्यमिदं न च विन्दन्ति बालिशाः ।
वातेरितं[५] तु यत्[५] सौख्यं विनाशान्तं भविष्यति ॥ १६५ ॥

## सुखस्य दुःखमिश्रितत्वम्

विनाशं नैव बुध्यन्ति कामिनश्चित्तवञ्चिताः ।
दुःखमिश्रं सुखमिदं प्रच्छन्नमिव[६] विद्यते ॥ १६६ ॥

पद्ममालापरिच्छिन्नो विषपूर्णो यथा घटः[७] ।
ओदनं विषसम्मिश्रं मरणान्तं[८] (हि) तत् तथा ॥ १६७ ॥

तथा सौख्यमिदं सर्वं तस्मात् तत्[९] परिवर्जयेत् ।
आदौ मध्ये[१०] तथा चान्ते नरकाय[११] भविष्यति ॥ १६८ ॥

## उत्पादस्थितिभङ्गानि सर्वाणि वस्तूनि

[1]उत्पादस्थितभङ्गान्तं[१२] सर्वं संस्कृतमुच्यते ।
सर्वं च संस्कृतं सौख्यं ननु भट्टारमेव तत् ॥ १६९ ॥

---

1. येनोत्पादव्ययध्रौव्ययुक्तं यत्सत्तदिष्यते ।
अनन्तधर्मकं वस्तु तेनोक्तं मानगोचरः ॥ इति ।

---

१. दुःखिता–क, ख ।
२. यं–क, ख ।
३. तदन्योन्यदयरिद्य–क, ख ।
४. गमने–क, ख ।
५. यद्वातेरियं–क, ख ।
६. नमेव–क, ख ।
७. बसः–क, ख ।
८. मरणान्ताय–क, ख ।
९. सर्वस्मात्–क, ख ।
१०. भादौमध्येत्–क, ख ।
११. नरकान्त–क, ख ।
१२. भङ्गनि–क, ख ।

भट्टारश्च विलासश्च (सु)व्ययक्षणिकं तथा[१] ।
सुखं च जीवितं सर्वं तस्मात् तत् परिवर्जयेत् ॥ १७० ॥

आदौ मध्ये तथा चान्ते श्रेयस्येव[२] मनः सदा ।
सुदान्तः[३] शुद्धचित्तस्य[४] मृत्युकाले न सीदति ॥ १७१ ॥

**मरणस्यावश्यम्भावित्वम्**

अवश्यम्भावि मरणं प्रियस्य[५] च वियोगता ।
न च चिन्तयतः[६] काले विषये विप्रलोभिनः ॥ १७२ ॥

जरामरणचक्रं तमविषह्यं सुदारुणम्[७] ।
पावपान्[८] देवगान् सत्त्वान् न च बुद्धयन्त्यचक्षुषः ॥ १७३ ॥

**सर्वस्य जातस्य च्यवनं भवति**

च्यवमानस्य देवस्य विकलेन्द्रियचेतसः ।
यद् दुःखं सुकरं तस्य नौपम्यमिह विद्यते ॥ १७४ ॥

यथा यथा महत् सौख्यं तृष्णोपहतचेतसः ।
तथा तथा महद् दुःखं च्यवमानस्य दुःसहम् ॥ १७५ ॥

कृत्वा हि संस्कृतं कर्म न ज्ञात्वा कर्मणः[९] स्थितिः ।
मृत्युकाले समुत्पन्ने पश्चात्तापेन बह्यते ॥ १७६ ॥

---

येन कारणेन यदुत्पाद-व्यय-ध्रौव्ययुक्तं तत्सत्सत्त्वरूपमिष्यते । तेन कारणेनानन्तरधर्मक वस्तु मानगोचरः, प्रत्यक्षपरोक्षप्रमाणविषयः, उक्तं कथितमिति सम्बन्धः, उत्पादश्च व्ययश्च ध्रौव्यश्च, उत्पादव्ययध्रौव्याणि तेषां मेलस्तदेव सत्त्वमिति ज्ञानम् इष्यतो केवलज्ञानिभिरभिलष्यत इति, वस्तुतत्त्वं चोत्पादव्ययध्रौव्यात्मकम् ।

—इति हरिभद्रसूरिविरचिते षड्दर्शनसमुच्चये-५७ ।

---

१. तथासुखं—क, ख । सुखं इत्यधिकम् ।
२. आरि—क, ख ।
३. सुदांतो—क, ख ।
४. मनसौ—क, ख ।
५. आपि—क, ख ।
६. चिन्तयतो—क, ख ।
७. चक्रोऽयमविषह्यः सुदारुण ।
८. पादप—क, ख ।
९. कर्मणां—क, ख ।

## मृत्योः पूर्वमेव स्वहितमाधेयम्

यावन्नाप्येति मरणं यावच्च क्षणसम्पदः ।
तावत् स्वहितमाधेयमेष[१] मार्गः सुखावहः ॥ १७७ ॥

च्यवनं देवलोकेषु मरणं नरभूमिषु ।
विदित्वा कः पुमान्[२]आस्थां कुर्यात्सोपद्रवे भवे ॥ १७८ ॥

## सर्वं विनाशि

तैलवर्तिप्रणाशेन[३] दीपनाशो यथा ध्रुवम् ।
कर्मक्रिया तथा कस्य विनिपातः सुरालयात् ।
भित्तिनाशो[४] यथाऽवश्यं चित्तनाशो ध्रुवंस्थितः॥ १७९ ॥

कर्मनाशात्तथा सौख्यमवश्यं विनिपद्यते ।
क्षीणपुण्याः निपत्यन्ते देवाः सर्वे सुरालयात् ॥ १८० ॥

अनित्यतैषां सर्वेषां सत्त्वानां विनिपातिका ।
मृत्युः पिवति भूतानि जरा पिवति यौवनम् ॥ १८१ ॥

व्याधिः पिवति चारोग्यं न च लोकोऽवबुध्यते ।
उपपन्नाः सुबहुशः प्रतीताश्चाप्यनेकशः ॥ १८२ ॥

जायते जीर्यते चायं च्यवने चोपपद्यते ।
न क्षणोऽस्ति मुहूर्तो वा परिवर्तस्तथापि वा ॥ १८३ ॥

यत्र मृत्युर्विलम्बेन[५] न च लोकोऽवबुध्यते ।
उपपन्नास्तु बहुशः प्रतीताश्चाप्यनेकशः ॥ १८४ ॥

यत्र मृत्युविलम्बः स्यान्न च लोकोऽवबुध्यते ।
अनित्यं जीवितं सर्वं न विलम्बि च यौवनम् ॥ १८५ ॥

सर्वभूतान्यनित्यानि न च लोकोऽवबुध्यते ।
अन्ते[६] क्रमेण नश्यन्ति भावाः क्षणविलम्बिनः ॥ १८६ ॥

सम्बद्धाः कर्मसूत्रेण न च लोकोऽवबुध्यते ।
देवकोटिसहस्राणि वनोपवनसेविनाम् ॥ १८७ ॥

---

१. माश्चैयं–क, ख ।　२. पुमान्नाथा–क, ख ।
३. प्रणाशोयं–क, ख ।　४. भित्तिनाशाद्–क, ख ।
५. लम्बः स्यान्न–क, ख ।　६. अन्त–क, ख ।

निमीलितानि कालेन न च लोकोऽवबुध्यते ।
पङ्काभावचरा देवाः प्रमत्ता भोगतृष्णया ॥ १८८ ॥

यास्यन्ति विलयं सर्वे न च लोकोऽवबुध्यते ।
फेनबुद्बुदसङ्काशं स्वप्नद्रव्योपमं[1] सुखम् ॥ १८९ ॥

क्षयं प्रयाति शीघ्रं च न च लोकोऽवबुध्यते ।
सर्वस्य[2] सर्वथा सर्वो विनाशो[2] नियतो भवे ॥ १९० ॥

न च बालस्य संसारान्निर्वेदमुपपद्यते ।
न सर्वः सर्वथा सर्वं सर्वोपायैः प्रयत्नशः ।
संत्राता भवने प्राप्ते मृत्युकाले सुदारुणे ॥ १९१ ॥

## मृत्युरित्यभिधीयते

व्युच्छेत्ता सर्वसौख्यानां दुःखनामाकरो महान् ।
विश्लेषः सर्वबन्धानां मृत्युरित्यभिधीयते ॥ १९२ ॥

भयोपनेता भूतानां दुःखानामुदधिः समः ।
व्यामोहकर्त्ता बुद्धीनां[3] मृत्युरित्यभिधीयते ॥ १९३ ॥

सञ्छेत्ता जीवितानामिन्द्रियाणां च नाशकः ।
अमृश्यः सर्वभूतानां मृत्युरित्यभिधीयते ॥ १९४ ॥

अधृष्यः सर्वभूतानामजेयः सर्वकर्मणाम् ।
विनाशः सर्वसत्त्वानां मृत्युरित्यभिधीयते ॥ १९५ ॥

अवश्यम्भावि तत्त्वानामन्तकं सर्वदेहिनाम् ।
निकायभागनाशोऽयं मृत्युरित्यभिधीयते ॥ १९६ ॥

सदेव यक्षगन्धर्व-पिशाचोरग-रक्षसाम् ।
कालचक्रविनाशी (च) मृत्युरित्यभिधीयते ॥ १९७ ॥

असंयमी प्रमाथी च वह्निवत् सर्वदेहिनाम् ।
क्रूरश्चाविनिवर्त्यश्च मृत्युरित्यभिधीयते ॥ १९८ ॥

स्कन्धायतननाशश्च आरुप्यस्याथ[4] चेतसः ।
कालधर्मो महावेशो मृत्युरित्यभिधीयते ॥ १९९ ॥

---

१. द्रव्यप्रतिम–क, ख ।
२. सर्वः सर्वस्य सर्वोभूविनाशि–क, ख ।
३. वुदिना–क, ख ।
४. आयुरुष्याथ–क, ख ।

**श्रेयसे मतिः करणीया न तु प्रमादे**

स एव धा(त)वे शीघ्रं विनिपाताय देहिनाम् ।
श्रेयसे क्रियतां यत्नो मा प्रमादेः मनःकृथाः ॥२००॥

**गतं जीवनं नायाति**

यथा ( हि शीघ्र ) गमनं[१] पक्षिणां पवनस्य वा ।
तथा शीघ्रतरं याति जीवितं सर्वदेहिनाम् ॥२०१॥

गतो निवर्तते वायुर्निवर्तन्ते च पक्षिणः ।
जीवितं यन्निरुद्धं तु तस्य नागमनं पुनः ॥२०२॥

द्रुतं क्षीयन्ति कर्माणि द्रुतमभ्येति चान्तकः ।
अवश्यम्भावि विश्लेषं[२] न च विन्दन्ति देवताः ॥२०३॥

अनिर्वार्यो महावेगश्चतुःसत्यनिवर्हणः ।
अवश्यम्भावि बलवानेष मृत्युरुपैति च ॥२०४॥

श्रुति[३] प्रमादिनो देवाः सुखेन परिवञ्चिताः ।
न विन्दन्ति महद् दुःखं यदवश्यं भविष्यति ॥२०५॥

संस्कृतस्य हि सर्वस्य समयस्य विशेषतः ।
विनाशो[४] भवति (चा)सौ धर्मतेयं भवे भवे ॥२०६॥

जरायौवननाशाय प्राणनाशाय चान्तकः ।
विपत्तिभूतनाशाय[५] स्थिता (वै) नाशहेतवः ॥२०७॥

एवंविधे महाघोरे व्यसने (वै) महद्[६] भये ।
प्रमादिनो हि यद् देवाः नूनमेते च चेतनाः[७] ॥२०८॥

अनागतभयं यो हि पश्यति[८] ज्ञानचक्षुषा[९] ।
स पण्डित इति ज्ञेयो विपरीतस्तु बालिशः ॥२०९॥

---

१. गमनश्च–क, ख ।
२. विश्लेषो–क, ख ।
३. अति–ख ।
४. शौभवते–क, ख ।
५. भूतिनाशायस्थितानि–क, ख ।
६. सुम–क, ख । 'सु' इति अत्र अधिको पाठः ।
७. चेतसः–ख ।
८. पश्यते–क, ख ।
९. बुद्धय–क, ख ।

**कर्मक्षये सुखस्य नाशः**

विमूढमनसः सर्वे वञ्चिताः स्वेन चेतसा ।
कर्मक्षये[1] तु नश्यन्ति दीपा स्नेहवशादिव ॥२१०॥

अनेकविषयाणां च इदं सौख्यमनुत्तमम् ।
भुक्त्वा कर्मक्षयो[2] भूत[2]विनिपातो भविष्यति ॥२११॥

**अनित्यत्वानवगमादधर्मरतिः**

जलतरङ्गचपलं जीवितं याति देहिनाम् ।
न च बुद्बुदनिःसारमवगच्छन्ति बालिशाः ॥२१२॥

फेनराशिश्चिरं तिष्ठेद्[3] उपायैः कतिभिर्ननु[3] ।
न तु देवाश्चिरं तिष्ठन्त्यनित्यो[4] भावनमिति[4] ॥२१३॥

**लोभवशादेव मृत्योरुपेक्षा**

कृष्यते भूरियं सर्वा मनुजैः फलकांक्षिभिः ।
न च संदृश्यते[5] मृत्युर्लाभसक्तैरपण्डितैः ॥२१४॥

क्षणे क्षणे विवर्धन्ते लोभाशा[6] मोहिते जने ।
न च विन्दन्ति संसाराः क्षीयमाणाः क्षणे क्षणे ॥२१५॥

**दण्डत्रयमुपसंहरति**

जरादण्डोऽयमभ्येति यौवनान्तकरो नृणाम् ।
आरोग्यशक्तिनाशाय[7] व्याधिदण्डोऽयमागतः ।
दण्डत्रयमिदं घोरं ससुराऽसुरनाशकम् ॥२१६॥

अभ्येति न च मूढोऽयं लोकं पश्यति बालिशः ।
परस्परं प्रलोभाच्च स्वजनं स्नेहचञ्चलम्[8] ॥२१७॥

**मोहबद्धाः मृत्युं वियोगं च नावगच्छन्ति**

गच्छत्यन्योन्यसंश्लिष्टो मोहबद्धे जने जनः ।
पुत्रपौत्रप्रपौत्राणां[9] वशगाश्चापि ये नराः ॥२१८॥

---

१. क्षणेषुक्षति—क, ख ।
२. क्षयोद्भूतो—क, ख ।
३. तिष्ठ्रत्यविधापुसमाहत—क, ख ।
४. तिष्ठेत्यनित्योभाववर्जितः—क, ख ।
५. शंदृ—क ।
६. भासा—क, ख ।
७. शक्य-क, ख ।
८. स्नेहचालसं—क, ख ।
९. प्रपोत्रं—क, ख ।

## कर्मस्कन्धस्य दुःखावहत्वम्

सर्वे तेन भविष्यन्ति त्वं तु सङ्गेन बाध्यसे ।
जीवितान्तकरः[१] शत्रुर्न विशङ्को[२] महाबलः ॥२१९॥

सोऽविलम्बी[3] महावेगो मृत्युरेषोऽभ्युपैति च ।
चलाचलविधिर्ज्ञेयः कर्मस्कन्धैर्निदर्शितः[४] ॥२२०॥

## देवादीनां क्षयो भवति

देवनागाः (स)गन्धर्वा पिशाचोरगराक्षसाः ।
न शक्ताश्च्यवने क्षान्तं बलं तस्य तथागतम् ॥२२१॥

## तत्त्वदर्शको दुर्गतिं नाधिगच्छति

चलाचलविधिर्ज्ञेयः कर्मणा तत्त्वदर्शकः ।
अलिप्तः पापकैर्धर्मैर्न स गच्छति दुर्गतिम् [1]॥२२२॥

### इति अनित्यतावर्गः पञ्चमः

---

1. अतः— अजरामरवत् प्राज्ञो विद्यामर्थञ्च चिन्तयेत् ।
गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥
—हितोपदेशतः ।

---

१. तानन्तकः–क, ख ।
२. बिषक्ता–क, ख ।
३. सोविलम्बि–ख ।
४. वैर्नेद–क, ख ।

## ( ६ ) अप्रमादवर्गः

**प्रमादरतस्य न मोक्षः**

य: [1]प्रमादरतो जन्तुर्नासौ मोक्षाय कल्पते।
प्रमादविषमूढस्य निर्वाणं दूरमेव तत् ॥ १ ॥

**न प्रमादे मनः कार्यम्**

न प्रमादेषु बध्येत्[१] प्रमादः शत्रुरुत्तमः।
प्रमादपरमा देवाः पतन्ति नरके पुनः ॥ २ ॥

स्वभावतामिमां ज्ञात्वा धर्माणामुदयव्ययम्[२]।
न प्रमादे मनः कार्यं प्रमादविषमुत्तमम् ॥ ३ ॥

**प्रमादाप्रमादयोः परस्परविरोधित्वम्**

[2]अप्रमादोऽमृतपदं प्रमादो मृत्युनः पदम्।
अप्रमत्ता न म्रियन्ते प्रमत्तास्तु सदामृताः [3]॥ ४ ॥

यथा विषं तथा वह्निः प्रमादः प्राणिनां तथा।
प्रमादोन्मादिताः सत्वाः दुःखाद् दुःखं प्रयान्ति ते ॥ ५ ॥

अप्रमत्ताः सदामर्त्याः सर्वं प्रक्रमसंस्कृताः।
प्रयान्ति परमां शान्तिं प्रमादो यत्र नास्ति हि ॥ ६ ॥

---

1. कुशलधर्मेषु भावनाविरतिः 'प्रमादः'।
—अभिधर्मकोशे–२/२५।

2. कुशलानां धर्माणां भावना 'अप्रमादः'।
—इत्युक्तम् आचार्यवसुबन्धुना अभिधर्मकोशे–२/२५।

3. अप्पमादो अमतपदं प्रमादो मच्चुनो पदं।
अप्पमत्ता न मीयन्ति ये पमत्ता यथा मता॥
—धम्मपदे–२/१।

---

१. वजेत–क, वसेत–ख।  २. मूदयव्ययं–ख।

य: प्रमादे रतो जन्तुर्न शुभान्यनुचेष्टते ।
तस्य धर्मविमूढस्य कुत:[१] स्वर्गो भविष्यति ? ।। ७ ।।

प्रमादं वर्जयेद् यस्मात् प्रमादं विषमुत्तमम् ।
अप्रमत्ता न म्रियन्ते प्रमत्तास्तु सदात्मृता: ।। ८ ।।

सौभाग्यं प्राप्य यो मर्त्य: प्रमादेषु च वर्तते ।
न पण्डित इतिख्यातो विपरीतस्तु नान्यथा ।। ९ ।।

न प्रमादस्य कालो हि हर्षस्य न कथञ्चन ।
व्यामोहजननाच्चेतो मृत्युकाले महाबले ।। १० ।।

**प्रमादमुखेन प्रमादवर्णनम्**

हर्षो धूम: प्रमादोऽग्निर्देवान् दहति नैकश: ।
विषयैर्मोहिता मूढा न च विन्दन्त्यचक्षुष: ।। ११ ।।

अव्युच्छिन्नानि पश्यन्ति संस्काराणि च देहिनाम् ।
यथा हि विषयैर्मूढा[२] नावगच्छन्ति यद्द्विष: ।। १२ ।।

तस्मात् प्रमादं विषवत् कथयन्ति मनीषिण: ।
सुखं न दृश्यते पूर्वं प्रमादोमन्दबुद्धिभि: ।। १३ ।।

(यथा) प्रमादोपकृता: प्रयान्ति नरकं पुन: ।
फले प्राप्ते प्रमादोऽयं[३] पश्चात् सन्तप्यते[४] व्यथा ।। १४ ।।

**प्रमादोऽनर्थकर:**

सर्वानर्थकरो दृष्ट: प्रमाद: पण्डितै: नरै: ।
तथा च कुशलं प्रायो य: प्रमादं न सेवते ।। १५ ।।

दु:खं यस्य भवेदिष्टं स प्रमादं निषेवताम्[५] ।
न प्रमादपर: कश्चित् कदाचित् सुखमाप्नुयात् ।। १६ ।।

**प्रमादशून्यानामच्युतपदप्राप्ति:**

प्रमादविरता: सन्तो[६] गच्छन्ति पदमच्युतम् ।
ना प्रमादपर: कश्चिन्नरके दु:खितान्नयेत्[७] ।। १७ ।।

---

१. भुव:–ख ।
२. मोहिनामूर्खनाव–क, ख ।
३. प्रमादोस–क, ख ।
४. तप्यते–क, ख ।
५. निसेवतु:–क, ख ।
६. संति–क, ख ।
७. नय–क, ख ।

यदि[1] देवाः सहन्तीमं[2] रमन्ते[3] मन्दमेधसः।
तिरश्चां हि सुराणां च विशेषो नैव विद्यते ॥ १८ ॥

**प्रमादवशात् देवलोकाद् पतन्ति**

प्रत्येकं कर्मवैचित्र्यं प्रमादपरमाः सुराः।
नावगच्छन्ति पतनं देवलोकाद् भविष्यति ॥ १९ ॥

सन्निकृष्टं सदा दुःखं पतनं वा भविष्यति।
देवलोकोत्तरा देवा[4] यथा स्यात् सुखमात्मनः ॥ २० ॥

देवलोकं समासाद्य यः प्रमादेषु रक्षते।
स क्षीणशुभकर्मान्तं च्यवनान्ते विबुध्यते ॥ २१ ॥

मा प्रमादपरोभूयाः[5] प्रमादो नोचितः[6] सुरैः[7]।
प्रमादैर्दोषविहताश्च्यवन्ति[8] त्रिदशालयात् ॥ २२ ॥

**प्रमादवशगः पुरुषः नाशमेति**

वह्यते पुरुषः सर्वः प्रमादेन विमोहितः।
स पश्चाद् विगते तस्मिन् प्रत्यादेशेन रक्ष्यते ॥ २३ ॥

दोषोद्भवामिमां[9] भूमिं प्रमादावृत्तशाद्वलम्[10]।
विचरन्ति सदा मूढाः सुराः सत्कृतमोहिताः ॥ २४ ॥

चञ्चला विषमास्तीव्रा[11] प्रमादाः कामहेतवः।
न तेषां विश्वसेद् धीरो यस्मात् स्वप्नोपमा हि ते ॥ २५ ॥

**कामः नारकस्य हेतुरिति**

न स्वप्नो नरके हेतुः कामाः स्वप्नस्य[12] हेतुकाः।
तस्मात् काममिमं मुक्त्वा नित्यं सुचरितं चरेत् ॥ २६ ॥

---

१. तायति–क, ख।
२. सहति–क, ख।
३. व्येरमिते–क, ख।
४. देवज्ञास्य–क, ख।
५. भवतः–क, ख।
६. नार्हन्ते–क, ख।
७. सुराः–क, ख।
८. च्यवन्ते–क, ख।
९. दोषोद्भवार्य–क, ख।
१०. बली–क, ख।
११. स्तिव्रा–ख।
१२. स्वप्नस्तु–क, ख।

### अप्रमादात्सर्वं प्राप्तुं शक्नोति

यत्रावाप्तं पदं कृत्स्नं[1] सुरैः कामविमोहितैः[2]।
तत् प्राप्यते पदं वीरैरप्रमादपरैर्नरैः ॥ २७ ॥

### प्रमादमूलसंसारः

प्रमादमूलसंसारो देवानामालयस्तथा।
ये प्रमादविषैर्मत्तास्ते मग्ना भवसङ्कटे ॥ २८ ॥

तमः प्रमादमूलश्च अविद्या ह्यपकारिका।
अन्धकारेण ये मूढास्तेषां चक्षुर्न विद्यते ॥ २९ ॥

### प्रमादः मोहात्मकः

तेजसा हि[3] तथा मूलैरग्निना न च कथ्यते।
मोहानां प्रवरस्तद्वत् प्रमादः परिकीर्त्यते ॥ ३० ॥

प्रमादानलतप्तेन मनसा तद् विचेष्टते।
मुह्यन्ते[4] येन ते बालाः प्रयान्ति नरकं पुनः ॥ ३१ ॥

### प्रमादोन्मादितः सुखमेवानुभवति

प्रमादोन्मादिता[5] देवास्त्रिविधा ये[6] चलात्मकाः।
वियोगदुःखं विस्मृत्य संयोगे सुखकांक्षिणः ॥ ३२ ॥

### पतनान्तमेव जीवनम्

उपस्थिते महादुःखे[7] पतनान्ते हि जीविते।
पश्चाद् वहन्ति विरसं पतनान्तं सुखं चलम् ॥ ३३ ॥

संयोगो विप्रयोगान्तः पतनान्तः सुखं सदा।
जरान्तं यौवनं सर्वं कर्मान्तः सर्वदेहिनाम्[8] ॥ ३४ ॥

---

१. सुकृत्स्नं—क, ख।
२. शवेषिभिः—क, ख।
३. हितं—क।
४. समोहते—क, ख।
५. प्रमादेनमोहिता—क, ख।
६. विधेयाश्च—क, ख।
७. महद्दुःखे—क, ख।
८. देहिनः—क, ख।

**संसारः कर्मनाटकसम्बद्धः**

शुभाशुभेन बद्धा हि कर्मणा सर्वदेहिनः ।
नटवन्नटयन्त्येते गत्यां गत्यां पृथक् पृथक् ।। ३५ ।।

कर्मनाटकसम्बद्धः[१] संसारो भ्रमते सदा ।
न तत्र विश्वसेद्धीमाननित्या कर्मणां गतिः ।। ३६ ।।

**प्रमादः परमोदोषः**

सर्वपापानि[२] विषवत् प्रमादः परिवर्ज्यताम् ।
प्रमादेन तु ये मुक्ता(स्ते)तीर्णास्ति[३] भवार्णवात् ।। ३७ ।।

प्रपातपतितो दोषी[४]कदाचिदपि जीवति ।
न प्रमादप्रपतितः कदापि[५] सुखवान् भवेत् ।। ३८ ।।

प्रमादः परमो दोषः कदाचित् सर्वकर्मसु ।
न[६] रात्रौ न दिवा तस्य शुभं भवति कर्हिचित्[७] ।। ३९ ।।

यत् सुखं लौकिकं किञ्चिद् यच्च लोकोत्तरं मतम् ।
नश्यते तत् प्रमादेन तस्मात् तत् परिवर्जयेत् ।। ४० ।।

**अप्रमादोऽमृतपदम्**

अप्रमादोऽमृतपदं प्रमादो मृत्युनः पदम् ।
अप्रमादेन ते देवाः[८] देवानां श्रेष्ठतां गताः[1] ।। ४१ ।।

प्रमादमूलः संसारः अप्रमादश्च (सद्) गतिः ।
तस्माद् प्रमादविरतः सुखी भवति सर्वदा ।। ४२ ।।

---

1. अप्पमादेन मघवा देवानं सेट्ठतं गतो ।
अप्पमादं पसंसन्ति पमादो गरहितो सदा ।।
—धम्मपदे-२।१० ।

---

१. सम्बेद्धोयं-क, ख ।
२. पापेन-क, ख ।
३. त्रिभवार्णवात्-ख ।
४. दोषः-क, ख ।
५. चिन्पि-क, ख ।
६. 'ख' पुस्तके नास्ति ।
७. सर्वदा-क, ख ।
८. मघैवन-क, ख ।

**दुःखाद् विभेति चेत् प्रमादं परित्यजेत्**

इच्छते यत्सुखं नित्यं यश्च दुःखाद् विभेति (वै)।
स (हि) प्रमादाद् विरमेत् प्रमादो विषवन्नृणाम् ॥ ४३ ॥

प्रमादनिद्राविहता[1] प्रमादविषमोहिताः।
प्रपातं हि प्रपद्यन्ते जनाः शुक्ल कृतात्मकाः ॥ ४४ ॥

**अप्रमादः परं श्रेयः**

अप्रमादः परं श्रेयो न प्रमादः कथञ्चनः।
अप्रमादेन सुखिनः प्रमादेन (सु) दुःखिताः ॥ ४५ ॥

**प्रमादमूढाः नरकं व्रजन्ति**

प्रमादमूढा हि नरा[2] भूयो मद्येन मोहिता।
धिक् प्रमादविमूढास्ते चरन्ति नरकं पुनः ॥ ४६ ॥

प्रमादवागुराबद्धा[3] विषयार्णवसंस्थिताः।
तृष्णाविषयसम्बद्धो[4] देवः क्रीडत्यनेकशः[5] ॥ ४७ ॥

जातमात्रस्य देवस्य तत् क्षणं क्षीयते सुखम्।
न विन्दन्ति विवशाः प्रमादावृत्तचेतसः ॥ ४८ ॥

**प्रमादवशः कामवशगोऽतृप्त एव तिष्ठति**

प्रमादोद् भ्रान्तमनसो[6] नित्यं विषयतत्पराः।
अतृप्ताः कामभोगेषु[7] सुखेन सुखिता हि च ॥ ४९ ॥

कामानलेन सन्दग्धाः विप्रमादेन मोहिताः।
न विन्दन्ति बलं सर्वं विनाशान्तं हि जीवितम् ॥ ५० ॥

अनेकानि सहस्राणि सुराणां नियुतानि च।
कामानलेन सन्दग्धाः प्रमादेन विमोहिताः ॥ ५१ ॥

---

१. भिहता–क, ख।
२. त्रिभुरा–क, ख।
३. वागुरुद्धा–क, ख।
४. द्वितसम्बद्धो–क, ख।
५. निगत–क।
६. भ्रान्ते मनसः–क, ख।
७. परेण–क, ख।

### प्रमादयुताः पतन्ति

ह्रियते पुरुषः सर्वः प्रमादेन विमोहितः।
स पश्चाद् व्यसने प्राप्ते बुध्यते तस्य तत्फलम्॥ ५२॥

विषवत् प्राणहृद्[1] दृष्टः प्रमादस्तत्त्वदर्शिभिः।
अग्निवद् दह्यते नित्यं शस्त्रवच्च निकृन्ततिः॥ ५३॥

मित्रवद् दृश्यते पूर्वं पश्चाद् भवति शत्रुवत्।
वडिशः सर्वदेवानां प्रमादः सम्प्रवर्तते॥ ५४॥

देवासुरमनुष्याणां नागानां च विशेषतः।
प्रमादः कारणं दृष्टं सर्वाननर्थान् करोति सः॥ ५५॥

यः प्रमादहतो नित्यं नासौ कल्याणमर्हति।
कल्याणवर्जितः पुरुषो नरकानुपकर्षति॥ ५६॥

विविधा कृतयस्तिर्यग् प्रमादपरिवञ्चिताः।
मैथुने भोजने चैव येषां बुद्धिः सदारताः॥ ५७॥

यदा सुचरितं कर्म चान्तीभूतं दिवौकसाम्।
भविष्यति तदाभूयः क्व यास्यन्ति प्रमादिनः॥ ५८॥

प्रमादवारिणां दुःष्टाः कर्मवायुभिराहताः।
पतन्ति वृक्षवद् देवा गत्यां गत्यां पृथक् पृथक्॥ ५९॥

### सुराणामपि संवेगजनितः शोको जायते

शतशो न हृतश्चैव दिवि[2] जाता दिवौकसः।
न च संवेगजनितो हृदि शोकः प्रजायते॥ ६०॥

प्रमादकलुषं पीत्वा मोहात्पानं दिवौकसः।
पतन्ति नरकं तीव्रं वह्निना परिवारितम्॥ ६१॥

### सुदुर्लभस्य मानुषस्य जन्मनः साफल्य-वैफल्ये

सुलब्धं मानुषं जन्म ये लब्ध्वा अप्रमादिनः[3]।
कुर्वन्ति सुकृतं कर्म देवलोकोपगामिनः॥ ६२॥

---

१. प्राणद्रा—क, ख। २. च्युतो—क, ख।
३. प्रमादिन—क, ख।

दुर्लभं मानुषं कर्म लब्ध्वापि ये प्रमादिनः ।
ते प्रमादात् परिभ्रान्ताः[१] पतन्ति नरके नराः ॥ ६३ ॥

**मृत्युसमये प्रमादी तपत्येव**

प्रमादरतसत्त्वो[२] यः कृपया परिवर्तते ।
स पश्चान्मृत्युसमये तप्यते स्वेनचेतसा ॥ ६४ ॥

**प्रमादस्य दाहकत्वम्**

न तथा दह्यते वह्निर्न च शस्त्रं विकृन्तति ।
[1]पञ्चेन्द्रियसमुद्भूतं प्रमादो दह्यते तथा[३] ॥ ६५ ॥

सुखरूपं तथा दुःखं मित्ररूपं तथा रिपुः ।
प्रमादिनां हि तन्नित्यं[४] तस्मात्तं परिवर्जयेत् ॥ ६६ ॥

प्रमादतृष्णया मिश्रो रागस्तदनुबर्धकः ।
त्रयस्ते रिपवः क्रुष्टाः नाशयन्ति सुखं नृणाम् ॥ ६७ ॥

ये प्रमादरता नित्यं न च धर्मरता बुधाः ।
ते मृत्युसमये प्राप्ते यमदूतैः पराकृताः ॥ ६८ ॥

---

1. श्रद्धेन्द्रियं यावत् प्रज्ञेन्द्रियमिति पञ्चेन्द्रियाणि'। 'श्रद्धा' चेतसः प्रसादः । कुशलवस्तुन्यभ्युत्साहो 'वीर्यम्' । 'स्मृति'रालम्बनाप्रमोषः । 'समाधि'श्चित्तस्यैकाग्रता । 'प्रज्ञा' धर्मप्रविचयः ।

श्रद्धानो हि फलार्थं वीर्यमारभते । आरब्धवीर्यस्य स्मृतिरुपतिष्ठते । उपस्थितस्मृतेरविक्षेपाच्चित्तं समाधीयते । समाहितचित्तो यथाभूतं प्रजानाति ।

संसारावचरामिति । संसारान्तः पातिनीम् । लौकिकीम् । लोके भवा लौकिकी, ताम् । सम्यग्दृष्टि परलोकास्तित्वलक्षणम् । कल्याणमिति कुशलम् । पापकमिति अकुशलम् । विपाकमिष्टानिष्टलक्षणं प्रतिसंवेदयिष्यामि । वीर्येण समुदानयति, कुशलेषु अभ्युत्साहलक्षणत्वाद् वीर्यस्य । स्मृतीन्द्रियेण न विप्रणाशयति, आलम्बनासंप्रमोषलक्षणत्वात् स्मृतेः । एकाग्रीकरोति, चित्तैकाग्रतालक्षणत्वात्समाधेः । प्रतिविध्यति साक्षात्करोति, धर्मप्रविचयस्वभावत्वात् प्रज्ञेन्द्रियस्य ।

—अर्थविनिश्चयसूत्रे–१६–३१।२२ ।

---

१. ततभ्रान्ताः–क, ख । २. रतोसत्वोनकृपयो–क, ख ।
३. यथा–क, ख । ४. प्रमादसेविनोभवति–क, ख ।

**विषवत्प्रमादं मत्वा तत्परित्यागिनःधन्या**

प्रमादं विषवद् ये तु परिरक्षन्ति पण्डिताः ।
ते मृत्युसमये प्राप्ते भवन्ति सुखभागिनः ॥ ६९ ॥

प्रमादः परमो मृत्युरप्रमादः परं सुखम् ।
तस्मात् सुखार्थिनाः नित्यं मा प्रमादे मतिं कृथाः ॥ ७० ॥

**धात्वायतन सम्मोहः श्रेयसां विघ्न**

[1]धात्वायतनसम्मोहः श्रेयसां विघ्नकारकः[1] ।
सन्यासः सर्वकर्माणां प्रमादः सम्प्रवर्तते ॥ ७१ ॥

दोषयन्त्रविलग्नाय मायाद्वारस्य दूतकः ।
सम्मोहस्याग्रणी पापः प्रमादः सम्प्रवर्तते ॥ ७२ ॥

**प्रमादरताः मृत्युमुखं प्रति गच्छन्ति**

ये प्रमादरता बालास्ते मृत्योर्हस्तमास्थिताः ।
प्रमादसेवका ये तु ते सर्वे निधनंगता ॥ ७३ ॥

**प्रमादिनो देवा अपि क्षीणपुण्याः भवन्ति**

पुण्यक्षयाय देवानां प्रमादेन विहिंसिताः ।
पतन्ति[2] सुखसंमूढास्त्राणं तेषां तदा कुतः[3] ॥ ७४ ॥

**सद्धर्माचरणं भूतदयैव**

एको धर्मस्तथाश्रेयः कृपया संयतः पृथुः ।
क्षान्तिश्चापि सदा युक्ता दया भूतेषु सर्वदा ॥ ७५ ॥

बलभूता भवन्त्येते मृत्युकाले महाभये ।
तस्मात् प्रमादरहितैः सेवनीयाः प्रयत्नतः ॥ ७६ ॥

---

1. अस्य व्याख्यानं पूर्वं (२।१७) प्रपञ्चितम् ।

---

१. विधुका—क, ख । २. पतन्ते—क, ख ।
३. श्रुत—क, ख ।

**विद्याविधिज्ञस्यैव प्राणिनः शान्तिर्जायते**

अविद्यावर्तनं श्रेयो विद्याया रक्षणं सदा।
विद्याविधिज्ञो यः (सत्वः)प्रमादस्तस्य शाम्यति[१]।
पुरुषार्थो नियतो (ह्यत्र) यत् प्रमादस्य वर्जनम् ॥ ७७ ॥

**अप्रमादरतस्यैव पुरुषार्थसिद्धिर्भवति**

अप्रमादरतस्यैव पुरुषार्थः सतां मतः।
प्रमादो बन्धनं प्रायो मुक्तिस्तस्याप्रमादतः ॥ ७८ ॥

**प्रमादसेवनाद् बन्धनम्**

मोक्षबन्धनयोरेतल्लक्षणं स्यात् सतां मतम्।
एवं मत्वा सदा देवो यः प्रमादेन[२] रक्षति[३]।
स पश्चान्मृत्युसमये ज्ञास्यते तस्य तत्फलम् ॥ ७९ ॥

**सन्तोष एव निर्वाणसाधनम्**

यथा यथा हि सन्तोषः सेव्यते यतिभिः सदा।
तथा तथा हि निर्वाणमन्तिके तस्य वर्तते[1] ॥ ८० ॥

विरागः[४] सर्वकामेषु निर्वाणे च प्रवर्तताम्।
नासौ मारस्य विषयः कदाचित् सम्प्रवर्तते ॥ ८१ ॥

---

1. सन्तोषो वै स्वर्गतमः परमं सुखम्।
तुष्टेर्न किञ्चित् परतः सा सम्यक् प्रतितिष्ठति ॥
—महाभारतस्य शान्तिपर्वे-२१।२-२६।११।

—"सन्तोषप्रकर्षेण योगिनस्तथाविधमान्तरं सुखमाविर्भवति यस्य बाह्यविषय-सुखं शतांशेनाऽपि न समम्" इत्युक्तम् आचार्यभोजदेवेन।

—या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यताम्।
तां तृष्णां सन्त्यजन् प्राज्ञः सुखेनैवाभिपूर्यते ॥
—वाचस्पतिटीकायाम्।

---

१. शाम्यते–क, ख।
२. प्रमादेषु–क, ख।
३. चरक्षते–क ख।
४. नराणां–क, ख।

### ज्ञानेनैव दुःखप्रहाणम्

नराणां पश्य मनसो नित्यं व्यापारमेव च ।
उद्योगश्च सदाज्ञानं स कथं दुःखमेष्यति ॥ ८२ ॥

### कः बन्धनमुक्तो भवति ?

अतीतभयसम्पन्नः[१] प्रत्युत्पन्ने च बुद्धिमान् ।
अनागतविधिज्ञो[२] यः स मुक्तः क्लेशबन्धनात् ॥ ८३ ॥

अप्रमादरतो नित्यमविश्वासे च कातरः ।
संज्ञानसेवी विमलो निर्वाणस्यान्तिके स्थितः ॥ ८४ ॥

### महत्सुखं प्रमादेन नश्यति

प्रमादेनापि नश्यन्ति देवाः प्राप्यमहत्सुखम् ।
किं पुनर्येन वा मूढाः प्रमादवशसेविनः ॥ ८५ ॥

मृतः स नरो भवति यः प्रमादविहारवान् ।
जीविते च प्रमत्तोऽयं सततं ज्ञानधारणे ॥ ८६ ॥

### प्रमादाप्रमादयोरन्तरम्

अप्रमादप्रमादाभ्यामिदमन्तरमिष्यते ।
मृत्युं च वर्जयेद् दोषं प्रमादं दुःखमूलकम्[३] ॥ ८७ ॥

नित्यं प्रमुदिता देवाः नित्यं प्रमुदिता वयम् ।
पक्षिणां च सुराणां च विशेषो नोपलभ्यते[४] ॥ ८८ ॥

न धर्माचरणं दृष्टं मोक्षचर्या न यात्यसौ ।
तथैव यदि देवानां ते गताः पक्षिभिः समा ॥ ८९ ॥

ये प्रमादविनिर्मुक्ता ये च धर्मरताः सदा ।
ते देवाः[५] सत्पथा लोके न प्रमादविहारिणः ॥ ९० ॥

यदि क्रीडारता देवाः प्रमादचरिताः सदा ।
देवानां च खगानां च विशेषो नोपलभ्यते[६] ॥ ९१ ॥

---

१. सम्पत्ता–क, ख ।　　२. विधिज्ञे–क, ख ।
३. बंधनैः–क, ख ।　　४. मूलवत्–क, ख ।
५. देवत्सत्यता–क, ख ।　　६. नोपलक्ष्यते–क ।

## धर्मपतितः जात्या न शोभते

कर्मणां तु विशेषेण जातिर्धर्मैर्विशिष्यते ।
न धर्मपतितः कश्चिद् जात्या भवति शोभनः ॥ ९२ ॥

येन निन्दन्ति संसारमिमं सर्वक्षयात्मकम् ।
ते सुरापिसमा नित्यं पक्षिभिर्मूढबुद्धिभिः ॥ ९३ ॥

येषामेवस्थिता बुद्धिरमता[१] धर्मगोचरे ।
ते देवाः सम्मत्ता[२] लोके न प्रमादविचारिणः ॥ ९४ ॥

ये जन्महेतुप्रभवं दुःखं बुध्यन्ति शोभनम् ।
ते देवा न तु ये सक्ताः कामेषु हितकारिषु ॥ ९५ ॥

वियुज्यमाना बहुशो भृत्यस्वजनबान्धवैः ।
ये नोद्विजन्ति[३] संसारे ते देवाः पक्षिभिः समाः ॥ ९६ ॥

## मद्यपानाधिकः प्रमादः

मद्यपानाधिको दृष्टः[४] प्रमादस्तत्त्वदर्शिभिः ।
जीर्यते मद्यपानं हि प्रमादो नैव जीर्यते ॥ ९७ ॥

## प्रमादमत्तो गतिपञ्चके भ्रमते

प्रमादोपहतोलोको भ्रमते [1]गतिपञ्चके ।
तस्मात् प्रमादमत्तो हि सर्वोपायैर्विशिष्यते ॥ ९८ ॥

---

1. नरकादिस्वनामोक्ता गतयः पञ्च तेषु ताः ।
अक्लिष्टाव्याकृता एव सत्त्वाख्या नान्तराभवः ॥

एवं नरक-प्रेत-तिर्यङ्-मानुष-देवनामभिरुक्ताः 'पञ्चगतयः'। ताश्च पञ्च-गतयो विपाकतोऽक्लिष्टाव्याकृता एव सन्ति । सत्त्वाख्या सत्त्वनिवासलोका अन्तराभवः च न गतिषु परिगण्यन्ते । अतएव गतीनां संख्या धातूनां स्थानक्रमेण न पञ्चाधिका ।

—अभिधर्मकोशे--३।४ ।

---

१. बुद्धिरतलो—क, ख ।
२. संमतो—ख ।
३. जेति—क, ख ।
४. दृष्टे—क, ख ।

**प्रमादः मद्यादपि हीनतरः**

एकाहं परमं मद्यं प्रमादयति देहिनः ।
प्रमादः कल्पकोटिभिर्भ्रमतोऽपि न जीर्यते ॥ ९९ ॥

ये प्रमादैर्विरहितास्ते गताः पदमव्ययम् ।
ये तु प्रमादवशगास्ते भवन्ति खगा[1] नराः ॥ १०० ॥

हितार्थिना मनुष्येण प्रमादोवर्ज्य एव हि ।
यस्मात् प्रमादवशगाः क्लेशा[2] बुद्धेन देशिताः ॥ १०१ ॥

**देवानां कृतेऽपि प्रमादो हेय एव**

खगा यदि प्रमादेन कुर्वन्ति[3] लघुचेतसः ।
कस्माद्देवाः प्रमादं (तं) न जहंति विशेषतः ॥ १०२ ॥

यस्तु दूरात् प्रमादेन[4] भयं नावैति दुर्मतिः ।
सोऽवश्यं व्यसने प्राप्ते पश्चात्तापेन दह्यते ॥ १०३ ॥

पतनं देवलोकात् ते दानै रक्षन्ति[5] दारुणम् ।
तद् विचिन्त्य प्रमादस्ते न संसेव्यः कथञ्चन ॥ १०४ ॥

ये प्रमादरता नित्यं न ते सौख्यस्य भागिनः ।
प्रमादो दुःखमूलश्च मूलमेकं सुदारुणम् ॥ १०५ ॥

पद्मकोटिसहस्राणि नियुतान्यर्बुदानि च ।
असंख्यानि च देवानां प्रमादेन वितन्विताः ॥ १०६ ॥

**अप्रमादः परं मित्रं प्रमादश्च शत्रुः**

अप्रमादः परं ( मित्रं ) नित्यं हितकरं नृणाम् ।
प्रमादस्तु परं शत्रुस्तस्यन्मित्रपरो भवेत् ॥ १०७ ॥

शुभस्यान्तकरो[6] ह्येष विषवद् दारुणं[7] परम् ।
दुर्गतीनां परं मार्गः प्रमाद इति कथ्यते ॥ १०८ ॥

---

१. भवन्नित्यगा–क, ख ।
२. कीर्तिताः–क, ख ।
३. क्रियते–क, ख ।
४. प्रमादोयं–क, ख ।
५. कात्तेक्षनैरक्ष्येति–क, सनेरभ्यैति–ख ।
६. समं–क, ख ।
७. विषं चतुर्दारुणं–क, ख ।

प्रमादेन प्रमत्ता ये विषयैश्चापि रञ्जिताः ।
नरास्ते मूढमनसो नित्यं दुःखस्य भोगिनः ॥ १०९ ॥

**ज्ञानशून्याः भयदुःखमविगण्य पशुभिः समाः भवन्ति**

येषां भयं न दुःखं[1] (च) न च ज्ञानावलोकनम् ।
पशुभिस्ते समाविष्टा न पुरा सुखकांक्षिणः ॥ ११० ॥

आहारमैथुनरतिः पशूनां हृदि वर्तते ।
सा रतिर्यदि देवानां ते गताः पशुभिः समाः ॥ १११ ॥

**प्रमादः मृत्योः पर्याय एव**

क्रीडन्त्यतिशयं ह्येते मृत्योर्गम्ये पुरःस्थिता ।
सम्प्राप्ते मृत्युसमये फलं दास्यन्ति (दारुणम्) ॥ ११२ ॥

विषवत् परिहेयो(ऽयं) सर्वैरपि (सुदुःसहः) ।
मृत्योः पर्यायनामैष[2] प्रमादो हृदि देहिनाम् ॥ ११३ ॥

प्रमादेन हतान्[3] पूर्वं[4] पश्चान्मृत्युः प्रमर्दति[5] ।
धर्मजीवितसौख्यानां तमेकांशं प्रकथ्यते ॥ ११४ ॥

**अप्रमाद एव स्वर्गमार्गः**

अप्रमाद[6] इति ख्यातः स्वर्गमार्ग प्रदेशकः ।
अर्थानर्थौ समावेतौ पश्चान्मोक्षस्तथैव[7] (च) ॥ ११५ ॥

**अप्रमादः गुणः प्रमाद एव दोषः**

अप्रमादः प्रमादश्च गुणदोषसमाविभौ[8] ।
तत्रैव मूढमनसो विजानन्ति च देहिनः ॥ ११६ ॥

शत्रुणा सह रक्षन्ति ज्ञाने परिहरन्ति च ।
प्रमादविषवृक्षस्य शाखास्तिस्रः प्रतिष्ठिताः ॥ ११७ ॥

जरा व्याधिश्च मृत्युश्च नित्यं तस्योपरिस्थिताः ।
जरादयो न बाध्यन्ते पुरुषं सत्क्रियान्वितम् ॥ ११८ ॥

---

१. दुःखेति—क, ख ।
२. मृत्युपर्यायनामैतत्—क, ख ।
३. हताः—क ख ।
४. पूर्वाः—क, ख ।
५. प्रसीदति—ख ।
६. अमाद—क, ख ।
७. पश्चमोक्षो तथैव—क, ख ।
८. विदंसमं—क, ख ।

अप्रमादी सदा भयनिर्मुक्तः सन् सुखीतिष्ठति

संसारे तिष्ठते धीमानप्रमादरतः सदा।
निकृन्तन्ति सदा दोषा न प्रमादं परिष्वजेत् ॥ ११९ ॥

सदा भयविनिर्मुक्तः सुखं प्राप्नोत्यनुत्तमम्।
(अ) प्रमादाच्च यत् सौख्यं शाश्वतं स भयं हि तत् ॥ १२० ॥

यत्तु[१] तस्माद् विनिर्मुक्तं तत् सौख्यं ध्रुवमच्युतम्।
शतशो[२] मनुजा (ह्यत्र) प्रमादेन विमोहिताः ॥ १२१ ॥

तथापि नाम वशगास्ते प्रमादे प्रतिष्ठिताः[३]।
चत्वारो हि [1]विपर्यासाः प्रमादस्योपरिस्थिताः ॥ १२२ ॥

प्रमादविरहात्तेपि नश्यन्ति लोकशत्रवः।
यदनेकविकल्पोऽयमनेकभयसङ्कटः ॥ १२३ ॥

---

1. दृष्टित्रयाद् विपर्यासचतुष्कं विपरीततः।
अतीरणसमारोपात् चित्तं संज्ञां च तद्वशात् ॥

एवम् अन्तग्राह दृष्टेः नित्य-दृष्टिभाग एको 'विपर्यासः' ( मिथ्याज्ञानं ), दृष्टिपरामर्शे भागद्वयं द्वौ विपर्यासौ. सत्कायदृष्टे आत्मदृष्टिभाग एकः, एवं दृष्टित्रये चत्वारो विपर्यासा भवन्ति।

अन्ये क्लेशा न विपर्यासाः। विपर्यासे त्रीणि लक्षणानि सन्ति—विपरीतता, अतीरणता, समारोपता च। विपरीतता यथा अनात्मनि आत्मज्ञानम्। अतीरण अनध्यवसायः, यथा—स्थाणुर्वा पुरुषो वा। समारोपः तद्गुणाभाववति तद्गुणारोपः।

दृष्टिवशादेव, चित्तं, संज्ञा च विपर्यासः। चित्त-संज्ञा-संयुक्ता हि दृष्टिः विपर्यासे परिगृह्यते।

—अभिधर्मकोशे—५।९।

— विपर्यासेन संज्ञानां चित्तं ते परिदह्यते।
निमित्तं वर्ज्यतां तस्माच्छुभं रागोपसंहितम् ॥
—सुतनिपाते।

— नितीरणसमारोपविपरीतप्रवृत्तितः।
विपर्यासोवितरेष्वेव दृग्वषा (शात्) चित्तसंज्ञयोः ॥
—अभिधम्मदीपे-२७४।

---

१. यत्—ख। २. शतशत्पद्मशश्चैव—क, ख।
३. नामत्वशागास्तेसौ बाधावतिष्ठतः—क, ख।

**प्रमादरहिताः देवाः सन्तोऽच्युतं सुखमश्नुते**

संसारो भ्रमते दुःखे तत् प्रमादस्य चेष्टितम् ।
एकः प्रमादविरहात्[1] प्राप्यते सुखमच्युतम् ॥ १२४ ॥

प्रमादेन विनश्यन्ति सर्वधर्मा हतास्रवाः[2] ।
देवानां च प्रमादोऽयमुपर्युपरि वर्तते ॥ १२५ ॥

कथं प्रमादसम्मूढाः देवा यास्यन्ति निर्वृतिम् ।
तदे(त) त् सौम्यमनसा चिन्तयित्वा विकल्पयेत् ॥ १२६ ॥

तथा मे हित मास्थेयं यथा यत् स्यात्[3] (सुखावहम्) ।
ये देवा यच्च तत्सौख्यं पश्यन् यदपिकिञ्चन ॥ १२७ ॥

**संस्कृतस्यैव ध्रुवपदप्राप्तिर्भवति**

तत् सर्वं (हि) ध्रुवं गत्वा [1]संस्कृतस्यैष सम्भवः ।
अवश्यं ते विनश्यन्ति ये भावाः संस्कृताश्चलाः ॥ १२८ ॥

**प्रमादवशाद् देवा अपि दुःखभागिनः भवन्ति**

प्रमादनिरता[4] (देवा) नित्यं दुःखस्य भागिनः ।
प्रमादापहृतजनो यस्तेषां कुरुते मतिः ॥ १२९ ॥

संवियोगे समुत्पन्ने दुःखेन परितप्यते ।
विषयेषु सकामेषु तृष्णावनगतेषु च ॥ १३० ॥

---

1. सं सम्भूय अन्योन्यमपेक्ष्य कृता जनिता इति 'संस्कृताः' । एवं हेतुप्रत्ययजन्यं सास्रवधर्मयुक्तञ्च ज्ञानं 'संस्कृतम्' ।

— सास्रवालम्बनाः स्वे च तृतीयेऽप्यनुशेरते ।
परिवृत्ते तु रूपाप्ताः संस्कृतार्थावलम्बिनः ॥

त्रिधातुसङ्गृहीतास्तु सकला मन इन्द्रिये ।
तदालम्बिनि विज्ञाने सर्वसंस्कृतगोचराः ॥

संस्कृतालम्बना एव परिवृत्तेऽनुशेरते ।
विशेषो द्विःपरावृत्तौ विद्यतेऽत्र न कश्चन ॥

—अभिधम्मदीपे—३३९, ३५१, ३५२ ।

---

१. एकोप्रमादविहार–क, ख ।
२. विनश्यन्ते सर्वधर्माहृताश्रवाः–क, ख ।
३. पश्चात्तु पश्यते–क; ख ।
४. विनाशादयमुखं–क; ख ।

तेन ते वञ्चिता देवाः प्रमादवशवर्तिनः ।
मूलमेतदनर्थानां यत्प्रमादानुसेवनम् ।। १३१ ।।

**प्रमादवर्जनं क्षेमकरम्**

तस्यैतद् वर्जनं धन्यं सर्वक्षेमकरं महत् ।
सत्वा नैवापन्नसुखा दुःखैश्चापि समन्विताः ।। १३२ ।।

तथा बुद्धिरनुष्ठेया यथा मत्स्या जलानुगाः ।
स्वर्गे प्रमादवशगा स्त्रीविधेयाश्च ते सुराः ।। १३३ ।।

**प्रमादिनो दुःखभागिनो भवन्ति**

ते स्त्रीवह्निविनिर्दग्धा नित्यं दुःखस्य भागिनः ।
तस्मात् प्रयत्नशो देवैरङ्गना परिवर्जनम् ।। १३४ ।।

कर्त्तव्यं कामलोलस्य मनसा[1] धृतिवर्धनम् ।
कार्याकार्यविमूढस्य धर्माधर्मे तथैव च ।। १३५ ।।

पुरुषस्यात्मभङ्गस्य[2] निर्वाणं दूरमेव तत् ।
गुरुताभावतत्त्वज्ञो निपुणो धर्मगोचरः ।। १३६ ।।

**धर्मिण एव सुखमाप्नुवन्ति**

धर्माकांक्षी फलाकांक्षी तादृशं लभते सुखम् ।
निर्धौतमघकल्माषाः नित्यं धर्मानुवर्तिनः ।। १३७ ।।

**प्रमादविमोहिता एव दुःखमाप्नुवन्ति**

सुखिनस्ते सदा दृष्टा न प्रमादविहारिणः ।
प्रमादापहृतः पूर्वं प्रमादेन विमोहिताः ।। १३८ ।।

**मद्येन देवोऽपि प्रमादमेति**

देवो वा पुरुषश्चापि न सुखस्यान्तिके[3] हि सः ।
मृतः स पुरुषो नित्यं यो मद्येन प्रमाद्यति ।। १३९ ।।

मद्यदोषाधृताः सर्वे भवन्ति नरके नराः ।
असंसर्गचरो दोषो मद्यमित्यभिधीयते ।। १४० ।।

---

१. मनसे—क; ख ।
२. लाभांगस्थ—क, ख ।
३. शर्मस्यान्तिके—क ।

मद्येन मोहिता नित्यं देवाः नरकगामिनः ।
असम्भूतेषु रक्षन्ते न सम्भूते कथञ्चनः ॥ १४१ ॥

मदात्स्वाकारमलिना[१] देवाः कामैर्विमोहिताः ।
कामेन मोहिता देवा मद्येनापि तथैव च ॥ १४२ ॥

**प्रमादी तत्त्वं न पश्यति**

न तत्त्वमत्र पश्यन्ति जात्यन्धा इव सत्पथम् ।
प्रमादाकुलितं चित्तं न तत्त्वमनुपश्यति ॥ १४३ ॥

प्रमादश्चाग्निवत्तस्मात् परिवर्ज्यः समन्ततः ।
प्रमादेन विनश्यन्ति कुशला धर्मयोनयः ॥ १४४ ॥

**प्रमादविषसेवनं नाशायैव जायते**

मार्गं च विषसंस्पृष्टं[५] सर्वथा नैव पश्यति ।
[1]दशधर्मा विनश्यन्ति[६] प्रमादविषसेविनाम् ॥ १४५ ॥

---

1. दशधर्मा महाभौमा वित्संज्ञाचेतनास्मृतिः ।
छन्दः स्पर्शोऽधिमोक्षश्च धीः समाधिर्मनस्कृतिः ॥

एते दशधर्माः सर्वस्यां चित्तभूमौ त्रैधातुक्यामनास्रवायां च समग्रा भवन्ति ।

तत्र वेदना सुखादिस्त्रिविधोऽनुभवः । त्रिविधं संवेदितामिति पर्यायः । इष्टानिष्टोभयविपरीतविषयेन्द्रियविज्ञानसन्निपातजा धर्मयोनिः कायचित्तावस्था विशेषः प्रह्लाद्युपपाति तदुभयविपरीतश्च तृष्णाहेतुर्वेदनेत्युच्यते ।

निमित्तनामार्थैक्यज्ञा संज्ञा वितर्कयोनिः । चित्ताभिसंस्कारश्चेतना । चित्तव्यापाररूपा स्मृतिः । चित्तस्यार्थाभिलपना कृतकर्त्तव्यक्रियमाणं कर्मान्ताविप्रमोषलक्षणा । छन्दः कर्तुकामता वीर्याङ्गभूतः । विषयेन्द्रियविज्ञानसन्निपातजा चित्तस्य विषयस्पृष्टिः, चैतसिकधर्मो जीवनलक्षणः स्पर्शः ।

चित्तस्य विषयेऽधिमुक्तिरधिमोक्षो रुचिद्वितीयनामा चित्तस्य विषयाप्रतिसंकोचलक्षणः । धीः प्रज्ञा धर्मसङ्ग्रहाद्युपलक्षणस्वभावा । चित्तस्यैकाग्रता समाधिश्चित्तास्थितिलक्षणः । चित्तस्याभोगो मनस्कारः पूर्वानुभूतादिसमन्वाहारस्वरूपः ।

सूक्ष्मः खलु चित्तचैत्तानां विशेषो दुःखधारो रूपिणीनामेव तावदोषधीनां बहुरसानामिन्द्रियग्रा ह्योऽपि रसविशेषो दुःखधारः, किमङ्ग पुनरमूर्तानां चित्तचैत-

---

१. प्रमादति–क, ख ।
२. समस्यान्तिके–ख ।
३. मदार्थकार–क; ख ।
४. विनश्यंते–क, ख ।
५. स्वाटविधं स्पष्टं–क, ख ।
६. विनश्यन्ते–क, ख ।

[1]ध्यानानि चैव चत्वारि[१] प्रणश्यन्ति प्रमादिनः ।
अप्रमादं प्रशंसन्ति बुद्धाः कामविवर्जिताः ॥ १४६ ॥

### अप्रमत्ता जरामुक्ता भवन्ति

प्रमादञ्च जुगुप्सन्ति[२] जरामरणपञ्जरम् ।
अप्रमत्ता जरामुक्ता प्रमत्ता दुःखभोगिनः ॥ १४७ ॥

### प्रमाद एव बन्धनम्

प्रमादो बन्धनं[३] ह्येतद् दुःखितं मन्दबुद्धिनाम् ।
अप्रमादेन कुशला देवानां समितिङ्गताः ॥ १४८ ॥

तस्मात् ते पतिता भूयो ये प्रमादानुसेविनः ।
प्रमत्तपुरुषः सर्वं संसारान्नैव मुच्यते ॥ १४९ ॥

प्रमादपाशपाशेन[४] येन बद्धा हि देहिनः ।
अकार्यं[५] कार्यसदृशं कार्यं कुर्वन्ति सर्वदा ॥ १५० ॥

### अप्रमादिनः कल्याणपरम्परामाप्नुवन्ति

अप्रमादान्नरः[६] सर्वं विपरीतं (हि) पश्यति ।
न लौकिकेषु कार्येषु कुतो न श्रैयसेषु च ॥ १५१ ॥

प्रमादं न प्रशंसन्ति पण्डिता बुद्धिपारगाः ।
यथा शुभं परिक्षीणं भविष्यति दिवौकसाम् ॥ १५२ ॥

---

सिकानां धर्माणामेककलापवर्तिनां बुद्धिगम्यः ? स तु हेतुफलस्वभावैर्मतिमद्भिर-भ्यूह्य इति ।

—अभिधर्मदीपे-११२ ।

-- धर्मस्य लक्षणं प्रतिपादयता स्मृतिकारैः कथितम्--

अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
धीर्विद्या बुद्धिरक्रोधो दशकं धर्मलक्षणम् ॥ इति ।

1. अस्य व्याख्यानं पूर्वं (१।७) प्रपञ्चितम् ।

---

१. चत्वार्य्येव–क, ख ।
२. जुगुप्सेति–क, ख ।
३. बन्धना–क, ख ।
४. पाशानां–क, ख ।
५. अकार्या–क, ख ।
६. कार्य्योवाकार्य्यं तत्सर्वदा–क, ख ।

### प्रमादफलं हानिकरम्

तदा प्रमादस्य फलं ज्ञास्यन्ति[1] कटुकं हि तत्[2] ।
कामसंसक्तमनसां तस्यान्ते सुखसेविनाम् ।। १५३ ।।

भविष्यति सुखं तस्माद् विनिपातोदयो महान् ।
विषयाभिमुखेप्सूनां नित्यमाशागतात्मनाम् ।। १५४ ।।

स्त्रीदर्शनसुमत्तानां विनिपातो भविष्यति ।
(नित्यं कामान्) निषेवन्ते[3] प्रमादरागसेविनः ।। १५५ ।।

ताः सर्वा मृत्युसमये परित्यक्ष्यन्ति योषितः ।
च्यवमानं सुरं सर्वे न कश्चिदनुगच्छति ।। १५६ ।।

### मोक्षाभिलाषिणः दुष्कृतं त्यजन्ति

कर्मणा[4] पृष्ठतः सर्वं गच्छन्तमनुयाति च ।
युक्तं[5] च (हि) सदा सेव्यं वर्जनीयं च दुष्कृतम् ।। १५७ ।।

प्रमादं च मदं जह्यात् प्रमाद (वि)रतो भवेत् ।
प्रमादो भवमूलोऽयं प्रमादस्तु न शान्तये ।। १५८ ।।

### प्रमादाप्रमादौ विचिन्त्य धीरः सुखमेधते

अप्रमादप्रमादाभ्यामिदमुक्तं [1]स्वलक्षणम् ।
तद् विचिन्त्य सदा धीरः सुखं सुचरितं चरेत् ।। १५९ ।।

---

1. प्रत्यक्षस्य विषयः स्वलक्षणम्' । यस्यार्थस्य संनिधानासंनिधानाभ्यां ज्ञान-प्रतिभासभेदस्तत् स्वलक्षणम् । तदेव परमार्थसत् । अर्थक्रियासामर्थ्यलक्षणत्वाद् वस्तुनः ।

स्वलक्षणमित्यसाधारणं वस्तुस्वरूपं देशकालाकारनियतम् । एतेनैतदुक्तं भवति-घटादिरूदकाद्याहरणसमर्थो देशकालाकारनियतः पुरः प्रकाशमानोऽनित्यत्वाद्यनेकधर्मान्तरोदासीनः प्रवृत्तिविषयसजातीयविजातीयव्यावृत्तः स्वलक्षणमित्यर्थः ।

—बौद्धतर्कभाषायां प्रत्यक्षपरिच्छेदः ।

---

१. दात्पुरुषः सर्वोविपरीतानि—क, ख । २. ते—क, ख ।
३. यतिसार्द्धनिषेवन्ते—क, ख । ४. कर्मेव—क, ख ।
५. सुकृतं—क, ख ।

**धर्मचारी कदापि दुःखं नाप्नोति**

न धर्मचारी पुरुषः कदाचिद् दुःखमृच्छैति।
संसरन्त्यथ संसारे प्राणिनः स्वेन कर्मणा ॥ १६० ॥

**प्रमादो विनिपाताय**

किमर्थमिहलोकोऽयं प्रमादेन विहन्यते।
प्रमादः श्रेयसां नाशः प्रमादो बन्धनं परम् ॥ १६१ ॥

प्रमादो विनिपाताय प्रमादो नरकाय च।
दुःखस्य हेतुरेवैकः प्रमादः परिकीर्तितः ॥ १६२ ॥

**अप्रमादरतो निर्वाणमधिगच्छति**

तस्मात् सुखार्थी पुरुषः प्रमादं परिवर्जयेत्।
यैः प्रमादः परित्यक्तः प्राप्तं तैः पदमच्युतम् ॥ १६३ ॥

अप्रमादरतो यो हि निर्वाणस्यैव सोऽन्तिके।
अप्रमादपदं ह्येतन्निर्वाणस्याग्रतः पदम् ॥ १६४ ॥

**प्रमत्तः सदैव दुःखितो भवति**

प्रमादो विनिपाताय हेतुरेषः प्रकीर्तितः।
प्रमत्तः पुरुषः सर्वः सोन्माद इव लक्ष्यते ॥ १६५ ॥

लघुत्वं याति लोकेऽस्मिन् प्रत्यवायेषु पच्यते।
प्रमत्तः पुरुषः शक्तो विपरीतेषु वर्तते ॥ १६६ ॥

हेतौ कर्मविपाके च मृत्यूत्पत्तौ तथैव च।
प्रमादाग्निश्च यं तीक्ष्णो नरकानुपकर्षति।
तस्मान्नरकमोक्षार्थं प्रमादं विनिवर्जयेत् ॥ १६७ ॥

ये प्रमादं विनिर्जित्य नित्यं ज्ञानरता नराः।
ते क्लेशबन्धनं छित्वा पदं याताः सुखोदयम् ॥ १६८ ॥

कर्मसूत्रैर्निबद्धाश्च चित्तदोलां समाश्रिताः।
भ्रमन्ति विभवे सत्त्वा मा प्रमादेषु रक्षथः ॥ १६९ ॥

सुखी भवति दुःखी वै[१] दुःखितश्चापि सुखितः।
भर्तापि तृप्तो भवति मा प्रमादेषु रक्षथः ॥ १७० ॥

---

१. हि–क, ख।

माता पिता वा भवति भार्या मातृत्वमेव च ।
परिवर्तो महानेषु मा प्रमादेषु रक्षथः ।। १७१ ।।

प्रमादाज्जायते रागो[1] रागाद् द्वेषः प्रपद्यते ।
स दोषपथमापन्नो नरकानुपधावति[2] ।। १७२ ।।

## प्रज्ञारूढः प्रमादशून्यः सन् शिवं पन्थानमाप्नोति

प्रज्ञा-प्रासादमारोह योगक्षेमसमनुत्तमम् ।
एष पन्थाः[3] शिवः श्रेष्ठो यः प्रमादविवर्जितः ।
तेन मार्गेण सततं निर्वाणं यान्ति पण्डिताः ।। १७३ ।।

विरोधो मार्गसम्पत्तौ चित्तसन्तानदूषकः ।
आछेत्ता धर्मसेतूनां प्रमादः परिकीर्तितः ।। १७४ ।।

## प्रमादोपहताः नाशं यान्ति

स्मृति सन्दूषकं दृष्टं मोक्षाय वृत्तिनाशकः ।
दुर्गतीनां[4] परं नेता प्रमादः सम्प्रवर्तते ।। १७५ ।।

अनेक पुरुषः क्षिप्तो नात्मनो विन्दते हितम् ।
नावाच्यं न च कार्याणां विन्दतेऽमृतकोपमः ।। १७६ ।।

त एते पशुभिस्तुल्या देवविग्रहधारिणः ।
प्रमादोपहता मूढा नृत्यन्ति च हसन्ति च ।। १७७ ।।

उत्पन्नाविच्युताः मार्गात्[5] क्षान्ति ये नाशयन्ति[6] च ।
नृभवार्णवभूता[7] ये ते प्रमादानुधाविनः ।। १७८ ।।

जनकः सर्वदोषाणां बन्धनं पापकर्मणाम्[8] ।
प्रमोषः[9] सर्वधर्माणां प्रमादारिः प्रवर्तते ।। १७९ ।।

---

१. रोगोरोगाद्वेष–क, ख । २. प्रमादमदेनमदान्तदतिपण्डित-भेद नपदा तद्वदन्ति-ख ।
३. वपण्डा–क, ख ।
४. दुर्गतिनां– ख । ५. स्वार्मेन-क, ख ।
६. चनशन्ति–क, ख । ७. भूतानिस्ते–क, ख ।
८. कर्मणाः–ख । ९. प्रमादो–ख ।

**सर्वेषां शुभकर्मणां प्रमादः शत्रुरेव**

नाध्यात्मिकानि[१] कर्माणि न बाह्यानि कथञ्चन।
प्रमादोपहतो जन्तुर्जानीते नष्टमासनः[२] ॥ १८० ॥

क्रीडायां[३] व्यग्रमनसो नृत्यगान्धर्वलालसाः।
अतृष्णाविषयैर्दिव्यैर्नक्ष्यन्ति विबुधालयाः ॥ १८१ ॥

भयस्थाने हसन्त्येते प्रमादेन विमोहिताः।
मार्गामार्गं न विन्दन्ति जात्यन्धेन सुराः समाः ॥ १८२ ॥

**कामधातावेव प्रमत्ताः भ्रमन्ति**

कामधातौ भ्रमन्त्येते चक्रवद्गति[४] पञ्चके।
ध्यानेभ्यो यद्धि पतनं[५] तत् प्रमादस्य चेष्टितम् ॥ १८३ ॥

**प्रमादचेष्टितं कर्मपतनाय जायते**

आरूप्येभ्यश्च यत्स्थानं चतुर्थं प्राप्यलौकिकात्।
भ्रमन्ति भ्रमदोलायां तत् प्रमादस्य चेष्टितम् ॥ १८४ ॥

प्रमादबन्धनैर्बद्धं तृष्णापाशैश्च यन्त्रितम्।
[1]त्रैधातुकमिदं कृत्स्नं न च बुद्धयन्त्य चेतसः[६] ॥ १८५ ॥

यत् प्रयान्ति धर्मस्थानं तृष्णाभयदर्शिताः।
न भूयः खेदमायाति तत् प्रमादस्य चेष्टितम् ॥ १८६ ॥

**प्रमादवशात् दुःखमेवाप्नोति जनः**

प्रियविश्लेषजं नृणां यद्दुःखं हृदि जायते।
सेवनाद् यत् प्रमादस्य कथयन्ति तथागता ॥ १८७ ॥

अनर्था हि त्रयो लोके यैरिदं नश्यते जगत्।
व्याधिर्जरा च मृत्युश्च प्रमादालस्य[७] सम्भवाः ॥ १८८ ॥

प्ररोहन्ति यथा भूमौ सर्वौषधितृणादयः।
तथा प्रमादिनां क्लेशाः प्रवर्तन्ते पृथग्विधाः ॥ १८९ ॥

---

1. व्याख्यानमस्य पूर्वं (३/१४) प्रपञ्चितम्।

---

१. नाध्यात्मिकान्तिकान्ति—क, नाध्यात्मिकाणि—ख। २. जीवति—क, कनिते—ख।
३. क्रीडातद्व्यग्रमनसो नृत्तः—क, ख। ४. यच्च वक्रङ्गति—क, ख।
५. यत्पततं—क, ख। ६. मेधसः—क, ख।
७. दारु—क, प्रमादो, ख।

**प्रमादस्य विषाङ्कुरः**

स्त्रीश्लेषो मद्यपानं च क्रीडा च विषयैः सह।
चापल्यमयकौसीद्यं प्रमादस्य विषाङ्कुरः ॥ १९० ॥

**प्रमादाप्रमादयोर्लक्षणम्**

प्रमादः परमं दुःखमप्रमादः परं सुखम्।
समासाल्लक्षणं प्रोक्तमप्रमादप्रमादयोः ॥ १९१ ॥

**अतः प्रमादो न सेव्यः**

तस्मात् प्रमादो न नरेण[1] सेव्यः,
स दुर्गतीनां प्रथमाग्रमेव[2]।
विहाय तं दुःखसहस्रयोनिं,
प्रयान्ति बुद्धा भवपारग्रचम् ॥ १९२ ॥

॥ इति अप्रमादवर्गः षष्ठः ॥

---

१. नरेन–ख। २. प्रथमाग्रह्येव–क, हेतु–ख।

# (७) कामजुगुप्सावर्गः

**कामस्य नरकहेतुत्वम्**

न [1]कामेषु रतिं कुर्यात्[१] कामाः परमवञ्चकाः ।
संसारबन्धना घोराः सर्वे नरकहेतवः ॥ १ ॥

यः संरक्षति कामेषु तस्य दुःखमनन्तकम् ।
न कामोरगदष्टस्य सुखमस्ति कथञ्चन ॥ २ ॥

**रागादिवशगानां चेष्टितम्**

वरं निशितधारेण क्षुरेण स्वयमात्मनः ।
संक्षोदिता भवेज्जिह्वा न चोक्तं कामगंव(चः) ॥ ३ ॥

[2]रागेण वञ्चिताः सत्त्वा द्वेषेण परिपीडिताः[२] ।
मोहस्य वशमापन्ना भाषन्तेऽमधुरं[३] वचः ॥ ४ ॥

---

1. कामेषु मिथ्याचारः यतोऽयमतिसदोषः, अस्याकरणं हि सुखेन साध्यम्, आर्यैः तदकरणं लब्धं च ।

   कामे दश इमे अनुशयाः, ते दुःखदृष्टया प्रहातुं शक्याः । सत्कायाऽऽन्तग्राहशीलव्रतपरामर्शेति त्रिकं विहाय अन्ये सप्त उत्पत्ति दृष्टया प्रहाणदृष्ट्या च प्रहेयाः । सत्कायान्तग्राहवर्जिता अष्टौ मार्गदृष्ट्या प्रहेयाः । यथा उक्तम् आचार्यवसुबन्धुना—

   "दशैते सप्त सप्ताष्टौ दृष्टिद्वित्रिविवर्जिताः ।
   यथाक्रमं प्रहीयन्ते 'कामे' दुःखादिदर्शनैः ॥"

   —अभिधर्मकोशे अनुशयांशः ।

2. 'राग' बहुलोऽशुभभावनयाऽवतरति, वितर्कबहुलश्च आनापानस्मृत्या । अशुभभावना शरीरेऽशुचिभावदर्शनेन, तदर्थं विनीलक-विपूयक-विरवादितक-विक्षिप्तिकादयः, श्मशानक्षिप्ताः शवा भावयितव्याः चत्वारो रागिणः- वर्ण-रूप-स्पर्श-कीर्ति-रागिभेदात् । सर्वरागिष्वेव अस्थिभावना बन्धनशृङ्खला । यथोक्तम्–आचार्यवसुबन्धुना—

   'रागवितर्कबहुलाः शृङ्खला सर्वरागिषु ।'

---

१. कुरु । २. परिदीपिता–क, परिमिता–ख ।

३. भाष्यन्त्यमधुर–क, ख ।

**रागवशगः सदा दुःखतममनुभवति**

अल्परागाग्निरुद्धो यः कुरुते दुष्कृतं बहु ।
स रागवशगो मूढो दुःखाद् दुःखमवाप्नुयात् ॥ ५ ॥

**कामपरिणतिमाह**

अतृप्तिरस्मात्[१] कामास्ते न सुखा नापि शाश्वताः ।
परिणामे महातीव्रास्तस्मात्[२] तान् परिवर्जयेत् ॥ ६ ॥
रागाभिभूताः पुरुषा नरकालयवर्तिनः ।
न रागवशगा ये तु न तेषां नरकाद् भयम् [1]॥ ७ ॥

**कामविषं परित्याज्यम्**

चण्डाचण्डिसमुत्थाश्च चण्डाश्च परिणामतः ।
कामा[३] विषाग्निप्रतिमाः परिवर्ज्याः प्रयत्नतः ॥ ८ ॥

परिवर्जितकामस्य नित्यं मोक्षरतस्य च ।
[2]नश्यन्त्यकुशला[४] धर्मास्तमः सूर्योदये तथा ॥ ९ ॥

---

— रागभेदेन सप्तोक्ताः भवरागो द्विधातुजः ।
अन्तर्मुखत्त्वात् तन्मोक्षसंज्ञा व्यावृत्तये स्मृतः ॥
— राग-प्रतिघ-मानैस्तैरतीत प्रत्युपस्थितैः ।
यत्रोत्पन्नाऽप्रहीणाः ते तत्र वस्तुनि संयुतः ॥
—अभिधर्मकोशः-५/२, २३ ।

1. पद्यमिदं तुलनीयम्—
अकार्यप्रवणो लोको दुःखभागी च यद्वशात् ।
रागादीन् भवसंबन्धान्क्लेशान्वक्ष्यामि तानहम् ॥
—अभिधर्मदीपे-२५९ ।

2. 'अकुशल' महाभूमिके द्वे । ह्रियोऽभाव आह्रीक्यम् । अपत्रपाया अभावोऽनपत्रपा इमे द्वे अकुशलधर्मौ । अकुशलकर्मफलभूता वेदना कायिकी एव । दौर्मनस्यं हि नाऽस्ति सर्वं-विपाकफलम् । दौर्मनस्यमपि द्विविधं-कुशलम् अकुशलं च । मनः-सुख-दुःख-सौमनस्योपेक्षेति पञ्चत्रेधा, कुशलाऽकुशलाऽव्याकृतानि च सन्ति ।
—अभिधर्मकोशस्य इन्द्रियनिर्देशे-२/१० ।

---

१. अमूर्तेरस्याः-क, ख ।
२. यवंतीव्रा-क, ख ।
३. कामः-क, ख ।
४. शान्त्य-क, ख ।

## कामानलः नरके पातयति

इन्द्रियाणीन्द्रियार्थज्ञो मोहयित्वा पृथग्विधाः।
नरके पातयन्त्येते कामाः[१] बालमनोहराः[२] ॥ १० ॥

## रागाग्नेः महिमा

[1]पञ्चेन्द्रियप्रसक्तस्य[३] विषयैः पञ्चभिस्तथा।
मुहूर्तमपि रागाग्निर्विषयैर्नैव तृप्यति ॥ ११ ॥

संश्लेषाज्जायते[४] वह्निर्विश्लेषान्नैव जायते।
संश्लेषादपि विश्लेषो (रागा)ग्निर्जायते नृणाम् ॥ १२ ॥

दूरान्न दाहको वह्निर्विषयस्तस्य नास्ति सः।
दूरान्तिकसमो[५] घोरो रागाग्निरतिदाहकः ॥ १३ ॥

सङ्कल्पकाष्ठप्रभवः[६] स्पृहाकुटिलवेगवान्।
तृष्णा घृतप्रसक्तोऽयं रागाग्निरपि दाहकः ॥ १४ ॥

दग्ध्वा शरीरमेतद्धि ज्वलनः सम्प्रशाम्यते।
नामरूपविनिर्मुक्तो रागाग्निर्नैव शाम्यते ॥ १५ ॥

उद्वेजयति भूतानि वह्निः परमदाहकः।
रागाग्निरतितीक्ष्णोऽपि नोद्वेगं कुरुते नृणाम् ॥ १६ ॥

पञ्चेन्द्रियसमुत्थोऽयं विषयैः पञ्चभिर्वृतः।
तृष्णासमीरणबलाद् रागाग्नि(र्दहति) प्रजाः ॥ १७ ॥

वितर्कारणिसम्भूतो विषयैः परिवर्धितः[७]।
काष्ठवद् दह्यते तेन[८] न च दृश्यो जनस्य सः ॥ १८ ॥

यथा यथा हि प्रबलो रागाग्निस्तप्यते[९] महान्।
तथा तथा (च) रागान्धैः स्वसुखं[१०] परिसेव्यते ॥ १९ ॥

---

1. व्याख्यानमस्य पूर्वं (६/६५) प्रपञ्चितम्।

---

१. काम–ख।
२. नाल–ख।
३. परिसक्त–क, ख।
४. संक्लेशाजायते–क, ख।
५. काष्ठप्रभरः–क, ख।
६. दग्धाशरीरमेता–क, ख।
७. परिन्नेहितः–क, ख।
८. दहतेदेवं–क, देहं–ख।
९. ज्वलते–क, ख।
१० स्वसुखवत्–क, ख।

अग्निः प्रकाशको भवति रागाग्निस्तमसावृतः ।
तस्माच्छिखिवद्[1] धीमान् रागाग्निं परिवर्जयेत् ।। २० ।।

**विषयपरिणाममाह**

विषयाभिरतो जन्तुर्न सुखी स्यात् कथञ्चन ।
विषयाः विषयैर्दष्टाः परिणामे च दारुणाः ।। २१ ।।

नाद्ये नान्ते न मध्ये च नास्मिंल्लोके न चापरे ।
सुखदा विषया कामं भवन्तीह कथञ्चन ।। २२ ।।

बालिशस्य हि सर्वस्य तृष्णाक्रीडनसंभवैः[2] ।
न तृप्तो विषयैरग्निर्ज्वलनस्य यथेन्धनैः ।। २३ ।।

अतृप्तो विषयैः सर्वो जनोऽयं परिवञ्चितः ।
मृत्युनाऽभ्यासनिरत[3] एतैर्दोषैर्विदह्यते ।। २४ ।।

**काममोहान्धानां स्थितिमाह**

सुखानां[4] कामचाराणां मोहस्य खलु चेष्टितम् ।
तदेव यदि देवानां खगैः स्युस्ते[5] समाः सुराः ।। २५ ।।

कल्पान्तेष्वभिसन्तप्तः[6] शस्यते सरितां पतिः ।
न दृष्टिस्तृप्यते[7] रूपैः कल्पकोटिशतैरपि ।। २६ ।।

स्यात् समुद्रस्य चर्याप्तिः सलिलैर्वशगादिभिः ।
न तु दृष्टिः समुद्रस्य रूपार्थैस्तृप्तिरस्ति हि ।। २७ ।।

अवितृप्तस्य कामेभ्यः किं सुखं परिकल्प्यते ।
तृप्तिर्यास्ति[8] वितृष्णस्य गतशोकस्य देहिनः ।। २८ ।।

माद्यन्ते[9] बहुमोहान्धा न च बुद्ध्यन्ति बालिशाः ।
मन्देन क्षणिका यद्वत् मलयेन्धनपादपाः ।। २९ ।।

---

१. तस्माद्धिश–क, ख ।
२. क्रीडनकस्यवै–क, ख ।
३. मृस्युरभ्यासोनिनर–ख ।
४. सुखगानां–क, ख ।
५ न तु–क, ख ।
६. तेषुयाभि–क, ख ।
७. दृशीशुष्यते–क, दृत्–ख ।
८. ततृप्तिर्य्येवितृषृ–क, ख ।
९. मदह्यति–क, ख ।

**कामा असाराः वञ्चकाश्च भवन्ति**

स्वप्नप्रमोषधर्माणो गन्धर्वनगरोपमाः ।
रिक्तास्तुच्छा[1] असाराश्च कामाः परमवञ्चकाः ॥ ३० ॥

(का)मा मोहेन(च)समाः किं पाकसदृशोपमाः[2] ।
कामा लोकहितकरा वह्निवत्[3] परिकीर्तिताः ॥ ३१ ॥

कामस्यादीनवं ज्ञात्वा येन तत्फलमोहिताः ।
तेन तद्दर्शकाः प्रीता गतकांक्षस्य[4] (देहिनः) ॥ ३२ ॥

(अ)न्यथा चिन्त्यमानानां[5] यथा प्राप्ता[6] पुनस्तथा ।
सर्वतः पापकर्तारः कामा लोके विषोपमाः ॥ ३३ ॥

कामैरतृप्तमनसस्ते ते देवाश्च्युताः पुनः ।
पतन्ति नरके मूढाः कामेन परिवञ्चिताः ॥ ३४ ॥

**नारीं निन्दयति**

नदीतरङ्गचपला विद्युल्लेखसमाश्च[7] ते ।
मीनावर्तबला नार्यः कामलोकविषास्पदाः ॥ ३५ ॥

विचिन्तिता विवर्धन्ते वर्द्धिता वह्निसन्निभाः ।
आदौ चान्ते तथा कामास्तस्मात् कामान्[8] विवर्जयेत् ॥ ३६ ॥

**कामसेवनफलम्**

यथा यथा हि सेव्यन्ते विवर्धन्ते तथा तथा ।
वह्निज्वालासमासृष्टाः कामाः कटुविपाकिनः ॥ ३७ ॥

**कामवर्जनफलम् आह**

एवं दोषं सदा ज्ञात्वा धीरः कामान् विवर्जयेत् ।
परिवर्तितकामस्य सुखं भवति नैष्ठिकम् ॥ ३८ ॥

---

१. रिक्तास्तुच्छा–क, ख ।
२. स्तथा क, ख ।
३. वह्नि–क, ख ।
४. कांक्षिणः–ख ।
५. मामाय–क, ख ।
६. प्रभक्ष्याश्च–क, ख ।
७. समाश्चि–क, ख ।
८. कामैर्विवह्यते–क ख ।

## कामाग्निः देवान्नपि पातयति

असङ्ख्यानि सहस्राणि देवानां नियुतानि च ।
पतन्ति कामदहनं[1] नरकं वह्निभैरवम् ॥ ३९ ॥

यथाग्निविषशस्त्राणि वर्जयन्ति सुखार्थिनः ।
तथा कामाः सदा वर्ज्या हेतवो नरकस्य[2] ते ॥ ४० ॥

न दृष्टो न श्रुतः कश्चिद् यः कामवशगः पुमान् ।
न कामैर्विप्रलब्धः स्यान्न[3] च दुःखेन पीडितः ॥ ४१ ॥

तस्मादलमलं कामैर्मा चैतेषु[4] मनः कृथाः ।
सर्वे सर्वास्ववस्थासु कामा वह्निविषोपमाः ॥ ४२ ॥

अनादिमति संसारे शत्रवश्चित्तसम्भवाः ।
अहन्त्वात्तु भवेत्[5] प्रीतिर्न सा कामैः कथञ्चन ॥ ४३ ॥

सकल्मषा कटुफला दुःखात् कामोद्भवा रतिः ।
या तु कामविनिर्मुक्ता सा रतिः परि(भाषिता) ॥ ४४ ॥

## योगिनः परमा गतिः

तां समाश्रित्य गच्छन्ति योगिनः परमां गतिम् ।
न तु कामकृता प्रीतिर्नयते[6] पदमच्युतम् ॥ ४५ ॥

## कामजरतिं निन्दति

आपातमधुरा रम्या विपाके ज्वलनोपमा ।
रतिर्भवति कामाग्निजन्या[7] नरकगामिनी ॥ ४६ ॥

आपातरम्या मधुरा मध्ये रम्या च सर्वदा ।
शान्तमन्ते च विमलं नयते पदमच्युतम् ॥ ४७ ॥

आद्यन्तमध्यकल्याणी[8] नित्यं मातेव शोभना ।
तां व्युदस्य कथं बाला रक्षन्ते (कामजां रतिम्) ॥ ४८ ॥

---

१. कामानिसेवयतितान्–क, ख ।
२. नवस्चते–क, ख ।
३. लब्धस्योन–क, ख ।
४. कामं–क, ख ।
५. चेतसां–क, ख ।
६. अहं त्वाभयेत्–क ।
७. कामजा–क, ख ।
८. कल्पाशं–क, कल्याणं–ख ।

## कामकृता रतिः निरतं तपति

मध्यादिनिधने दुःखा नित्यं दोषादिभिर्वृता।
कथं सा सेव्यते बालैर्या न दृष्टा सुखावहा ॥ ४९ ॥

विषमञ्जरिवद् रम्या स्पर्शे ज्वलनसम्भवा।
तथा कामकृता प्रीतिः परिणामे विषोपमा ॥ ५० ॥

हूयमानो[1] यथा वह्निर्ज्वलनेन[2] प्रशाम्यति[3]।
दाहेन च प्ररोहः स्यात् तद्वत् कामकृता रतिः ॥ ५१ ॥

पतङ्गः पश्यति ह्यग्नि दाहदोषं न पश्यति।
तथा कामकृतां[4] प्रीतिं पश्यन्त्यकृतबुद्धयः ॥ ५२ ॥

यस्तु रागकृतो दाहः पच्यते कामिनां सदा।
पतङ्गसदृशं[5] दाहं सर्वथा नै(व) पश्यति ॥ ५३ ॥

## कामप्रमादात् पतनं ध्रुवमेव

तस्मात् काम(विषं) त्यक्त्वा नित्यं जीवथ[6] हे सुराः।
भवन्तु मा वृथा जन्मप्रमादेन प्रपातनम् ॥ ५४ ॥

संक्षीणशुभकर्माणो नित्यं कामैर्विमोहिताः।
तं हित्वा नरकं यान्ति काममोहेन वञ्चिताः ॥ ५५ ॥

## काममोहितः विषवृक्षमयं पुष्पं पिबति

विषवृक्षमयं पुष्पं पीयते भ्रमरैर्यथा।
तथा विषात्मकमिदं[7] सुखं [8]भुङ्क्ते हि मोहितः ॥ ५६ ॥

जीवेयुः [9]पामराः केचित् विषं पीत्वाऽपि दुर्भगाः[10]।
न कामविषपीतस्य जीवितं दुर्लभं भवेत् ॥ ५७ ॥

---

१. हृदय—ख।
२. वन्हिर्ज्वलते—क, ख।
३. शाम्यते—क, ख।
४. कृतः—क, ख।
५. सतादृश—क, ख।
६. जावनाः—क, ख।
७. विव्यषनिकामैदं—क, ख।
८. भुंज्यति—क, ख।
९. भ्रमरोः—क, ख।
१०. कश्चनः—क, ख।

यथा हि नरके वह्निर्ज्वलयत्य विचारिणम् ।
तथा काममयो वह्निर्दहतीह दिवौकसः ।। ५८ ।।

## कामाग्निः हिंसक एव

श्रुतिपाशमयो[1] वह्निः प्रेतानेष दहत्यति ।
दहने[2] हिंसको वह्निर्नृणां पर्येषणात्मकः ।। ५९ ।।

एवमग्निसमं तावत् परिहार्यं समन्ततः ।
सर्वलोकमशेषेण दह्यते काममोहितः ।। ६० ।।

## विषयासक्तं मनः व्यसने पातयति

विषयेषु सदाचित्तं धावन्तं[3] चञ्चलं महत् ।
न त्याज्यं व्यसने मूढ यद् पश्यसि[4] भविष्यति ।। ६१ ।।

कामेषु रक्ष ते चित्तं व्यसनेनावबुध्यते ।
व्यसनौघे समुत्पन्ने तत् पश्चात् परितप्यते ।। ६२ ।।

## काममोहिताः महद्भयमपि न पश्यन्ति

वृथा काममदैर्मत्ता देवाः प्रकृतिदुर्बलाः ।
भ्रमन्ति भ्रमिताः कामैर्न पश्यन्ति महद् भयम् ।। ६३ ।।

विश्वसन्ति हि ये देवाः कामेष्वहितकारिषु ।
व्यतिरेकेषु[5] ते[6] पश्चात् प्रतिबुध्यन्त्यमेधसः ।। ६४ ।।

## कामाः परमवञ्चकाः भवन्ति

न च पश्यन्ति (वि)बुधाश्चित्तेन परिवञ्चिताः ।
क्षणिका मधुरा जाताः कामाः परमवञ्चकाः ।। ६५ ।।

## कामं प्रति न विश्वसेत्

शतशश्च सहस्रैश्च[7] कोटिशः पद्मशस्तथा ।
लब्धा नष्टा पुनः कामा न तेषां विश्वसेत् पुमान् ।। ६६ ।।

---

१. क्षुत्पिपासामया–क, ख ।
२. तिव्यक्षु–क, ख ।
३. धावते–क, ख ।
४. पश्यन्ति–क, ख ।
५. व्यतिरेषु–क, व्यतीरेषु–ख ।
६. कृते–क, ख ।
७. सहस्रशः–क, ख ।

**कामैर्मोहितः पतङ्गसमो नरकाग्निना दह्यते**

विषयाद् बन्धनं तीव्रं सर्वे[1] नरकहेतवः।
तस्मादत्यन्ततस्त्यक्त्वा श्रेयसे क्रियतां मनः॥ ६७॥

रागेण रञ्जिताः पूर्वं द्वेषेण च तिरस्कृताः।
मोहेन मोहिताश्चैव तेऽश्रुताऽकृतकारिणः॥ ६८॥

कामार्थैरेष्यते बालः पुनः कामैर्विमोहितः।
स पतङ्गसमो मूढः दह्यते नरकाग्निना॥ ६९॥

**कामवशगाः सुरलोकादपि पतन्ति**

अवश्यम्भावि[2] पतनं सुरलोकात्[3] समन्ततः।
न ज्ञात्वा कामवशगो स्यादिह कथञ्चन॥ ७०॥

कामेन वञ्चिताः सत्त्वाः कामेन च विमोहिताः।
कामपाशापकृष्टास्ते पतन्ति नरके सदा॥ ७१॥

**कामं त्यक्त्वा स्वहिते मनः कर्त्तव्यम्**

तदेतद्[4] व्यसनं सत्त्वाः स्वहिते क्रियतां मनः।
मनसापि स्वदान्तेन नानुतप्यन्ति देहिनः॥ ७२॥

मनोविषेण ये दष्टाः कामवेगेन सर्वदा।
ते मूढा मृत्युवशगाः कामानलहता नराः॥ ७३॥

न तृप्तिरस्ति कामानां तृष्णया हितकारिणाम्।
तृष्णापि तृप्तिजनिका[5] मनो नैव हि तृप्यति॥ ७४॥

**ज्ञानदीपेनैवेन्द्रियाणां विषयेभ्यस्तृप्तिर्जायते**

न जातु विषयैस्तृप्तिरिन्द्रियाणां भविष्यति।
यदि न ज्ञानदीपेन क्षपयिष्यन्ति (ते नराः)॥ ७५॥

**नारीसेवनेन नाशः सुनिश्चितः**

योषितः सेव्यमाना हि वितर्कशतमालिकाः।
प्रवर्धति[6] यथा वह्निर्वायुना समुदीरितः॥ ७६॥

---

१. समा—क, ख।
२. भाव—क, ख।
३. लोक—क, ख।
४. तदेत—क, ख।
५. जनकः—क।
६. प्रवर्तते—ख।

**कामाग्निदीप्ताः कदापि शान्ति नाप्नुवन्ति**

तं मत्वा वेगरभसा नित्यं कामोऽग्निदीपितः[१] ।
कामान् हापयति[२] ज्ञानी बुद्धतत्त्वविचिन्तकः ॥ ७७ ॥

ये नित्यं भ्रान्तमनसो नित्यं विषयतत्पराः ।
रमन्ते विबुधाः सर्वे तत् सर्वं मोहचेष्टितम् ॥ ७८ ॥

सेव्यमानो हि विबुधैर्विषयाग्निर्विवर्धते ।
पाशेनानेन[३] संयुक्तो वह्निर्वायुसमीरितः ॥ ७९ ॥

**रागविवशा अमरा अपि पतन्ति**

अमराः रागविवशा नित्यं विषयतत्पराः ।
देवलोकात् पतन्त्येते मोहरागेण वञ्चिताः ॥ ८० ॥

रमन्ते विषयैरेते तत्र[४] तल्लीनमानसाः ।
न च विन्दन्ति यद् दुःखं विप्रयोगो भविष्यति ॥ ८१ ॥

**वियोगजं दुःखं कष्टप्रदमेव**

यदेतत् सुखमेवादौ[५] दिव्यं [1]पञ्चगुणान्वितम् ।
वियोगजस्य[६] दुःखस्य कलां नार्हतिषोडशीम् ॥ ८२ ॥

कामानां तद्विघातो हि जनेनैवोपयुज्यते ।
सतृष्णस्य तथा तृप्तिः कामेभ्यो नैव जायते ॥ ८३ ॥

---

1. बौद्धधर्मे पञ्चशीला ( अहिंसा-सत्य-अस्तेय-ब्रह्मचर्य-मद्यवर्जनम् ) पञ्चगुणाः भवन्ति । एतेषां पञ्चगुणानामनुष्ठानम् आवश्यकं भवति, ये न पालयन्ति ते स्वीयं मूलं छिन्दन्ति । यथा धम्मपदे उक्तमस्ति—

   यो पाणमतिपातेति मुसावादञ्च भासति ।
   लोके अदिन्नं आदियति परदारञ्च गच्छति ॥

   सुरामेरयपानञ्च यो नरो अनुयुञ्जति ।
   इधेवमेसो लोकस्मि मूलं खनति अत्तनो ॥ इति ।
   —१८।१२-१३ ।

---

१. पितात्–क, ख ।
२. विषयो आग्ने आज्ञोबुद्धात–क, ख ।
३. पाशैत्वने–क, ख ।
४. रमतेतदगतमानसैः–क, ख ।
५. मेवाता–क, ख ।
६. गजाय–क, विरोग–ख ।

### कामानुसेविनः दुःखं कदापि शान्ति नाधिगच्छति

अनपेक्षितचित्तस्य नित्यं कामानुसेविनः।
दीर्घरात्रानुशयिकं दुःखं नैव प्रशाम्यते ॥ ८४ ॥

त्वरितं रक्ष्यते मूढो व्यसनेनैव बुध्यते[1]।
पश्चात्तु[2] व्यसने प्राप्ते जानीते[3] यस्य तत् फलम् ॥ ८५ ॥

आस्वादभद्रका[4] ह्येते कामाः परमदारुणाः।
दूतकान् नरकस्यैतान् चरन्त्यहितकारिणः[5] ॥ ८६ ॥

### विषयाग्निदग्धाः नरकं यान्ति

यस्तेषां विश्वसेत् मर्त्यो ज्ञानचक्षुर्विगर्हितः।
विषयाग्निरभ्रतुल्यः स याति नरकं नरः ॥ ८७ ॥

अल्पास्वादाल्पहृदया नित्यं पुरुषवञ्चकाः।
गन्धर्वनगरप्रख्याः कामा आस्वादभद्रकाः ॥ ८८ ॥

### विषयमोहिताः देवा अपि दुर्गतिं यान्ति

(यथा) दीपप्रभा (भस्म) सञ्छन्नेव[6] पुनः पुनः।
न च बिन्दत्यमनसो देवा विषयमोहिताः ॥ ८९ ॥

विषयेणातिरभसा[7] नित्यं कामवशानुगाः।
न विदन्ति महद् दुःखं यदवश्यं भविष्यति ॥ ९० ॥

रमणीयानि कामानि यस्यैवं जायते मतिः।
स पश्चाद् व्यसने प्राप्ते मूढोऽसौ विप्रलप्यते ॥ ९१ ॥

न कामेन मदान्धस्य[8] विषयैर्मोहितस्य च।
नैत्यिकं भवति शर्म्म यत्सुखानामनुत्तमम् ॥ ९२ ॥

---

१. बुद्धचते–क, ख।
२. पश्चात्ते–क, ख।
३. जानिते–ख।
४. आथान्तभद्रकांक्ष्यत–क, ख।
५. चरतेहितकिरिण–क, ख।
६. वप्रभजन्मेस–क, ख।
७. विषयोतर–क, विषयोद्रात्त–ख।
८. रमणीयोनि–क, ख।

**आध्यात्मिकसुखापेक्षया कामसुखं हीनतमम्**

यच्च कामसुखं लोके यच्च तृष्णोद्भवं सुखम् ।
एकस्याध्यात्मिकस्येदं कलां नार्हतिषोडशीम् [1]॥ ९३ ॥

**कामी कदापि सुखं नाश्नुते**

न सुखी वर्तते[१] तावद्य यस्य कामो हृदि स्थितः ।
स सर्वदुःखभागार्हो[२] नरकानुपधावति ॥ ९४ ॥

न तृप्तिर्विद्यते कामैरपि (भोगः) शतं नृणाम् ।
यत्र सौख्यं न तत्रास्ति तृप्तिर्विषयसेविनाम् ॥ ९५ ॥

सेव्यमानाः सदा कामा वर्धन्ते च मुहुर्मुहुः ।
ते वर्धिता विषसमा भवन्ति विनिपातिनः ॥ ९६ ॥

विपत्तिकुशला घोरा नित्यं पतनहेतवः ।
न च तेषां परित्यागं कुर्वन्ति विषयोत्सवाः ॥ ९७ ॥

यस्य दृष्टिसमुद्रस्य रूपैस्तृप्तिर्न विद्यते ।
तथा शर्ममनोज्ञैश्च रसतृप्तिर्न विद्यते ॥ ९८ ॥

गन्धैरपि सदा घ्राणं न तृप्तिमधिगच्छति ।
स्पर्शाः[३] सम्मुखसंस्पर्शाः सेव्यन्ते[४] नैव तृप्यते ॥ ९९ ॥

शब्दैः कान्तैः सुमधुरैः श्रोत्रमेति न तर्पणम्[५] ।
मनोऽपि तृप्तिविश्वस्तं वर्धमानं[६] न तृप्यति ॥१००॥

---

1. यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥

इति व्यासभाष्ये उद्धृतं वचनमत्र शाब्दिकं साम्यं भजते न तु तात्त्विकम् ।

---

१. भवति—क, ख ।　　२. भार्गा—क, ख ।
३. स्पर्शैः—ख ।　　४. श्रोत्रसो—क, ख ।
५. विततत्पबान्—क, ख ।　　६. धमानैव—क, ख ।

**इन्द्रियाणि कामभूमिषु पातयन्ति**

[1]षडेन्द्रियाणि चपलान्याधूतानि रतौ पुनः[१] ।
भ्रमन्ति मुषिता नित्यं कामभूमिष्वनेकशः ।।१०१।।

न तृप्तिरस्ति देवानां गजानां वै तृणैर्यथा[२] ।
अनलस्य स्वभावोऽयं तस्य तृप्तिर्न विद्यते ।।१०२।।

षडेते वह्नयस्तीव्रा वितर्कानिलमूर्छिताः ।
भ्रमन्ति मुषिता नित्यं कामभूमिष्वनेकशः ।।१०३।।

**इन्द्रियदग्धा नरकं यान्ति**

तैरयं[३] दह्यते लोको न च विन्दत्यबुद्धिमान् ।
आस्वादभद्रका ह्येते नरकस्य च हेतवः ।। १०४।।

**काममोहितः सुखवञ्चितो भवति**

कामा विषयलोभास्ते लेलिहाना यथोरगाः ।
विलोचनवरो ह्येष न च कामैर्विमोहितः ।।१०५।।

**कामवशीनरः नेत्रहीना मूढतरः**

सुखानुसारिणः[४] कामो नरकानुपधावति ।
न नेत्रहीनो नरके पात्यते[५] सत्क्रियान्वितः ।।१०६।।

तस्माद् वरं विचक्षुः स्यान्न तु कामवशो नरः ।
अशक्यवञ्चिता[६] मूढाः कामैरहितकारिभिः ।।१०७।।

---

1. चक्षुरादीनि मनोविज्ञानपर्यन्तानि "षडेन्द्रियाणि"। तत्र आश्रय सत्त्वभेद-कल्पनं (यथा स्त्रीपुरुषेन्द्रिययोः) शरीरस्थितिकल्पनं (यथा जीवितेन्द्रियस्य) सङ्क्लेशः (यथा पञ्चानां सुखादीनां वेदनेन्द्रियाणां), संभारः (श्रद्धादीनां पञ्चानां) परिशुद्धिः (व्यवदानं) चरमाणां त्रयाणाम् अनाज्ञातमाज्ञास्यामीत्या-दीनाम्। यत्र हि चित्ताश्रयत्त्वादिधर्माणाम् उपलब्धिः तत्र इन्द्रियत्त्वम् अभ्युपगन्तव्यम् ।

—अभिधर्मकोशः—२।५।

---

१. याश्चपलाम्याधृतिरस्मिविबर्द्धता–क, ख ।
२. यथातृष्णैः गजतथा–क, ख।
३. वैरयं–ख ।
४. चक्षुहीनानिरकंपतते–क, ख ।
५. अश्वञ्चिता–क; ख ।
६. शादृशा–क, सादृशा–ख ।

**कामचारिणां ज्ञानादिकं दुर्लभम्**

अनिर्विद्यन्ति कामेभ्यो मोहिताः स्वेन चेतसा ।
न ज्ञानं नापि विज्ञानं विद्यते कामचारिणाम् ॥१०८॥

**कामः मृत्युभवनं नयति**

यद् दुःखकामजं हत्वा पुनः कामवशानुगाः ।
मित्ररूपा च ये कामाः किम्पाकफलसन्निभाः ।
नयन्ति मृत्युभवनं दुर्गतीश्च पुनः पुनः ॥१०९॥

अनिवर्त्यं यथा तोयमापगानामनेकशः ।
तथा सौख्यगतं नृणां सर्वथा न विवर्तते ॥११०॥

वनोपवनभोगेषु[१] सुखप्राप्तेष्वनेकशः ।
यो न तृप्यति कामेषु स नरोऽधमगामिकः[२] ॥१११॥

प्रमादो पहतो जन्तुः कामास्वादेषु तत्परः ।
रूपेषु रक्ष्यते नित्यं परिणामे च विद्यते ॥११२॥

घनच्छायास्वरूपाणि कर्ममिश्राणि यानि वै ।
तानि[३] चैव कथं देवाः शक्ष्यन्ते कामगोचरे ॥११३॥

**कामाः कदापि न सेव्याः**

यदि नित्या भवेयुर्न कामास्ते स्युर्विषोपमाः[४] ॥११४॥

**कामतृष्णादुःखकरी**

तथापि कामतृष्णा या न सा जाति[५] विलक्षणा ।
प्रागेव नित्यं दुःखाय शून्यमात्मानमेव च ॥ ११५ ॥

तेषु दुःखविपाकेषु कथं रक्षन्त्यबुद्धयः ।
कामास्वादेषु रक्ष्यन्ते बालिशाः मन्दबुद्धयः ।
आदीनवं न बुद्ध्यन्ते किम्पाकफलसन्निभम् ॥ ११६ ॥

रूपशब्दादिबद्धोऽयं तृष्णाविप्रकृतो जनः ।
दीप्यते विवशो नित्यं, कुकर्मफलमोहितम् ॥ ११७ ॥

आस्वादयित्वा पुरुषाः कामान् विषफलोपमान्[६]।
तृष्णया तृप्तमनसः पतन्ति नरके पुनः ॥ ११८ ॥

---

१. पभोगरस्येषु—क, ख । २. रक्षमगामिकः—कख ।
३. तां दृष्टाते कथं देवासक्षन्ते—क, सञ्जते—ख । ४. भवेत्कामानस्यतेस्थविषौगता—क, ख ।
५. सजति—ख । ६. पुरुषो कामांविषफलोपमा—ख ।

यथाभिवर्षते तोयं वर्धन्ते सरितो यथा।
तथा कामाभिवर्षेण देवानां वर्धतेऽनलः॥ ११९॥

**कामसुखस्य नान्तो विद्यते**

जलसम्भवमीनोऽपि[1] दृश्यते तृष्णयाऽऽतुरः।
एवं सुखाभिवृद्धा च न वितृप्यति देवता॥ १२०॥

आकाशस्य यथा नान्तो विद्यते नापि संशयः।
एवं कामेषु नास्त्यन्तः कामिनां नास्ति संक्षयः॥ १२१॥

सलिलादिभिरतृप्तस्य[2] सागरस्योर्मिमालिनः।
न तु कामैरतृप्तस्य तृप्तिरस्ति कथञ्चन॥ १२२॥

अप्राप्तैर्विषयैर्देवा न वितृप्यन्ति बालिशाः।
विषयैर्नैव तृप्यन्ति[3] सुखलालसतत्पराः॥ १२३॥

**कामस्तापाय, न तु शान्त्यै**

संप्राप्ते व्यसने तीव्रे च्यवमानेष्यनेकशः।
तप्यते विषये तस्मात् परं कामो न शक्यते॥ १२४॥

विलोक्य पुरुषानेते कामविश्वासघातिनः।
त्यजन्ति व्यसने प्राप्ता विपद्यन्ते हि ते नराः॥ १२५॥

अतृप्तस्य सुखं नास्ति विषयैश्चापि तृप्यते।
ये वा तृप्तिकरा दृष्टास्तान् बुद्ध्वा (तु) विवर्जयेत्॥ १२६॥

**विषयान्परित्यज्य शान्तिः सेव्या**

सुखमूला सदा शान्तिरसुखा विषया मताः।
तस्माच्छान्तिसुखा देवा वर्जयित्वा विषयोरगान्[4]॥ १२७॥

वधबन्धनरोगादि विषयेभ्यो महद्भयम्।
सम्भ्रान्तिरिह[5] संसारे विषयैरेव जायते॥ १२८॥

---

१. मीनेन स च तृष्णासुरसदा—क, ख।
२. शालिलेरतृप्तस्यापि—क, ख।
३. प्राप्तैरपि न तृपति—क, ख।
४. वर्जयिविषयोरगाः—क, ख।
५. संभ्रातिभि—क, ख।

संयोगा विप्रयोगान्ताः शतशोऽथ सहस्रशः।
जातौ जातौ सदा दृष्टाः सौगतैस्तत्त्वदर्शिभिः[१] ॥ १२९ ॥

### अनेक सुखसंसारः विषयात्मक एव

अनेकसुखसंसारो[२] विषयेषु हि विद्यते।
विषयैश्च[३] भवेत् सर्वं जातौ जातौ प्रजायते ॥ १३० ॥

कष्टैर्यैरनकामैर्न शक्यतेऽमूढचेतसा।
पुनस्तानेव मोहान्धाः सेवन्तेऽकृतबुद्धयः ॥ १३१ ॥

### विषयशत्रुसेविनः बालिशाः भवन्ति

वर्जते हि सदा शत्रुवञ्चनाशङ्कया नरः।
विषयाः शत्रुभूता हि न वश्यन्ते कथञ्चन ॥ १३२ ॥

कामबद्धाः[४] सदा मोहबालिशा वा भवन्ति ते।
न त्यजन्ति[५] कथं मूढा मोहिताः स्वेन कर्मणा ॥ १३३ ॥

यथा वह्निभयात् कश्चिद् वह्निमेवोपसेवते[६]।
तथा विषयसंमूढो विषयानुपसेवते ॥ १३४ ॥

स्नायुसङ्ग्रथितः पाशो दृष्टिरम्यो यथा भवेत्।
तथा विषयरम्योऽयं पाशः परमदारुणः ॥ १३५ ॥

### कामसुखं नाशाय भवति

किंपाकस्य यथाऽऽस्वादो मधुराग्रो महोदयः।
पश्चाद् भवति नाशाय सुखं तद्वदिदं नृणाम् ॥ १३६ ॥

प्रदीपस्य[७] शिखां यावत् पतङ्गो मोहमूर्छितः।
पतते दह्यते चैव तथेदं सुखमिष्यते ॥ १३७ ॥

अज्ञात्वा हि तथा बाला रम्यदेहसुखेच्छया[८]।
स्पृशन्ति[९] ज्वलनं तद्वत् सुखमेतद् भविष्यति ॥ १३८ ॥

---

१. दृष्टौसुगत–क, ख।
२. सुशुस्ता–क, ख।
३. वषयैरेव–क, ख।
४. निदह्यि–क; ख।
५. वर्जयन्ति–क, ख।
६. शोभते–क, ख।
७. शिखरयाद्वपेतं–क, ख।
८. रम्यासरवीसुखेच्छा–क, ख।
९. स्पृशते–क; ख।

### तृष्णाविघात एव सुखाय जायते

यथा रम्यो वनमृगस्तृष्णार्त[1] उपधावति ।
न च तृष्णाविघातोऽस्य[2] तदिदं सुखमिष्यते ॥ १३९ ॥

न तृप्ता न च तृप्यन्ति न च तृप्तिर्भविष्यति ।
विषयैः सर्वदेवानां तस्मात् कामो न शान्तये ॥ १४० ॥

### विषयैः प्रमत्ताः दुःखमनुभवन्ति

प्रत्युत्पन्नसुखाः कामा नान्तकल्याणकारकाः ।
रञ्जिता विषयैर्देवा विक्षिप्तमनसः सदा ॥ १४१ ॥

नानासौख्यप्रमत्तस्य विषयैर्वञ्चितस्य च ।
सम्प्राप्ते मृत्युकाले च न शमायास्य विद्यते ॥ १४२ ॥

अनुक्रमेण मरणमभ्येति तच्च विद्यते ।
विषयापहृतैर्देवैः कामव्यासक्तबुद्धिभिः[3] ॥ १४३ ॥

### कामा अहितकारिणो भवन्ति

जानीयादद्य मे देवा यद् दुःखं विप्रयोगजम् ।
मुहूर्तमपि कामेषु न कुर्यात् तत्र संस्थितिम् ॥ १४४ ॥

### रागाग्निना दग्धो विमोहितो जायते

अनित्यात्मभयाः कामा नित्यं चाहितकारिणः ।
तथा विमोहितान् कालः पुनस्ताननुसेवते ॥ १४५ ॥

रागाग्निना प्रदह्यन्ते नित्यं देवाः प्रमोहिताः[4] ।
दह्यमानाः पुनस्तत्त्वं[5] प्रशंसन्ति पुनः पुनः ॥ १४६ ॥

### रथचक्रवत्सदा भ्रान्ता विषयविमोहिताः भवन्ति

विषयेषु न रक्ष्यन्ते तेषां दुःखमिव[6] स्थितम् ।
त्रैधातुकमिदं सर्वं भ्राम्यते रथचक्रवत् ॥ १४७ ॥

---

१. हिमृगा–क, ख ।
२. विघातोऽवस्य–क, ख ।
३. कामोव्यवस्त–क, ख ।
४. प्रदेवप्र–क, ख ।
५. मानोपुनस्ततं–क, ख ।
६. दुःख एव–क, ख ।

**गन्धर्वनगरसदृशाः कामाः भवन्ति**

सत्त्वा अविद्यया मुग्धा[१] नित्यं दुःखस्य भोगिनः।
विद्युदालातचक्रेण समाः कामाः प्रकीर्तिताः।
स्वप्ने गन्धर्वनगरसदृशा विप्रलम्भिनः॥ १४८॥

**पञ्चस्कन्धमतिर्दुःखितस्तिष्ठति**

अनित्यदुःखशून्येषु न कुर्यान्मतिमात्मवान्।
पञ्चस्कन्धासुरैः प्रोक्तः[२] शुभे रिक्तः स्वभावतः॥ १४९॥

अन्यथा विषवद्[३] विज्ञः कामेषु च प्रसह्यते।
स बुधः पारगः शान्तः सत्त्वानामनुकम्पकः॥ १५०॥

**निर्वाणोन्मुख एव दोषाच्छान्तिमधिगच्छति**

हित्वा क्लेशमयं पाशं निर्वाणस्यान्तिके स्थितः। १५१॥

**कामविभ्रान्तस्य शान्तिकथा वृथा**

प्रभवेन्न[४] च दोषेषु कामचर्यारतस्य च।
विभ्रान्तमनसस्तस्य कुतः शान्तिर्भविष्यति ?॥ १५२॥

विभ्रान्तं पश्यतु मनो विषयेषु प्रधावति।
सद्धर्मपथविभ्रान्तो नरकेषूपपद्यते॥ १५३॥

अशक्तप्राप्तविभ्रष्टे किं कामैर्विद्युतोपमैः[५]।
किंपाकविषशस्त्राग्निसन्निभैर्दुःखहेतुभिः ?॥ १५४॥

**कामाग्निः विषयसेवनेन वर्धते**

यथा यथा हि सेव्यन्ते वर्धन्ते ते तथा तथा।
अवितृप्तिकरा ह्येते वह्निदाहस्य हेतवः[६]॥ १५५॥

**कामान् वर्जयित्वैव सुखमश्नुवते जनाः**

दाहदोषेण[७] सम्भ्रान्ताः ये सुराःसुखकाङ्क्षिणः।
वर्जयित्वाऽशिवान् कामास्ततः सौख्यं[८] भविष्यति॥ १५६॥

---

१. सत्त्वविमोहिताऽविद्या–क, ख।
२. सुवरैप्रोक्तरिक्ता–क, ख।
३. वह्निकायानकामेषु–क, वह्निकाया–ख।
४. नग्नभव–क, ख।
५. विद्युवोषमै–क, ख।
६. वहिर्दहाह्–क, ख।
७. दोषः कयाभ्राता–क, ख।
८. स्व–ख।

## कामाः विद्युद् गुणोपमाः चञ्चलाः

वञ्चयित्वा जनं मूढं शाटी कृत्येव बन्धनम्।
प्रत्ययो नेत्रचपलः[1] कामा विद्युद् गुणोपमाः ।। १५७ ।।

उपर्युपरि कामा यैः सेव्यन्ते[2] कामतृष्णया।
ते रागवह्निना दग्धा दाहाद् दाहमवाप्नुयात् ।। १५८ ।।

अतिमूढतमा ह्येते ये सुराः काममोहिताः[3]।
अथवा ये न गच्छन्ति यत्सुखात् सुखमुत्तमम्[4] ।। १५९ ।।

निर्वाणगामिनो नास्ति विना मुक्त्या[5] कुतः सुखम् ?।
तस्मात् कामान्न[6] सेवेत कष्टः कामसमागमः ।। १६० ।।

इन्द्रियाणि[7] न तृप्यन्ते विषयै रागसेविनः।
अतृप्तौ च कुतः शर्म सर्वथा सम्प्रवेशते ।। १६१ ।।

तस्याग्रमुभयाद् वेत्ति संसाराद् दुःखसागरात्।
कामात् तृष्णाविषयगान्[8] परित्यजति पापकान्[9]।। १६२ ।।

## कामोदयव्ययौ सम्यगवधेयौ

एतानि गिरिकूटानि रम्याणि[10] विविधैर्द्रुमैः।
ध्यायन्ते तानि संश्रित्य कामानामुदयव्ययौ[11] ।। १६३ ।।

## शीलेन श्रद्धया च इष्टसाधनं कर्त्तव्यम्

न कामबन्धनेस्तृप्ताः[12] कामजं निधनं हि तत्[13]।
न शीलश्रद्धे येनेष्टे लभ्यतेऽशिवकारणम्[14]।
कामजं निधनं ह्येतत् संसाराटविदेशकम् ।। १६४ ।।

---

१. न्यत्रला–क, ख।
२. सेवते–क, ख।
३. मोहिनः– ख।
४ सुखेमतेसुस्यात्कामानुसेवेत्तमम्–क, सुखेमते–ख।
५. विनाम्–क, ख।
६. कामानुसेवोत्र–क, ख।
७. व्यानि–ख।
८. कामतृष्णाविषयान्–क, ख।
९. पापकः–क, ख।
१०. कूटम्यानि–क।
११. ययुः–क, ख।
१२. कासेबन्धनः–क, ख।
१३. हितः–क, ख।
१४. श्रद्धायेनेश्रेष्टमभ्यत–क, ख।

## पापानि परित्यज्य सुखावहः शान्तिमार्गः सेवनीयः

यत्र कामविसंयुक्तं[1] बन्धनं वनमुच्यते ।
यत्र भासयते पापाद् यत्र शान्तिः सुखावहा[2] ।
तत् केवलं महाज्ञानं कथ्यते निधनं धनम् ॥ १६५ ॥

## कामतृष्णाभ्यां विमुक्तः शिवमाप्नोति

ये प्रसक्ता न कामेषु तृष्णया[3] न प्रलोभिताः ।
ते शिवं स्थानमापन्ना न कामाग्निप्रवेशकाः ॥ १६६ ॥

## अवितृप्ताः नराः नश्यन्त्येव

तृप्तिर्नास्ति सदा कामैर्न कामाः शान्तये स्मृताः ।
तृष्णासहायसंयुक्ता ज्वलन्ति ज्वलनोपमाः ॥ १६७ ॥

अवितृप्ता विनश्यन्ति[4] नरा देवास्तथोरगाः ।
ते केवलं प्रणष्टा हि नरकाग्नि प्रदर्शकाः ॥ १६८ ॥

## तृष्णामोहितस्य मृत्युरधिपतिः

वितर्कापहतस्यास्य विषयैर्वञ्चितस्य च ।
तृष्णया मोहितस्यैष मृत्यू राजा भविष्यति ॥ १६९ ॥

## कामासक्ताः पथ्यापथ्यं न विजानन्ति

संसक्तकामभोगेषु पथ्यापथ्यं न विद्यते ।
जना विमोहिताः सर्वैर्विषयैः कामसंज्ञकैः ॥ १७० ॥

## कामवशानुगाः विषयैरेव बध्यन्ते

विषयैरेव कृष्यन्ते ये सुरा मूढचेतसः ।
ये (तु) बुद्धगुणैर्युक्ता न ते कामवशानुगाः ॥ १७१ ॥

## 'धीर' परिभाषा

प्रत्युत्पन्नेषु[5] कामेषु सदोषेषु विशेषतः ।
यो न मुह्यति सौख्येषु स 'धीर' इति कथ्यते ॥ १७२ ॥

---

१. काश--क, कास–ख ।
२. पापायनस्यन्तिसुखावहे–क, ख ।
३. ये तृष्णा–क, ख ।
४. विनश्यन्ते–क, ख ।
५. सर्वाविषयैं–क, ख ।

**कामपतितानां सुराणां स्थितिमाह**

स्वप्नकायविचित्रेषु ज्वालामालोपमेषु च ।
गन्धर्वपुरतुल्येषु कामेषु पतिताः सुराः ॥ १७३ ॥

तृष्णाजनकभूतेषु विनाशान्तकरेषु च ।
कान्तारेषु[१] विशालेषु कामेषु पतिताः सुराः ॥ १७४ ॥

इत्वरेषु त्रिछिद्रेषु[२] नदीवेगोपमेषु च ।
चञ्चलेष्वतिदुर्गेषु (कामेषु) पतिताः सुराः ॥ १७५ ॥

पवनोद्धतवेगोर्मिजलचन्द्रे चलेषु च ।
अलातचक्रलोकेषु कामेषु पतिताः सुराः ॥ १७६ ॥

समं विद्युल्लता-चक्र-मृगतृष्णोपमेषु च ।
फेनवच्चाप्यसारेषु[३] कामेषु पतिताः सुराः ॥ १७७ ॥

कदलीगर्भतुल्येषु गजकर्णोपमेषु च ।
नदीतरङ्गवेगेषु कामेषु पतिताः सुराः ॥ १७८ ॥

किंपाकफलतुल्येषु वह्निसन्निभजातिषु ।
मायारश्मिनिभेष्वेषु[४] कामेषु पतिताः सुराः ॥ १७९ ॥

**ज्ञानाङ्कुशेन कामो वर्जनीयः**

ज्ञानाङ्कुशेन वार्यन्ते विषयास्तत्त्वदर्शिभिः[५] ।
येऽमुक्ताश्चपलास्तीव्राः सर्वानर्थकरा मताः ॥ १८० ॥

**विषया एव नरकपातहेतवः**

विषयाशा च मूढानां सङ्कल्पहृतचेतसाम् ।
मृत्युपाशोऽयमभ्येति जीविताशा(वि) बन्धकः ॥ १८१ ॥

पचन्ति[६] निरये कामाः प्राणिनं लघुचेतसम् ।
न च विन्दन्ति मूढा ये मोहेन परिवञ्चिताः ॥ १८२ ॥

विषयाश्चपलाः सर्वे गन्धर्वनगरोपमाः ।
दुःखसंवर्तका ह्येते[७] नरकाः पञ्चहेतवः ॥ १८३ ॥

---

१. प्रभतार–क, ख ।
२. छिन्द्रेपु–ख ।
३. फेनवच्चाप्य–क, ख ।
४. यापमरश्मिभेष्वेच–क, यापमन्निभेष्वे–ख ।
५. विषरयेहूर्य्यं ते प्राणिनाधघुचेतसि–क, ख ।
६. समूढायेहिने क, ख ।
७. कोह्ये–ख ।

**सङ्कल्पजो रागः नरकं पातयति**

सङ्कल्पाज्जायते रागः रागात्[१] क्रोधः प्रवर्तते ।
क्रोधाभिभूतः पुरुषो नरकानुपसेवते ।। १८४ ।।

**कामपरित्यागपूर्वकं निर्वाणप्राप्तये यतेत**

तस्मात् कामं परित्यज्य क्रोधं निर्वास्य पण्डितः ।
मोहं चापि परित्यज्य निर्वाणाभिमुखो भवेत् ।। १८५ ।।

**निर्वाणपथिकानां कृते शत्रुवदेव कामः परिवर्जनीयः**

शत्रुवद् विषया ज्ञेया निर्वाणं चैव मित्रवत्[२] ।
पुमान् विश्रान्तविषयो[३] निर्वाणमधिगच्छति ।। १८६ ।।

**काममलैरलिप्त एव विमलप्रकाशमाप्नोति**

अलोलुपः काममलैरलिप्तः प्रहीणदोषो हतवाणतृष्णः ।
संक्षीणदोषो विमलप्रकाशः प्रयाति शान्ति[४] स्वफलोपभोगी ।।१८७.

**सुखार्थी कामं परित्यज्यैव शान्तिमधिगच्छति**

यः कामपङ्कोद्धृतवानदोषः
सर्वेषु सत्त्वेषु सदा सुखार्थी ।
स निर्मलोऽशान्तमनोविमुक्तः
प्राप्नोति निर्वाणसुखं प्रसह्य[५] ।। १८८ ।।

**इति कामजुगुप्सावर्गः सप्तमः ।**

---

१. रोगोरागात्ते–क, ख ।
२. मित्रवच्चनिवारणं–क, ख ।
३. विश्रण्डविषयोपुन्सः–क, विषण्ड– ख ।
४. संव्यरसत्वाविमलाप्राकाशं प्रयान्ति नाश्स्वः–क, ख ।
५. प्रतिमारण्य बलप्रसह्य–क, ख ।

## (८) तृष्णावर्गः

### तृष्णाग्निरेव नरकभूतः

भवोताराय [1]तृष्णाग्निर्ज्वलनः[१] शीत उच्यते ।
नरके नारके योऽग्निस्तृष्णाग्निस्त्रिषु धातुषु[2] ॥ १ ॥

कल्पभूतो ह्ययं वह्निः योऽयं नरकसम्भवः ।
बहुज्वालाकुलो वह्निः तृष्णाहेतुसमुद्भवः ॥ २ ॥

कर्मक्षयाद् विमुच्यन्ते नरकात् पापकारिणः ।
त्रिषु धातुषु दह्यन्ते नरास्तृष्णावशानुगाः ॥ ३ ॥

अनादिमति संसारे तृष्णाग्निरतिबन्धकः ।
तृष्णाग्निर्नरकं तस्मान्नाग्निर्नरकसम्भवः ॥ ४ ॥

### तृष्णाग्निः शरीरं मनश्च दहति

गात्रदाहं परं कुर्यान्नारकेयो हुताशनः ।
शारीरं मानसं दाहं तृष्णाग्निः कुरुते नृणाम् ॥ ५ ॥

### तृष्णाग्निः सामान्याग्निना विशिष्यते

तस्माद् विशिष्यते वह्निः तृष्णाहेतुसमुद्भवः ।
नारकेयोऽसमश्चैव तृष्णाग्निर्नितरां स्मृतः ॥ ६ ॥

---

1. भोगे मैथुने च रागवतः तात्कालिकी अवस्था 'तृष्णा' । तृष्णा, अविद्या, मतिः स्वयम् अव्याकृत-भूत्वा त्रीणि अव्याकृतमूलानि । विचिकित्सा द्विकोटिकत्वात् न मूलम् । ऊर्ध्वाधोवृत्तिः=द्वैधा वृत्तिस्तत्र मानश्च चित्तस्योर्ध्ववृत्तिता, मूलं हि लोकेऽधोवृत्ति, तेन मानादयो न मूलम्, वृत्तिवैषम्यात् ।
—इति कथितम् आचार्यवसुबन्धुना अभिधर्मकोशे -५।२० ।

2. कुशला अकुशला उभयभिन्नाः ( अव्याकृताः ) च त्रिविधाः धातवः विद्यन्ते । तत्र चित्तधातवः कुशलाः कुशलास्रवसम्बन्धात्, अकुशला आस्रवसम्बन्धात् त एव अकुशलाः, अन्यत्र उभयभिन्नाः । तथैव धर्मधातौ रूपधातौ च बोद्धव्यम् ।
—अभिधर्मकोशः -१।२९ ।

---

१. तृष्णाग्निश्वेतरणाय०-क, ख ।

**अयमग्निः त्रिकालसम्भवः**

त्रिस्थानगः त्रिहेतुश्च [1]त्रिकर्मपरिदीपकः ।
[2]त्रिकालसम्भवो ज्ञेयस्तृष्णाऽग्निपरकस्तथा ॥ ७ ॥

**तृष्णाग्निः सदैव सर्वत्र दाहकः**

रागाग्निर्दह्यते स्वर्गे द्वेषाग्निस्तिर्यगे तथा[१] ।
मोहाग्निर्दह्यते पापे तृष्णाग्निः सर्वदा स्थितः ॥ ८ ॥

**तृष्णाग्नेः स्वरूप-निरूपणम्**

मानेर्ष्याधूमविशिखः सङ्कल्पे धनसम्भवः ।
लोभाग्निर्दहते लोकं नाग्निः कामसमुद्भवः ॥ ९ ॥

**तृष्णाग्निर्विषयसेवनेनैव वर्धते**

लोभाशीविषदष्टा ये तेषां शर्म न विद्यते ।
सेवितो[२] भावितो लोभो भूय एवाभिवर्धते ॥ १० ॥

---

1. त्रिविधं कर्म—दृष्टधर्मवेदनीयम्, उत्पद्यवेदनीयम्, अपरवेदनीयं चेति ।
—महायानसूत्रसङ्ग्रहः प्रथमखण्डः ।

2. सर्वेभ्यो वर्तमानेभ्यो द्विविधेभ्योऽपि कामजः ।
त्रिकालेभ्यस्तु मौलेभ्यो लभ्येते भावनामयौ ॥

एवं प्रातिमोक्षसंवरः खलु सर्वेभ्यो मौलप्रयोगपृष्ठेभ्यो वर्तमानेभ्यः स्कन्धायतनधातुभ्यः सत्त्वाधिष्ठानप्रवर्त्तत्वात् नातीतानागतेभ्यस्तेषामसत्त्व-संख्यातत्वाल्लभ्यते । द्विविधेभ्योऽपि सत्त्वासत्त्वाख्येभ्यः प्रकृतिप्रतिक्षेपणसाव-द्येभ्यश्च ।

एतौ हि मौलेभ्य एव कर्मपथेभ्यो लभ्येते न प्रयोगपृष्ठेभ्यो नापि प्रज्ञप्तिसावद्येभ्यः, सर्वकालेभ्यश्च स्कन्धायतनधातुभ्यो लभ्येतेऽतीतानाम-तेभ्योऽपि ।

चतुष्कोटिका चात्र भवति । सन्ति ते स्कन्धायतनधातवो येभ्यः प्राति-मोक्षसंवरो लभ्यते न ध्यानानास्रवसंवरौ इति विस्तरः । प्रथमा कोटिप्रत्युत्प-न्नेभ्यः सामन्तकपृष्ठेभ्यः प्रतिक्षेपणसावद्याच्च । द्वितीया अतीतानागतेभ्यो मौलेभ्यः कर्मपथेभ्यः । तृतीया प्रत्युत्पन्नेभ्यः मौलेभ्यः कर्मपथेभ्यः । चतुर्थी अतीतानागतेभ्यः सामन्तकपृष्ठेभ्य इति ।

—अभिधर्मदीपः-१६९ ।

---

१. वचः—क, ख । २. मात्राणुभैरवियुता—क, ख ।

## लोभसमो रिपुर्भुवि नास्ति

यथा यथेन्धनं प्राप्यानलो वर्धत्यनेकशः ।
शक्यः पालयितुं(वह्नि) र्लोभवह्निर्न(शक्यते) [1]।। ११ ।।

चक्रवद् भ्रमते लोको लोभेन परिवञ्चितः ।
अनादिनिधने लोके नास्ति लोभसमो रिपुः ।। १२ ।।

विशन्ति सागरजले लोभेन परिवञ्चिताः ।
शस्त्रसङ्घातगहनं युद्धं संप्रविशन्ति च ।। १३ ।।

लोभहेतोर्हि भूपाला नाशयन्ति परस्परम् ।
शस्त्रासिभैरवप्रोता युद्धयन्ते धनतृष्णया ।। १४ ।।

तृष्णाविषविनिर्मुक्ता लोभाङ्गारविवर्जिता ।
समलोष्टकाञ्चना ये निर्वाणस्यान्तिके हि ते ।। १५ ।।

## लोभाग्निः सर्वापेक्षया विषमः

अतीवानुपपन्नस्य धनलोभेन दह्यते ।
न वह्निर्विषमस्तत्र लोभाग्निर्यत्र वर्तते ।। १६ ।।

## लोभशान्ति विना निर्वाणकथा वृथा

लोभाधारप्रयत्नेन हन्यात् तान् रभसा बुधः ।
अनिर्वापितलोभस्य निर्वाणं दूरतः स्थितम् ।। १७ ।।

## भवसुखपरित्यागी भवजं दुःखं नाप्नोति

भवाभिलाषिणीं नान्दीं नाभिनन्दन्ति ये नराः ।
न तेषां भवजं दुःखं स्वप्ने समुपविद्यते ।। १८ ।।

## तृष्णाबद्धान् जनान् मृत्युः शम्बूक इव कर्षति

मत्स्यान् यथा जालबद्धान् शम्बूकः परिकर्षति ।
तृष्णाबद्धांस्तथा सत्त्वान्मृत्युः समुपकर्षति ।। १९ ।।

---

1. तुलनीयं पद्यमिदम्—

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ।।

—श्रीमद्भागवत–९।१९।१४ ।

**तृष्णाविषं कुत्रापि न मुञ्चति**

सविषैः सायकैर्विद्धो मृगो यत्र (प्र)धावति ।
तत्र तत्र विषं याति तथा तृष्णाविषं नृणाम्[१] ।। २० ।।

प्रवाहप्रवहन्नद्या[२] गतिर्गत्यऽनुधाविनी ।
यथा[३] निर्दहते बालान् शुष्केन्धनमिवानलः ।। २१ ।।

आपातरम्या ( विषया ) विपाकज्वलनोपमाः[४] ।
तस्मात् तृष्णा विमोक्तव्या यदि सौख्यं हि रोचते ।। २२ ।।

यथा हि वडिशग्रस्ता मीना मृत्युवशानुगाः ।
तथा[५] प्रतप्ता विषयान् परिधावन्ति दुःखिताः ।। २३ ।।

**तृष्णाग्निः नरकादपि महान्**

नरकं नारकेयं च तृष्णानिहितं[६] महत् ।
पतन्ति निधना मर्त्याः परदारोपजीविनः ।। २४ ।।

**तृष्णाप्रेरितो मुनिरपि दुःखमनुभवति**

न चेष्टितमनोपापतृष्णया प्रेरितो मुनिः ।
[1]षडिन्द्रियसमुद्भूतो विषयेन्धनदाहकः ।। २५ ।।

**देवानपि तृष्णाग्निर्दहत्येव**

तृष्णाग्निर्दहते देवं कायाग्निर्न कथञ्चन ।
सुखावृताः सुखरताः सुखे(न) परिवञ्चिताः ।। २६ ।।

**तृष्णापरिवञ्चितः पतनमपि नावगच्छति**

पतनं नावगच्छन्ति तृष्णया परिवञ्चिताः ।
ज्वालामालाकुलः सर्वः संसारस्तृष्णयाऽऽवृतः ।। २७ ।।

तृष्णाग्निना वशीभूता जना[७] गच्छन्ति दुर्गतिम् ।
तृष्णाग्निभिः परिवृतः सुरलोकः समन्ततः ।। २८ ।।

---

1 अस्य व्याख्यानं पूर्वं ( ६।१०१ ) प्रपञ्चितम् ।

---

१. तृष्णां–क, ख ।
२. विद्वद्वद्वजायेत्तदीगति–क, ख ।
३. स हि–क, ख ।
४. दूर्तयोः–क, ख ।
५. यतं–क, ख ।
६. विष्टितं–क, ख ।
७. सम्बद्धाभ्सत्वा–क, ख ।

## तृष्णाग्निः सदैव वर्धते

दह्यते विवशो रक्तः कामभोगवशीकृतः[१]।
यथा यथेन्धनं प्राप्य ज्वलनं संप्रवर्धते ॥ २९ ॥

तथा तथा सुखं प्राप्य तृष्णाग्निर्वर्धते नृणाम्।
परिवर्तयते[२] पुंसः काष्ठाग्निर्दाहदीपकः ॥ ३० ॥

तृष्णाग्निर्दहते लोकं परिहातुं न शक्यते।
ये विशालां नदीं तीर्णा सङ्कल्पकृतभैरवीम्[३] ॥ ३१ ॥

## तृष्णापाशशून्यः परमां शान्तिमाप्नोति

ते गताः परमां शान्तिं यान्[४] हि तृष्णा न बाधते।
तृष्णापाशविमुक्ता ये सङ्गदोषविवर्जिताः ॥ ३२ ॥

निर्मुक्तपापकल्माषा वीतशोका हि ते बुधाः।
कल्पकोटिसहस्राणि तृष्णया वञ्चिता नराः ॥ ३३ ॥

## तृष्णया वञ्चितो लोकस्तृष्णामेवोपास्ते

(न) ते त्यजन्ति(विषयान्) मायामोहवशंगताः।
तृष्णया वञ्चितो लोकस्तृष्णामेवोपसेवते ॥ ३४ ॥

लवणोदं[५] तृषार्तोयं यथा पिबति नारिकः।
न तेन (तुष्यति)जन्तुर्मुहुश्च परिशुष्यति[६] ॥ ३५ ॥

## दुःखकरीं तृष्णां न सेवेत

विषयेष्वेव[७] तृष्णार्तश्चेष्टते पुरुषोऽधमः।
तस्मात् तृष्णां न सेवेत सा हि तृष्णा दुरासदा ॥ ३६ ॥

## तृष्णावशो नैव प्रमुच्यते

तृष्णावशो हि पुरुषः संसारान्नैव मुच्यते।
अनुत्तमानि सौख्यानि भुक्त्वा देवेषु जन्तवः ॥ ३७ ॥

---

१. वशङ्गतः—क, ख।
२. वर्तयसि—क, ख।
३. ऋणभैरवं—क, ख।
४. मेषा—क, ख।
५. णोदकं—क, ख।
६. श्रुष्यते—क, ख।
७. मार्गइव—क, ख।

**तृष्णापाशविकृष्टाः नरकं पतन्ति**

तृष्णापाशविकृष्टास्ते पतन्ति नरकं पुनः।
अस्वतन्त्रादिकल्याणं नित्यदुःखमयं कटु ॥ ३८ ॥

**तृष्णया कदापि तुष्टिर्न भवति**

तृष्णायाः सेवनान्मुक्तः सन्मार्गमधिगच्छति[१]।
सतृष्णस्य कुतस्तुष्टिर्विषयेषु भविष्यति ॥ ३९ ॥

सा तृप्तिर्या वितृष्णस्य वीतशोकस्य देहिनः।
एवं वितर्कविहिताः प्रमादेन च वञ्चिताः ॥ ४० ॥

**तृष्णया देवानपि नरकं यान्ति**

तृष्णयाः लोषिता[२] देवाः पतन्ति नरकं पुनः।
विडम्बनेयं परमा यत्सुरा नरकं गताः ॥ ४१ ॥

क्रीडकाः परमा[३] भूत्वा कामस्य वशमागताः[४]।
न चोद्विजन्ति संसारान् प्राणिनश्चित्तमोहिताः ॥ ४२ ॥

**तृष्णया दुःखतरं पदमाप्नोति**

दुःखाद् दुःखतरं यान्ति तृष्णया परिवञ्चिताः।
यथा यथा सुखस्याप्तिर्वर्धते जालिनी तथा ॥ ४३ ॥

जालिनीवह्निदग्धस्य नरकानुपकर्षति।
सतृष्णस्य वितर्का ये तेषां संख्या न विद्यते ॥ ४४ ॥

**विषयगामिनः तृष्णया मृत्युमुखमेव प्रविशन्ति**

अवितर्कवितर्कन्तु मृत्युराजो विकर्षति।
वितर्ककामवशगास्तृष्णाविषयगामिनः ॥ ४५ ॥

**कामास्वादप्रमत्ताः विषयिणो दुःखिनस्तिष्ठन्ति**

सुखस्य भोगिनं दृष्ट्वा न विद्वद्भिस्तथेष्यते।
कामास्वादप्रमत्तानां प्राणिनां विषयार्थिनाम् ॥ ४६ ॥

---

१. पथदेशिता–क, ख।
२. कारणः–क, ख।
३. परमागता–क, ख।
४. तुषिता–क, ख।

**देहिनः तृष्णया दह्यन्ते**

जालिनी बाधते नित्यं यथा बध्नन्ति देहिनः ।
[1]पश्चालम्बनमेतत्तु तृष्णया नैव दह्यते ॥ ४७ ॥

**तृष्णाविमुक्ता विमला भवन्ति**

तृष्णाविमुक्तविमला न पापपुरगामिनः ।
सङ्कल्पदोषा कुटिला [2]त्रिदोषरजसोद्भवाः ॥ ४८ ॥

**तृष्णया संसारसागरे परिवर्ते पतन्ति जनाः**

प्रमादजलगम्भीराः स्त्रीरागकृतसेवनाः ।
गीततूर्यस्वराः शीघ्रं सुरापानाच्च[1] चञ्चलाः ॥ ४९ ॥

सञ्छन्नविषया सर्वे मनः क्षिप्ततरङ्गिणः ।
तृष्णानदीषु विषमे वहन्ति न च गोचरे ॥ ५० ॥

गाहन्ते ते च सम्मूढाः[2] सुरा रागेण वञ्चिताः ।
त्रिदोषकाष्ठसंभूताः प्रमादानिलवेगतः ॥ ५१ ॥

तृष्णानलः सुरगणान् दहते न च ते विदुः ।
न क्षणो नापि हि लवो न मुहूर्तं कथञ्चन ॥ ५२ ॥

या न तृष्णावशगतैः सुरैः समुपभुज्यते ।
तृष्णाभूमिरियं काष्ठा[3] वितर्कजलसम्भृता[4] ॥ ५३ ॥

---

1. धर्मा आलम्बनं सर्वे पतिः कारणमुच्यते ।
निरुध्यमाने कारित्रं द्वौ हेतू कुरुतः त्रयः ।
जायमाने ततोऽन्यौ तु प्रत्ययौ तद्विपर्ययात् ॥ इति ।

एवं संस्कृताऽसंस्कृताः सर्व एव धर्मा आलम्बनप्रत्ययः । निरुध्यमाने धर्मे द्वौ सहभू-संप्रयुक्तकहेतू कारित्रं ( कार्यं ) कुरुतः । जायमाने धर्मे त्रयः ( सहभू-सर्वत्रग-विपाक ) हेतवः कारित्रं कुर्वन्ति । अन्यौ आलम्बनाऽधिपति-प्रत्ययौ समनन्तराऽऽलम्बनाऽधिपति-प्रत्यय-प्रतिलोमतः कार्यं कुरुतः ।

2. कौटिल्यं शाठ्याज्जायते दोषो द्वेषात्, कषायो रागात् । कषायो रञ्जनहेतुः । एते त्रयः—राग-द्वेष-मोहाः विद्यन्ते ।

—अभिधर्मकोशः ।

---

१. सुरपाशान–क, ख ।
२. अवगाहन्ति–क, ख ।
३. कष्टा–क, ख ।
४. शतसंभृता–क, ख ।

**तृष्णासर्पदग्धः कालवशीकृतो भवति**

यस्मिन् क्रीडन्ति विवशाः देवाः कामवशानुगाः ।
चित्तादिना प्रचण्डेन तृष्णाविषविसर्पिणा ।। ५४ ।।

दृष्टानुपञ्चशीर्षेण किं वृथा विलपस्यथ ।
तृष्णानदी विशालेयं पञ्चतीर्थसमुद्भवा ।। ५५ ।।

तृष्णामोहेन्द्रजालेन विप्रकीर्णेन सर्वदा ।
तथा प्रपञ्चिता देवा यथा न शुभभागिनः[१] ।। ५६ ।।

**तृष्णाविषयघृतसिक्तो वर्धत एव**

नेन्द्रियाणि सदा कामैस्तृप्यन्ति हि कथञ्चन ।
संवर्धते तथा[२] तृष्णा घृतसिक्तो यथाऽनलः ।। ५७ ।।

**तृष्णया विविधासु योनिषु जनाः भ्रमन्ति**

नानाविधैः सुखैरेषा जालिनी लोकनाशिनी ।
नरकप्रेततिर्यक्षु भ्रामयन्ती नरान् सदा ।। ५८ ।।

**वीततृष्णः निर्मुक्तबन्धनः परमां गतिमाप्नोति**

मृत्यूपपत्तिदोलायां श्लिष्यन्ते बालिशाः जनाः ।
सुशीलावीततृष्णाश्च[३] गतास्ते परमां गतिम् ।। ५९ ।।

निर्मुक्तबन्धना धीरा गतशोका गतव्यथाः ।
सुखं प्राप्नुवन्ति[४] नित्यं ये न तृष्णावशानुगाः ।
जन्मदुःखमयैः पाशैर्न ते विध्यन्ति सूरयः[५] ।। ६० ।।

**तृष्णाविसृष्टिः ज्ञानाय प्रवर्तयति**

येषां सर्वास्ववस्थासु ज्ञानेषु विहितं मनः ।
अनिमित्ते मनो येषां विसृष्टा ये च तृष्णया ।
ते वीतमलकान्ताराः पारं प्राप्ताः सुखोदयम् ।। ६१ ।।

**तृष्णामोहप्रमत्ताः भवे भवे भ्रमन्ति**

तृष्णामोहप्रमत्ता ये रतिसौख्यास्तथैव च ।
मोहितास्ते देवगणा भ्रमिष्यन्ति भवे भवे ।। ६२ ।।

---

१. इतः पूर्वं पादद्वयमधिकं निरर्थकमिव प्रतिभाति--यस्यामयामतीरं शासकं परमशिवं ।
२. यदा--क, सदा--ख ।
३. भीमत्वा०--क ख ।
४. सुखंस्वयजि--क, ख ।

**अहर्निशं तृष्णा तापयति**

कुट्टनव्यवहारा ये परिचित्तापहारिणः ।
अविद्याबहुला ये वा नित्यं दाहाभिकाङ्क्षिणः ।
न रात्रौ न दिवा तेषां हृदयं सुप्रसीदति ।। ६३ ।।

**लोभाभिभूताः तुषाग्निकल्पा भवन्ति**

लोभाभिभूतमनसां परिवित्ताभिकाङ्क्षिणाम् ।
तेषां तुषाग्निकल्पानां विश्वसेन्न[१] स्वभावतः ।। ६४ ।।

**विषयेन्धन सर्पाद् भयमेवोचितम्**

बिभेति हि नरः सर्वः सर्पादिव विषेन्धनात् ।
लोभेन विषयेणैवाऽभिभूतास्ते नरा भृशम् ।। ६५ ।।

**तृष्णावशगाः विविधां योनिं लभन्ते**

ते मृता नरकं यान्ति प्रेतयोनिं तथैव च ।
तस्मादपि विनिर्मुक्ता नरकाद् वह्निसम्मुखात् ।। ६६ ।।

**आकाङ्क्षिणः नित्यं दुःखभागिनो भवन्ति**

पञ्चजन्मशतान्येते भवन्ति परिकाङ्क्षिणः ।
विवर्णा दीनवदना नित्यं दुःखस्य भागिनः ।
भवन्ति मनुजाः सर्वे लोभोपहतचेतसः ।। ६७ ।।

**विवेकसम्पन्नाः परमां गतिं लभन्ते**

प्रहीणलोभा ये सन्ति नित्यं ज्ञानाभिकाङ्क्षिणः ।
बुद्धिमन्तः सदा सन्तः ते गताः परमां गतिम् ।
निर्वाणहृदया वीतलोभमोहाः सदा नराः ।। ६८ ।।

**लोभाकृष्टस्य विनिपातः**

लोभाशीविषदष्टस्य विनिपातो ध्रुवं स्थितः ।
क्रियमाणो ध्रुवं लोको वर्धते स मुहुर्मुहुः ।। ६९ ।।
शुष्केन्धनं समादाय यथा वह्निः प्रवर्धते[२] ।
धनतृष्णारताः सत्त्वाः धनोपार्जनतत्पराः ।। ७० ।।
मृत्युकाले समुत्पन्ने त्यजन्ति विवशा धनम् ।
यच्च तत्सम्भवं योगात् तत् सर्वं न विनश्यति ।। ७१ ।।

---

१. विषमाना—क०, ख० ।    २. प्रवर्तते—क, ख ।

**लोभात्मा घोरं नरकं याति**

तेन वित्तेन[1] लोभात्मा नीयते नरकं भृशम् ।
अन्यैस्तद्भुज्यते वित्तं[2] स तु पापेन लिप्यते ।। ७२ ।।

प्रयान्ति नरकं घोरं पश्चात्तापेन दह्यते ।
अनर्थो ह्यर्थरूपेण सुखरूपेण वा सुखम् ।। ७३ ।।

**लोभत्यागं प्राज्ञः कुर्यात्**

अमित्रं मित्ररूपेण लोभोऽयं हृदि वर्तते ।
न लोभं संश्रयेत् प्राज्ञो लोभाग्निर्दह्यते सदा ।। ७४ ।।

**लोभदग्धाः नरकगामिनो भवन्ति**

तेन दग्धा भृशं सत्त्वाः पश्चान्नरकगामिनः ।
लोकसाधारणा ह्येते विभवाः सुखवर्जिताः ।। ७५ ।।

**तृष्णाभयविमुक्तिरेव श्रेयस्करी**

तेषामर्थे कथं पापं क्रियते मन्दबुद्धिभिः ।
तृष्णाभयविमुक्तस्य निराशस्य हि सर्वतः ।। ७६ ।।

वीतकाङ्क्षस्य धीरस्य नित्यं पदमवस्थितम् ।
सम्पत्तौ धावते लोको विपत्तौ नावबुध्यते ।। ७७ ।।

**सम्पत्तिः क्षयान्ता**

विपदन्ता हि सम्पत्तिः क्षयान्तं दिवसं यथा ।
यथा तिष्ठति सम्पत्तिः विपत्तिः पापिका तथा ।। ७८ ।।

**कामभोगैर्देवा अपि नरकं यान्ति**

अवितृप्तस्य कामेभ्यस्तृष्णया परिदह्यते ।
यस्येष्टाः सम्पदो नित्यं सुखं चाभिमतं सदा ।। ७९ ।।

जनि नाशयते तासां तृष्णा नष्टा सुखावहा ।
ते देवा नरकं यान्ति कामभोगैस्तथार्पिताः ।। ८० ।।

अनलाचेष्टितं सर्वं तद् वदन्ति तथागताः ।
मनुष्या यच्च नरकं प्रया(न्ति) शतशस्तथा ।। ८१ ।।

---

१. बद्धाहि–क, ख । २. द्रविण–क, ख ।

**विमुग्धाः यति जीवनं नावगच्छन्ति**

चेष्टितं तद् विशालायाः योषिकाया विदुर्बुधाः ।
विमोहिता न विन्दन्ति त्वरितं स्वल्पजीवितम् ।। ८२ ।।

**तृष्णया सुकृतानि विनश्यन्ति**

सुकृतानि च नश्यन्ति तृष्णा नैव विनश्यति ।
भवे भवे गता सत्वाः न विन्दन्ति शुभाशुभम् ।। ८३ ।।

शुभस्य फलमेवेष्टं यत् सुराः परिभुञ्जते ।
अशुभस्य तथा दृष्टमसुखं विनिपातजम् ।। ८४ ।।

**शुभाशुभप्रहीणा एव जरामरणरहिता भवन्ति**

शुभाशुभप्रहीणा ये सङ्गदोषविवर्जिताः ।
ते गताः परमं स्थानं जरामरणवर्जितम् ।। ८५ ।।

**तृष्णानदीपरिक्षिप्तः जनः किमपि नावगच्छति**

पञ्चारं भवचक्रं तत्[१] तृष्णानाभिपुरःसरम् ।
नदीरागपरिक्षिप्तं न च लोकोऽवबुध्यते ।। ८६ ।।

दोषावर्ततरा ज्ञेया सङ्कल्पमकराकुलाः ।
तृष्णानदी विशालेयं न च लोकोऽवबुध्यते ।। ८७ ।।

**तृष्णा त्रिषु कालेषु वञ्चिका**

त्रिकाले वञ्चनी तृष्णा नित्यमज्ञानकारिणी ।
न तस्यां विश्वसेद् धीमान् संसारबन्धना हि सा ।। ८८ ।।

**तृष्णा लोकबन्धनभूता**

मित्रवद्दृश्यते काले[२] शत्रुवच्च निकृन्तति ।
न तस्यां[३] विश्वसेत् प्राज्ञः सा हि लोकस्य बन्धनम् ।। ८९ ।।

शक्यं हि बन्धनं छेत्तुमायसं दारुवत्तथा ।
न तृष्णाबन्धनं छेत्तुं नित्यं कामगवेषिभिः ।। ९० ।।

यस्येष्टो बन्धभेदोऽयं यस्येष्टं सुखमव्ययम् ।
स तृष्णया[४] विमुक्तः(स्यात्)प्रज्ञाशो (धनकृद्) भवेत् ।। ९१ ।।

---

१. पञ्चारो भवचक्रोऽयं–क, ख । २. कालः–क, ख ।
३. तेषां–क; ख । ४. तृष्णा–क, ख ।

**ज्ञानेन तृष्णावृक्षस्य छेदनं कर्त्तव्यम्**

ज्ञानालोकः सुखालोको दुःखं तृष्णातमःस्मृतम् ।
तस्मादालोकमास्थाय तमो नुदति पण्डितः ॥ ९२ ॥

ज्ञानखड्गेन तीक्ष्णेन तृष्णावृक्षं निकृन्तति ।
निकृत्तवृक्षः (स) नरः सुखं प्राप्नोत्यनुत्तमम् ॥ ९३ ॥

दोषेण बहुला ह्येषा नदी प्रस्रवणाकुला ।
दोषा[1]नेतानहित्वा (न) भवान्मुच्यति पण्डितः ॥ ९४ ॥

**प्रज्ञानावमाश्रित्य तृष्णानद्याः पारं गच्छति**

तृष्णानदीं त्रिपथगां प्रमादावर्तदुस्तराम् ।
प्रज्ञानावं समाश्रित्य पारं गच्छन्त्यनामयम् ॥ ९५ ॥

महेच्छतामहच्छत्रं येन चायान्ति[2] बालिशाः ।
तस्मान्महेच्छता बध्या त्वयेयं ज्ञानचक्षुषा ॥ ९६ ॥

**महेच्छैव हृदयव्रणभूता**

महेच्छताव्रणस्तीव्रो हृदये यस्य जायते ।
न रात्रौ न दिवा तस्य सुखं भवति लोभिनः ॥ ९७ ॥

सङ्कल्पे तु न सम्भूतः तृष्णावायुसमीरितः ।
महेच्छतामयो वह्निर्दहते हृदयं नृणाम् ॥ ९८ ॥

**लोभेनात्मनोऽहितं कुर्वन्ति जनाः**

लोभेनावेष्टितमनाः पुरुषो लघुचेतसा ।
जीवितान्यपि साराणि जहाति धनतृष्णया ॥ ९९ ॥

पापानि हि च कर्माणि कुर्वन्ति पुरुषाः क्षितौ ।
धनलाभेन तत् सर्वं प्रवदन्ति मनीषिणः ॥ १०० ॥

ये साहसं न कुर्वन्ति विशन्ति ज्वलनं च यत् ।
तत् सर्वं लोभदोषेण कुर्वन्त्यहितमात्मनः ॥ १०१ ॥

शस्त्रानिलानि दुःखानि विविधानि च (सर्वतः) ।
विशन्ति(वै) नरा मूढा लोभस्तत्र हि कारणम् ॥ १०२ ॥

---

१. दोषवान्—क, ख ।    २. पायन्ति—क, ख ।

हृदयस्थो मनोवह्निर्नित्यं बह्विच्छतां नृणाम्।
अल्पेच्छतया (हि) हृच्छान्तिर्भवतिलाभिनः॥ १०३॥

यथाग्निरिन्धनेनैव प्रशान्तिमधिगच्छति।
तथा वह्विच्छतां नृणां धनैर्वृद्धिः प्रजायते[१]॥ १०४॥

## अल्पेच्छतैव सुखम्

भूपाला (हि) धनैस्तृप्ताः कोटिशो निधनं गताः।
यास्यन्ति चान्ये निधनं तस्मादल्पेच्छता सुखम्[२]॥ १०५॥

## तृष्णाविहीन एव सुखमाप्नोति

दुःखं वह्विच्छता नृणां लक्षणं सुखदुःखयोः।
(हेया सर्वप्रयत्नेन) इदमुक्तं परीक्षकैः।
एष पन्थाः शिवः श्रेष्ठो येन तृष्णा वशीकृता[३]॥ १०६॥

॥ इति तृष्णावर्गोऽष्टमः॥

---

१. प्रयाति हि—क, ख। २. दृष्टं—क, ख।
३. स्थितं—क, ख।

## (९) स्त्रीजुगुप्सावर्गः

### स्त्रिय एवानर्थमूलम्

स्त्रियो मूलं (हि) पापस्य धननाशस्य सर्वथा ।
स्वहिते ये न निरताः कुतस्तेषां भवेत् सुखम् ।। १ ।।

अनर्थकर्मरतयः शाठ्येर्ष्याबहुलास्त्रियः ।
लोकद्वयविनाशाय पुरुषाणामवस्थिताः ।। २ ।।

नित्यं सरागकुशला नित्यं तद्वचनाः पराः ।
अन्यच्च हृदये तासां कथयन्त्यन्यदेव वा ।। ३ ।।

आपातमधुराः[1] सूक्ष्माः विपाके वज्रचेतसः ।
नोपकारेण सत्कारं स्मरन्ति लघुचेतसः ।। ४ ।।

### स्त्रियो विद्युत्स्वभावहृदया अतिचञ्चलाः

नाशयित्वा प्रियशतं स्मरन्त्येकं हि विप्रियम् ।
विद्युत्स्वभावहृदयाः स्त्रियः पापस्य भूमयः ।। ५ ।।

### स्त्रीणां नाशसाधकत्वप्रदर्शनम्

स्त्रीहेतुनाशमिच्छन्ति पुरुषा वक्रचेतसः ।
स्त्रीविनाशो विनाशो द्रागिह लोके परत्र च ।। ६ ।।

### स्त्रीदर्शनमेवाग्निवद्दहति

एवं तु सर्वविषयाः स्त्रीदर्शनमिहैकजम् ।
अभिभूय सर्वविषयान् नार्यग्निज्वलनं महत् ।। ७ ।।

### स्त्रीदोषप्रदर्शनपूर्वकं नारीजुगुप्सासमीक्षणम्

संश्लेषादपि विश्लेषः स्मरणात् कथनादपि ।
स्त्रीणां दाहसमुत्थोऽयं वह्निरन्तर्जहासकः ।। ८ ।।

रागेण सह जायन्ते नित्यं वै दारुणाः स्त्रियः ।
दानेन सह जायन्ते यथा लोके हुताशनाः ।। ९ ।।

---

१. मृदुका–क, ख ।

न भवेत् तादृशो दाहो योऽयं वह्निसमुद्भवः।
यादृशः स्त्रीमदो[१] ह्यस्ति देहिनां हृदयोद्भवः ॥ १० ॥

सर्वलोकविनाशाय सर्वधर्मक्षयाय[२] च।
हेतवो नरकस्यैताः स्त्रियः प्रोक्ता महर्षिभिः ॥ ११ ॥

मुखतो मधुरामर्षा हृदयेन विषोपमाः।
अनवस्थितसौहार्दा नासां कश्चित् प्रियो नरः ॥ १२ ॥

मुहूर्तेन प्रियस्तासां मुहूर्तेन तथाऽप्रियः।
अनवस्थितसौहार्दाश्चञ्चला[३] क्षणिकोपमाः[४] ॥ १३ ॥

वञ्चनाहेतुकुशला नित्यं कार्यपरायणाः।
नित्यं संयोगमनसो नित्यं मानपरायणाः ॥ १४ ॥

देवानां च मनुष्याणां पिशाचोरगराक्षसाः।
न बन्धभूता यादृश्यः स्त्रियः कालविषोपमाः ॥ १५ ॥

नोपकारं स्मरन्त्येता न कुशलं नापि विक्रमम्।
अनवस्थितचित्ताश्च वायुवेगसमाः स्त्रियः ॥ १६ ॥

भवन्ति सम्पदो यत्र रक्ष्यन्ते यत्र योषितः।
व्यसनेषु विरक्तास्तु त्यजन्ति पुरुषं ध्रुवम् ॥ १७ ॥

यं यं गच्छन्ति पुरुषं रक्ष्यन्ते तत्र योषितः।
शीघ्रं शीघ्रं नरं ह्येतास्त्यजन्ति[५] पुरुषं स्थितम् ॥ १८ ॥

यथा हि भ्रमरी पुष्पं शुष्कं त्यजति सर्वदा।
तथा वित्तेन रहितं पुरुषं त्यजति प्रिया ॥ १९ ॥

निस्त्रिंशहृदयाः क्रूराश्चञ्चलास्तमसावृताः।
स्त्रियः पुरुषनाशाय जाताः केनापि हेतुना ॥ २० ॥

देवानां बन्धनं नाम यथा स्त्रीबन्धनं मतम्।
स्त्रीबन्धननिबद्धास्तु पतन्ति नरकं पुनः ॥ २१ ॥

एतदग्रं हि रागाणां यो रागः स्त्रीसमुद्भवः।
स्त्रीरागदग्धमनसं पश्चाद् दहति पावकः ॥ २२ ॥

---

१. स्त्रीमयादासादेहिनो–क, ख।
२. क्षयानि–क, ख।
३. विद्युदु–क, ख।
४. चेतसो–क, ख।
५. त्यजत्यगता–क, ख।

प्रत्यक्षाण्यपि कर्माणि रागैश्चापहृतः पुमान् ।
न वेत्ति मूढहृदयः स्त्रीरागेण विमोहितः ॥ २३ ॥

विश्वास्य विषये पुरुषं बद्ध्वा प्रियमनेकशः ।
त्यजन्ति वित्तनाशेन त्वचं यद्वद्भुजङ्गमाः ॥ २४ ॥

सर्वोपायभृता नार्यः सर्वशः परिपालिताः ।
न शक्याः स्ववशीकर्तुं स्त्रियः परमदारुणाः ॥ २५ ॥

आसां सर्वस्वभावानां नारीणां चलचेतसाम् ।
न यायाज्जातु विश्वासं पुमान् धीरेण चेतसा ॥ २६ ॥

स्त्रीविधेयास्तु ये मर्त्या[1] नित्यं कामगवेषिणः ।
पश्चिमदर्शनं तेषां सुरलोके भविष्यति ॥ २७ ॥

पञ्चाङ्गिकेन तूर्येण विप्रलुब्धाः समन्ततः ।
विन्दन्ति व्यसने दुःखं यदवश्यं भविष्यति ॥ २८ ॥

इमास्ताश्चञ्चला नार्यो यासां रागः कृतस्त्वया ।
ता भवन्तं परित्यज्य पुनरन्यं ततो गताः ॥ २९ ॥

द्विधा हि प्रकृतिर्यासां[2] (योषितां) सहचारिणी ।
भूयोऽभियन्ति पुरुषं व्यसनेषु त्यजन्ति च ॥ ३० ॥

मृगवन्मोहयन्त्येताः पुरुषं रागमोहितम् ।
पश्चात् (तु) व्यसने प्राप्ते त्यजन्ति लघुचेतसः ॥ ३१ ॥

नोपकारं न सत्कारं न प्रियाणि न सन्ततिम् ।
स्मरन्ति योषितस्तीव्रा व्यसने समुपस्थिते ॥ ३२ ॥

म्लानं पुष्पं यथा त्यक्त्वा भ्रमरोऽन्यत्र धावति ।
तथा हि व्यसने प्राप्ते त्यजन्ति खलु योषितः ॥ ३३ ॥

अनपेक्षितसौहार्दाश्चञ्चलाश्च रणप्रियाः ।
भवन्ति योषितः सर्वा विषमिश्रं यथा मधु ॥ ३४ ॥

मोहयन्ति नरान्[3] कामैर्वाक्यैश्चापि विशेषतः ।
न तेषां विश्वसेद्धीमान् पुरुषो धीरमानसः ॥ ३५ ॥

---

१. मृत–क, ख ।
२. दृढा प्रकृतिर्यासां हि–क, ख ।
३. नरैः–क, ख ।

आभिर्विमोहिताः[१] किं वा रंजिताः पुरुषाः स्वतः[२]।
न कुर्वन्ति हितं वाक्यं यथा मुष्णिकगामिकम् ॥ ३६ ॥

देवासुरनरान् यक्षान् पिशाचोरगराक्षसान्।
इन्द्रजालमया नार्यो वञ्चयन्ति विशेषतः ॥ ३७ ॥

एतदग्रञ्च पाशानां यदिदं स्त्रीमयं दृढम्।
अनेन बद्धाः पुरुषा भ्रमन्ति भवचारके ॥ ३८ ॥

न कश्चित् पाशपाशोऽयं हृत्पाशो योषितः परम्।
हृत्पाशबन्धनैर्बद्धाः पुरुषा दुःखमोहिताः[३] ॥ ३९ ॥

दह्यते छिद्यते पाशस्स्त्रीमयस्तु न दह्यते[४]।
नरक-प्रेत-तिर्यक्षु गच्छन्तमनुगच्छति ॥ ४० ॥

मूर्तिमान् बध्यते कायः पाशेन महता तथा।
अमूर्तिगं चित्तमिदं स्त्रीपाशेन तु बध्यते ॥ ४१ ॥

(न) दृश्यते पाशमन्यं येन बध्नन्ति योषितः।
अभिज्ञेयमप्रमाणं स्त्रीमयं बन्धनं महत् ॥ ४२ ॥

अनेनापातरम्येण (दुःख) मोक्षेण सर्वदा।
पाशेन बद्धाः पुरुषा न मुच्यन्ते भवार्णवात् ॥ ४३ ॥

षडिन्द्रियाणि बध्नाति पाशो यः स्त्रीमयो महान्।
पाशस्तु कायमेवैकं कश्चित् बध्नाति वा न वा ॥ ४४ ॥

बन्धनं न दृढं हीदं मोक्षवार्यं षडायसम्[५]।
संरक्तचित्तभोगे हि[६] मन्दबुद्धेर्नरस्य[७] च ॥ ४५ ॥

स्नायुयन्त्रेण बद्धासु विस्तृतकर्मभूमिषु।
तीक्ष्णरक्तासिना युक्तो मरणार्थमिहागतः ॥ ४६ ॥

---

१. इमाः–क, ख।
२. पुरुषो रंजिताश्चविमोहिता–क, ख।
३. भोगिनः–क, ख।
४. पङ्क्तिरियमेवमस्ति–"पाशप्रमाणदृश्यतेयेनबुध्यतियोत्तवः"–क, ख।
५. षडायसंदरिवबलवजं बा–क, ख।
६. संरक्त चित्तस्य तु।
७. पुत्रेषु दारेषु च योऽतिरक्तः–क, ख।

## स्त्रीणां दौर्गुण्यम्

वञ्चनाच्छलकूटासु रभसा नु विशेषतः ।
चञ्चलो भ्रान्तचित्तासु भ्रान्तस्त्वङ्गक्षणारिषु ॥ ४७ ॥

विभ्रान्तो भ्रान्तकथितैर्भूषणानां तथा स्वनैः ।
हरन्ति पुरुषं क्षिप्रं वञ्चनाकुशलाः स्त्रियः ॥ ४८ ॥

नानाविधेषु पुष्पेषु यथा चरति षट्पदः ।
नानाविधेषु मर्त्येषु तथेमाश्चञ्चलाः स्त्रियः ॥ ४९ ॥

यथा मधुरिका पीत्वा पुष्पमन्यत्र गच्छति ।
तथा पुरुषमापीयः[1] प्रयान्ति रभसं स्त्रियः ॥ ५० ॥

अर्थादानेषु कुशलाः क्रुद्धा नित्यं दुरासदाः ।
वञ्चयित्वा नरं शीघ्रमन्यत्र संप्रयान्ति ताः ॥ ५१ ॥

साध्यमायाप्रहरणाः कालकूटविषोपमाः ।
स्त्रियः पुरुषघातिन्यश्चातुर्येषु व्यवस्थिताः ॥ ५२ ॥

वाय्वाकाशानला यद्वन् न शक्ता ग्रथितुं नरैः ।
तथोपायशतैर्नार्यो (न) शक्ता रक्षितुं नरैः ॥ ५३ ॥

अनर्थव्याधिमृत्यूनां दुष्कृतानाञ्च कर्मणाम् ।
हेतुभूताः परं नार्यो मोक्षचर्याबधस्य च ॥ ५४ ॥

यदनेकप्रकारेषु शठेषु पापकर्मसु ।
( पतन्ति ) मनुजा लोके तत्र हेतुः परस्त्रियः ॥ ५५ ॥

न बालयौवनेनैव वार्धक्येनैव शाम्यति[2] ।
चापल्यं सहजं स्त्रीणां भास्करस्य यथा प्रभा ॥ ५६ ॥

अनित्यं सौहृदं तासां दीप्तानामर्चिषां[3] कणैः ।
वैरञ्च शाश्वतं तासामश्मनां च यथा व्रणः ॥ ५७ ॥

धनहीने विरज्यन्ते धनयुक्ता भवन्ति च ।
यावदर्थं स्त्रियस्तावदर्थहीने कुतः स्त्रियः ? ॥ ५८ ॥

न सेवाभिश्चदानेन नोपकारैः पृथग्विधैः ।
स्वीकर्त्तुं न स्त्रियः शक्याः ज्वलनोपमचेतसः ॥ ५९ ॥

---

१. पीत्वा—क; ख ।
२. शाम्यते—क, ख ।
३. दीपानार्च्चिषोयथा—क, ख ।

यथा नरोऽनुकूलश्च छन्दकर्त्ता यथा यथा।
तथा तथा स्त्रियस्तस्य वञ्चनाकुशलाः परम् ॥ ६० ॥

पुष्पच्छन्नो यथा सर्पो भस्मच्छन्नो यथा नलः।
रूपच्छन्नं तथा चित्तमासां भवति योषिताम् ॥ ६१ ॥

विषवृक्षे[१] यथा पुष्पं दृष्टिरम्यं न शान्तये।
विषवृक्ष (समा) नार्यः परिवर्ज्याः समन्ततः ॥ ६२ ॥

नारीणां दर्शनाकांक्षी विषयेषु च तत्परः।
नरो न सुखभोगाय(ह्य)स्मिल्लोके न चापरे ॥ ६३ ॥

नाग्निना न च शस्त्रेण न बलेन न जन्तुभिः।
स्त्रीमयं बन्धनं हेतुः शक्यते न दुरासदम् ॥ ६४ ॥

दोषजालमिदं(सूत्रं)स्त्रीमयं चरते भुवि।
यस्त्रीविवर्जितो धीमान् अस्मिल्लोके महीयते ॥ ६५ ॥

यथा भूतैर्मनुष्याणां स्वकर्मोत्थापने[२] न च।
तथा स्त्रियो हि रक्षन्ति विषमार्थं[३] त्यजन्ति च ॥ ६६ ॥

गतार्थविभवं[४] भूयो वर्जितं[५] स्वेन कर्मणा।
दैवं समीक्ष्य[७] चपलाः स्त्रियो[८] नैव प्रभाविकाः ॥ ६७ ॥

## स्त्रीसुखं क्षणभङ्गुरम्

क्षणभङ्गमिदं[९] सौख्यमधिगतमवस्थितम्[१०]।
[1]चत्वार्येतानि दुःखानि सेवितानि नृभिः[११]सदा[१२] ॥ ६८ ॥

---

1. सत्यान्युक्तानि चत्वारि दुःखं समुदयस्तथा।
निरोधो मार्ग इत्येषां यथाऽभिसमयं क्रमः ॥ इति

तत्र 'प्रथमं दुःखसत्यम्' जातिर्दुःखमिति संस्कारदुःखतया। जरा-दुःखमिति विपरिणामदुःखतया। व्याधिर्दुःखमिति दुःखदुःखतया। शेषं सुगमम्। संक्षेपेण पञ्चोपादानस्कन्धा दुःखमिति फलभूतास्त्रिदुःखोपमृष्टत्वात्।

---

१. वृक्षंवृक्षो–क, ख।
२. कामलोके–क, पाशलोके–ख।
३. गतादूरयक्तं भवं–क, ख।
४. त्यत्र–ख।
५. पिंगस्त्वभंगुरं–क, ख।
६. यमधिगचितम–क, ख।
७. सेवतानि–क, ख।
८. सस्त्रिभिः–क, सन्निभि–ख।
९. पिंगस्त्वभंगुरं–क, ख।
१०. यमधिगचितम्–क, ख।
११. सन्निभि–ख।
१२. 'ख' पुस्तके नास्ति।

ननु वेदनैकदेशो दुःखम्। कथं सर्वे पञ्चोपादानस्कन्धा दुःखम्, त्रिदुःखतायोगात् दुःखा उच्यन्ते। तिस्रो दुःखताः–दुःखदुःखता, संस्कारदुःखता, विपरिणामदुःखता च। ताभिर्यथायोगं सर्वे सास्रवाः स्कन्धा दुःखा उच्यन्ते। यदा सुखमप्यत्रास्ति कस्माद् दुःखमेवार्यसत्यमुच्यते। सुखस्याल्पत्वात्। कतिपयमुद्गादिगुडिकासद्भावे माषराशिव्यपदेशवत्। को हि विद्वान् परिषेकसुखाणुकेन गण्डः सुखमिति व्यपदिशेत्।

द्वितीयं'दुःख समुदयसत्यम्' समुदेत्यस्माद्दुःखमिति समुदयः। समन्तादुत्पद्यतेऽस्मादित्यर्थः। दुःखस्य समुदयोः दुःखसमुदयः। तृष्णा पौनर्भविकी नन्दीरागसहगतेति विस्तरः। पुनर्भवः अनागतं जन्म। यत्प्रयोजना पौनर्भविकी तृष्णा। नन्दी क्लिष्टं सौमनस्यम्। रागस्तु सक्तिलक्षण इति प्रसिद्धः। तत्राभेदेन पुनर्भवप्रार्थना, यया स्यामिति प्रार्थयते, न तु देवः स्यां मनुष्यो वेति भेदेन, सा पौनर्भविकी तृष्णा। सा च प्रत्युत्पन्नात्मभावभोगवस्त्वालम्बनाभ्यां नन्दीरागाभ्यां पर्यायेण समुदाचारसस्तद्व्यवकीर्णत्वात् नन्दीरागसहगतेत्युच्यते। सहशब्दश्चात्रानन्तर्ये। नन्दीरागानन्तरं समुत्पद्यत इत्यर्थः। मैत्रीसहगतस्मृतिसंबोध्यङ्गभावना वचनवत्। यथा मैत्रीसहगतं स्मृतिसंबोध्यङ्गं भावयति इति मैत्रीसमनन्तरमिति गम्यते, मैत्र्याः सास्रवत्वात् स्मृतिसम्बोध्यङ्गस्य चानास्रवत्वात् सहकालायोगः। तथेहापि तृष्णारागयोः सहकालयोगो द्रव्यसमताविरोधादिति। नन्दीरागश्च तृष्णायाः कारणम्। सा च पुनर्भवस्येति नन्दीरागसहगतेत्युच्यते।

यत एव कर्माविद्यादीनामपि हेतुत्ववचनात् समुदयसत्यत्वं सिद्धम्, कस्मादिह सूत्रे तृष्णैव समुदयसत्यमुक्तम्, अस्त्येतत्। प्रधानहेतुभावादेवमुक्तम्। तथा हि तृष्णाभिष्यन्दितं कर्म पुनर्भवाक्षेपसमर्थम्, न केवलं कर्म। आक्षिप्तस्य पुनर्भवस्याभिनिर्वर्तने मूलं तृष्णेति विशेषप्रत्ययः अर्थात् अविद्या कर्म च सामान्यप्रत्ययः, मोहरहितस्यानुशयस्याभावात्। तद्यथा न ह्यर्हतां कर्माण्यनियतवेदनीयानि त्रैधातुकानि न विद्यन्ते। तृष्णाऽभावात् तु पुनर्भवाभिनिर्वर्तने न समर्थानि।

दुःखस्य निरोधो 'दुःखनिरोधः' इति तृतीयं निरोधसत्यम्। सास्रवस्य वस्तुनः प्रहाणमित्यर्थः। शिष्टपदव्याख्या पूर्ववत्। तस्या एव तृष्णाया इत्यादि। अशेषतः प्रहाणमित्यारभ्य यावदस्तङ्गमः इत्यष्टौ पदानि। तत्र अशेषतः प्रहाणमित्युद्देशः। शेषो निर्देशः। कुतः सर्वावस्थाप्रहाणसंदर्शनात्। सर्वावस्थाप्रहाणं विनोदावस्थं यदाह—प्रतिनिःसर्ग इति। प्रतिनिःसृज्यन्ते विनोद्यन्त इत्यर्थः। विनोदनं पुनरुत्पन्नस्य क्लेशस्य वैमुख्यभावेन क्षेपः। विष्कम्भणावस्थं यदाह-व्यन्तीभाव इति। विष्कम्भिता निर्वेधभागीयादिना। व्यन्तीभावो न्यग्भाव इत्यर्थः। दर्शनमार्गावस्थं यदाह—क्षय इति। शिलाभङ्गन्यायेन दर्शनहेयानां

**स्त्री विषाग्निसदृशा**

तस्मात् तानि विवर्ज्यानि[1] विषाग्निसदृशानि हि।
यः कश्चिच्चपलो जन्तुर्यश्च दोषोद्भवः सदा ॥ ६९ ॥

---

प्रहाणात्। भावनामार्गावस्थं यदाह-विराग इति। रागसंक्षयत्वात्। अशैक्षमार्गावस्थं यदाह--'निरोध' इति। निरवशेषानुशयप्रहाणात्। समापत्त्यावरणविगमावस्थं यदाह--व्युपशम इति। अक्लिष्टस्याप्यावरणस्य विगमादत्यर्थं शमो व्युपशमः। उपधिविगमावस्थं यदाह--अस्तङ्गम इति। एकतराभिधाने सर्वावस्थप्रहाणप्रभेदो न दर्शितः स्यात्।

अन्ये त्वन्यथार्थं केषाञ्चित् पदानां कथयन्ति। प्रतिनिःसृज्यन्ते एतस्मिन् प्राप्ते सति सर्वानुशयप्राप्तय इति प्रतिनिःसर्गो निर्वाणम्। विशेषेणान्तो व्यन्तः प्रवृत्तेरवसानम्। अव्यन्तो व्यन्तीभवतीति व्यन्तीभावो निर्वाणभाव इत्यर्थः। पञ्चोपादानस्कन्धलक्षणस्य वस्तुनः प्रहाणं निरोधः। विशेषेण शमः सर्वोपद्रवस्यैतस्मिन् प्राप्ते सतीति व्युपशमः। सर्वस्य संस्कृतस्यासंस्कृतस्य सास्रवस्यानास्रवस्याभावादस्तङ्गमः। कोलोपमं धर्मपर्यायमाजानद्भिर्धर्मा एव प्रहातव्याः प्रागेवाधर्मा इति सूत्रात्। उद्देशनिर्देशस्तु पूर्ववदेव। एभिश्च पदैः सोपधिशेषो निरूपधिशेषश्च निर्वाणधातुर्यथायोगं दर्शित इति निरोधसत्यम्।

'दुःखनिरोधगामिनी प्रतिपदिति' चतुर्थं मार्गसत्यम्। दुःखस्य निरोधो दुःखनिरोधः, निर्वाणम्। तद्गन्तुं प्राप्तुं शीलमस्या इति दुःखनिरोधगामिनी-प्रतिपत् आर्यमार्गः। मार्ग एव हि प्रतिपदित्युच्यते निर्वाणप्रतिपादनात्। आर्याष्टाङ्ग इति विस्तरः। आर्य इत्यनास्रवः। मार्ग इति मार्गयन्त्यनेन योगिनो निर्वाणमिति मार्गः। अष्टाङ्गत्वं कथमित्याह—तद्यथा सम्यग्दृष्टिर्यावत्सम्यक्समाधिरिति। एभिश्च त्रिस्कन्धो मार्गो दर्शितः। शीलस्वभावत्वात् सम्यग्वाक् कर्मान्ताजीवाः शीलस्कन्धः। सम्यक् समाधिः सम्यक् स्मृतिश्च समाधिस्कन्धः। समाधेरानुकूल्यात् स्मृतिः समाधिस्कन्ध इत्युच्यते। तथाहि उपस्थितस्मृतेरविक्षेपाच्चित्तं समाधीयत इति। सम्यग्दृष्टिसङ्कल्पव्यायामाः प्रज्ञास्कन्धः। सङ्कल्पव्यायामौ न प्रज्ञास्वभावौ तयोर्यथाक्रमं वितर्कवीर्यस्वभावत्वात्। तस्यास्तु प्रज्ञाया अनुगुणाविति तद्व्यपदेश उक्तानि चत्वार्यार्यसत्यानि।

—अर्थविनिश्चयसूत्रनिबन्धनम्-सू० पृ० १४-१६।

—दुःखसत्ये चत्वार आकारा अपि विद्यन्ते। तद्यथा—अनित्यतः दुःखतः शून्यतः अनात्मतश्चेति।

-- महायानसूत्रसङ्ग्रहतः।

---

१. विवक्षानि–क, ख।

तस्मात् परिसमाविष्टाः स्त्रियः कारणवत्सलाः ।
न सूर्यस्तमसो हेतुर्नाग्निः शीतस्य कारणम् ॥ ७० ॥

न स्त्रीणां सौहृदं चित्ते स्वल्पमप्यवतिष्ठते ।
यथा स्थिरा भूमिरियं यथा वायुः सदा चलः ॥ ७१ ॥

## स्त्रियः दोषमेव स्मरन्ति

तथा स्त्रीणां कृतं नास्ति दोषमय्यः सदा स्मृताः ।
चिरप्रयत्नाः पुरुषैः लोभिता बहुशः स्त्रियः ॥ ७२ ॥

त्यजन्ति व्यसने प्राप्ते शुष्कं सर इवाशुगाः ।
नोर्ध्वगाः सरितो दृष्टा नाश्मनो गतिरिष्यते ॥ ७३ ॥

गिरीणां गमनं नास्ति स्त्रीणां नैवास्ति सौहृदम् ।
वपुःकीर्ति सदा नृणां धर्मार्थयशसां तथा[1] ॥ ७४ ॥

योनिश्चानर्थजालस्य दोषाणामुद्भवस्य च ।
भवेद् वज्रमयी मृद्वी त्यजेद्(रात्रौ यथा)रविम् ॥ ७५ ॥

न स्त्री त्यजेदसाध्यानि जन्मापेक्षा विशेषत. ।
नोपचारक्रिया दानप्रियवाक्यापलापनैः ॥ ७६ ॥

स्वीकर्तुं न स्त्रियः शक्या ज्वलनोपमचेतसः ।
सुखेषु समतां यान्ति व्यसनेषु त्यजन्ति च ॥ ७७ ॥

उपकारांश्च[2] विस्मृत्य दोषमेकं स्मरन्ति ताः[3] ।
वनोपवनशैलेषु भुक्त्वा सुखमनेकशः ॥ ७८ ॥

## स्त्री लोकस्य बन्धनम्

संप्राप्ते व्यसने तीव्रे स्त्रियः परिभवन्ति हि ।
लोकस्य बन्धनं नार्यो वञ्चनाकृतिवर्धिकाः ॥ ७९ ॥

अधमाः विनिपातानां दोषाणां चास्पदं(बहु) ।
सर्वलोकविनाशाय वशीकुर्वन्ति तृष्णया[4] ॥ ८० ॥

यथा स्त्रीबन्धनमिदं दुर्विषह्यं कृतं महत् ।
यदिदं बन्धनं लोके कामरागमयं महत् ॥ ८१ ॥

---

१. स्थितः–क, ख ।
२. उपकारिणी–क, उपकारिणि–ख ।
३. वै–क, ख ।
४. तृष्णामुद्भवशः कृता–क, ख ।

## स्त्रीवर्जनमेव श्रेयस्करम्

तथा चान्यप्रयत्नेन विचार्य उपलभ्यते ।
वशीकुर्वन्ति ता ( नार्यः ) कामबाणैरनेकशः ।। ८२ ।।

स्वल्पैः पराजितं कृत्वा कामस्य वशगाःस्त्रियः ।
रागेर्ष्याशाठ्यभूमीनां विद्युच्चञ्चलचेतसाम् ।। ८३ ।।

लोभाहङ्कारयोनीनां न विश्वास्याः कथञ्चन ।
शस्त्राग्निसदृशास्तीक्ष्णाः[१] कामपाशपरात्मनः ।। ८४ ।।

स्वभ्रप्रपातविषमं गंभीरसमचेतसाम् ।
पराभिद्रोहमायेन्द्रजालतद्गतमानसान् ।। ८५ ।।

अकालमृत्यु-वज्राग्नि-कालकूटसमात्मनाम् ।
अनेकदोषसम्भारनन्दितानामनेकशः ।। ८६ ।।

यदि शीललवः कश्चित् स्त्रीणां मनसि वर्तते ।
चिरेण दहते वह्निः स स्पृष्टः पवनेरितः ।। ८७ ।।

स्त्रीदर्शनसमुच्छ्रयमात्रं[२] दहति पावकः ।
तस्मात् स्त्रियो विवर्ज्याः स्युः यदिच्छेत् सुखमुत्तमम् ।। ८८ ।।

एतत् सर्वं परं लोके नारीणां वर्जनं सदा ।
यदृच्छाजालिनीहेतुं यः इच्छेद् भूतिमात्मनः ।। ८९ ।।

य इच्छति निर्वृत्तिं तु [२]स नरः स्त्रीं विवर्जयेत् ।
सुखासक्तस्तथार्थी ( च) कुसीदश्चञ्चलः शठः ।। ९० ।।

पापसेवी सुमृष्टाशी नरो भद्रं न पश्यति ।
उद्युक्तो वीर्यवान् धीरो धार्मिकः स्त्रीं विवर्जयेत् ।
दक्षो हेतुफलश्रद्धो नरः कल्याणवान् भवेत् [1]।। ९१ ।।

1. पङ्क्तिरियं 'ख' पुस्तके नास्ति ।

।। इति स्त्रीजुगुप्सावर्गो नवमः ।।

●

१. समस्तीक्ष्णाः—क, ख ।    २. गतिः—क, ख ।

## (१०) मद्यजुगुप्सावर्गः

**मद्यपानवर्णनसाधनप्रदर्शनम्**

मद्यपानं न सेवेत मद्यं हि विषमुत्तमम् ।
नश्यन्ति कुशला धर्मा मद्यपाननिषेवणात् ।। १ ।।

यः सेवते सदा मद्यं तस्य बुद्धिरसंस्थिता ।
बलबुद्धी न धर्मोऽस्ति तस्मान्मद्यं विवर्जयेत् ।। २ ।।

नाशानामुत्तमं नाशं मद्यमुक्तं मनीषिभिः ।
तस्मान्मद्यं न सेवेत (मद्यं) नाशयते नरम् ।। ३ ।।

अनिष्टाः पापका धर्मा मद्यपाननिषेवणात् ।
भवन्ति तस्माद् विषवन्मद्यपानं विवर्जयेत् ।। ४ ।।

धनक्षयं पापकरं कौसीद्यकरमुत्तमम् ।
मद्यपानस्थिता दोषाः तस्मात् तत् परिवर्जयेत्[1] ।। ५ ।।

रागस्योद्दीपनं मद्यं क्रोधस्यापि तथैव च ।
मोहस्योद्दीपकं भूयस्तस्मान्मद्यं विवर्जयेत् ।। ६ ।।

मद्यमूलमनर्थस्य ह्रासस्य नरकस्य च ।
सर्वेन्द्रियविनाशानां हेतुभूतं ह्यनर्थकम् ।। ७ ।।

अतिहर्षाभिधानस्य शोकस्य च भयस्य च ।
वाग्दोषस्याऽतिदम्यस्य पारुष्यस्याऽऽस्पदं हि तत् ।। ८ ।।

मद्येनाऽऽक्षिप्तमनसः पुरुषाः पशुभिः समाः ।
कार्याकार्यं न विन्दन्ति तस्मान्मद्यं विवर्जयेत् ।। ९ ।।

मद्यक्षिप्तो हि पुरुषो जीवन्नपि मृतो मतः ।
य इच्छेज्जीवितं सौख्यं स मद्यं वर्जयेत् सदा ।। १० ।।

---

1. भावदृष्टया पद्यमिदं तुलनीयम्—
मद्यात्परिभवो लोके कार्यहानिर्धनक्षयः ।
अकार्यकरणं मोहात् मद्यं त्यज ततः सदा ।।
—रत्नावली–२/४६ ।

**मद्यं सर्वदोषास्पदम्**

सर्वदोषास्पदं मद्यं सर्वानर्थकरं सदा।
सर्वपापेषु सोपानं तमसामालयो महान् ॥ ११ ॥

**मद्येन प्रेतलोके नरके वा पतनम्**

मद्येन नरकं यान्ति प्रेतलोकं तथैव च।
तिर्यक्षु यान्ति पुरुषा मद्यदोषेण वञ्चिताः ॥ १२ ॥

विषादपि विषं मद्यं नरकान्नरकं तथा।
व्याधीनां च परं व्याधिर्मद्यमुक्तं मनीषिभिः ॥ १३ ॥

**मद्येन हानिप्रदर्शनम्**

बुद्धीन्द्रियविनाशाय धर्मरत्नं क्षयाय च।
योऽतिरेकपरं मद्यं ब्रह्मचर्यवधाय च ॥ १४ ॥

मद्येन लघुतां यान्ति पार्थिवा. शास्त्रचक्षुषः।
किं पुनः प्राकृता मर्त्या मद्यपानविलम्बिताः ॥ १५ ॥

**मद्यस्य विनाशकरत्वम्**

कुठारः सर्वधर्माणां ह्रीविनाशकरं परम्।
मद्यं निषेवितं मर्त्यैर्विनाशायोपकल्प्यते ॥ १६ ॥

**मद्येन ज्ञानाज्ञानविवेकशून्यप्रदर्शनम्**

न ज्ञानं नापि विज्ञानं न कार्याणि न च क्रियाम्।
जानीते पुरुषः सर्वं मद्येन हृतचेतसा ॥ १७ ॥

**मद्यसेवनस्य परितापसाधनम्**

अकस्मात् तप्यते जन्तुरकस्मात् परितप्यते।
भवत्यकस्मात् पापी (च) यो मद्यमनुसेवते ॥ १८ ॥

**मद्यस्य बुद्धिसम्मोहजनकत्वम्**

बुद्धिसम्मोहजनकं [1]लोकद्वयविनाशकम्।
वह्निश्च मोक्षधर्माणां मद्यमेकं व्यवस्थितम् ॥ १९ ॥

---

1. लोकद्वयम्। तद्यथा—सत्त्वलोकः, भाजनलोकश्चेति।
—महायानसूत्रसङ्ग्रहः।

**मद्यस्य किम्पाकत्वम्**

अभ्यासे मधुरं मद्यं विपाके परमं कटु।
किम्पाकादपि किम्पाकं मद्यमुक्तं परीक्षकैः ॥ २० ॥

**नरकस्य साधनं मद्यम्**

न मद्ये विश्वसेद्धीमान् नरं वक्ष्यति मामिति।
शीतस्पर्शं विपाकोष्णं मद्यं नरकगामिकम् ॥ २१ ॥

सम्पत्तौ व्यसनं मद्यं देवानां तु विशेषतः।
यथा यथा सुखा प्रीतिस्तन्नाशे व्यसनं तथा ॥ २२ ॥

मद्यपानमदोन्मत्ताः सत्त्वा मोहवशानुगाः।
साक्ष्यमोहमयं पानं पिबन्ति रसतृष्णया ॥ २३ ॥

मद्यं मोहमयं पान पीत्वा कालेन चोदिताः।
नाकाल् प्रत्यक्षनरकं तस्मात् मद्यं न संस्पृशेत् ॥ २४ ॥

**दर्शनात्पानाच्च मद्यपानं मोहजनकम्**

दर्शनात् स्पर्शनात् पानात् मद्यं मोहयते नरम्।
तस्मात् स मद्यपानं च दूरतः परिवर्जयेत् ॥ २५ ॥

दर्शनाज्जायते लोभः स्पर्शनाद् गन्धसम्भवः।
गन्धाद् रसाभिलाषश्च रसनादधमा मतिः ॥ २६ ॥

**मनीषिणः मद्यसेवनात्पतन्ति**

नैकसर्वाधमं न्यासं कथयन्ति मनीषिणः।
[1]नामरूपनिषेधाय यथा मद्यं निषेवितम्[१] ॥ २७ ॥

---

1 मिथ्यादृष्टेस्तु मोहेन शेषाणां त्रिभिरिष्यते।
सत्त्वाभोगा अधिष्ठानं नामरूपं च नाम च ॥

एवं समापनमिति शेषः। अन्ये कर्मपथाः मृषावाद-पैशुन्य-प्रलाप-वचनानि त्रिभिरपि द्वेष-लोभ-मोहैः परिपूरितां गच्छन्ति। प्राणातिपात-व्यापाद-पारुष्माणां विषया (अधिष्ठानं) सत्त्वा भवन्ति। भोग-विषया एव काम-मिथ्याचार-लोभा-ऽदत्तादानानां विषयाः। नामरूपं (पञ्चस्कन्धाः) मिथ्या-दृष्टेर्विषयाः। नाम (नामकायः=नामकायादयः कामधातौ रूपधातौ च भवन्ति। सत्यप्रयत्नोद्भूताश्च इमे सत्त्वनामवाचका एव नार्थवाचकाः) मृषा-वादादीनां वाग्दुश्चरितानामधिष्ठानम्।

—अभिधर्मकोशस्य कर्मनिर्देशः—७१।

---

१. मात्रत्व—क, ख।

**मद्यपानफलसूचनम्**

वाग्भ्रामयति मस्तिष्कं चक्षुषोर्ध्वनिरेव च।
सम्भ्रान्तिविमतिर्मूढो न किञ्चित् प्रतिपद्यते ॥ २८ ॥

**स्त्रियोऽपि मद्यपायिनमुपहसन्ति**

स्त्रियोऽप्युपहसन्तीमं पुरुषं पतितं भुवि।
निश्चेष्टं काष्ठसदृशं निश्चलं पतितं भुवि ॥ २९ ॥

**मद्यपानं मरणादपि निकृष्टतरम्**

सम्भावितस्य मरणं मद्यपानं प्रकीर्त्यते।
हालाहलादभ्यधिकं कारावासाधिकं च तत् ॥ ३० ॥

**मद्यपानवर्जनं श्रेयस्करम्**

आदीनवाश्च षट्त्रिंशन्मद्यपानादवस्थिताः।
तस्मादादीनवो ज्ञेयः स हि तद् वर्जयेत् सदा ॥ ३१ ॥

**मद्यपानं विदुषोऽपि जन्तोः मलिनीकरणाय भवति**

अतिजातस्य विदुषो मलिनीकरणं महत्।
काशपुष्पसमं जन्तुं कुरुते लघुसत्त्वरम् ॥ ३२ ॥

**विषयानलदग्धः कार्याकार्यशून्यो भवति**

प्रमादौह्यति मग्नानां विषयैरपहृष्यते[१]।
मद्यपानेन भूयश्च मनोव्यामोहकारिणा ॥ ३३ ॥

विषयानलदग्धस्य कार्याकार्यमजानतः[२]।
वनोपवनलब्धस्य मद्यपानस्य किं पुनः ॥ ३४ ॥

**मद्यपानं मोहाय पापाय जायते**

रसेन शोभनं मद्यं परिणामेन दारुणम्।
परिणामफलं पापं नरकेषूपपद्यते ॥ ३५ ॥

पीतं जनयते मोहं मोहात् पापेषु रक्ष्यते।
संरक्तहृदयो बालो नरकानुपधावति ॥ ३६ ॥

**मद्यपानमधमत्वसाधनम्**

प्रकर्षं जनयत्यादौ विपाके दैन्यमुत्तमम्।
तृट्छेदं[३] कुरुते चासौ पश्चाद्दाहं सुदारुणम् ॥ ३७ ॥

---

१. हृष्यते–क, ख। २. विज्ञानतः–क, ख।

३. शान्तगमिमः क, ख।

तद् बुद्धि नाशयत्यादौ पश्चान्नाशयते सुखम् ।
तस्मात् स पुरुषो धीरो यो मद्यं नानुसेवते ॥ ३८ ॥

**मद्यनिषेविणो विहगसदृशा भवन्ति**

विहगैः सदृशं यान्ति पुरुषा मद्यसेविनः ।
तुल्यं व्यामोहजनकं मद्यं मोहमहाविषम् ॥ ३९ ॥

**विमोहिता दुर्गतिमधिगच्छन्ति**

यैर्मद्यं विषवद् दृष्टं तैर्दृष्टं पदमुत्तमम् ।
यैस्तु तद् विरसं पीतं पीतं ताम्र(क)लोहितम् ॥ ४० ॥

निष्प्रतीकारकर्माणि यः करोति विमोहितः ।
मद्यपानसमाविष्टः सोऽन्ते गच्छति दुर्गतिम्[१] ॥ ४१ ॥

**मद्यपानसेविनां नाशो भवति**

एकत्र सर्वपापानि मद्यपान( निषेवणम् ) ।
यस्मान्नाशयते (मद्यं) चित्तमूलश्च [1]संवरः ॥ ४२ ॥

**मद्यपायी नष्टधर्मो भवति**

नैकाङ्क्षिता हि चित्तस्य न धर्माणां विचारणा ।
यः पा(प)निरतो भिक्षुर्भवेन्मद्यनिषेवणात् ॥ ४३ ॥

मद्येनाक्षिप्तमनसो कुशलस्य च घातकः ।
नष्टधर्मस्य सत्त्वस्य नायं लोको न चापरः ॥ ४४ ॥

ईर्य्यापथं न जानाति न कालं नापि देशनाम् ।
सद्धर्मतो विरुद्धश्च तुच्छं किमपि भाषते ॥ ४५ ॥

स्वयं तावन्न जानाति किमिदं कथ्यते मया ।
वाक्पारुष्यं कथं चान्यं परिज्ञास्यत्यशोभनम् ॥ ४६ ॥

लाघवं याति लोकस्य धर्माच्च परिहीयते ।
निधनं पुरुषैर्दृष्टं मद्यज्वलनसेवनात् ॥ ४७ ॥

**मद्यपानं कुत्सां सम्पादयति**

नाशो भवत्यतीते हि वर्तमाने सुहृज्जने ।
अनागते कुत्सितानां मद्यं त्रैकाल्यनाशकम् ॥ ४८ ॥

---

1. अस्य व्याख्यानं पूर्वं (१/१६) प्रपञ्चितम् ।

**मद्यं धर्मप्रदूषकमेव**

नामरूपविनाशाय चित्तनाशाय देहिनाम् ।
उत्पन्नदोषजनकं मद्यं धर्मप्रदूषकम् ॥ ४९ ॥

**मद्यवर्जनं धर्माय पानञ्च मृत्युर्न भवति**

समाहिता धर्मशीलाः पुरुषा मद्यवर्जकाः ।
ते यान्ति परमं स्थानं यत्र मृत्युर्न विद्यते ॥ ५० ॥

**॥ इति मद्यजुगुप्सावर्गो दशमः ॥**

जित-धर्म-कायवर्गाः परिवर्तो ह्यनित्यता ।
अप्रमादः काम-तृष्णे स्त्री च मद्येन ते दश ॥

**॥ इति प्रथमम् उदानम्[2] ॥**

१. नेऽपिसुहृदि–क, ख ।

२. उदानम् = वर्गसमूहः ।

# अथ द्वितीयम् उदानम्

( चित्तञ्च वाक् तथा कर्म संयोजनन्तु पापकम् ।
नरक-प्रेत-तिर्यक्-क्षुत्कौसीद्यानि विदुर्दश ॥ )

## (११) चित्तवर्गः

### चित्तं राजवत् प्रवर्तते

अगाधं विषमं तीव्रं सर्वसत्त्वगतं महत् ।
[1]चित्तं सर्वस्य जगतो राजवत् सम्प्रवर्तते ॥ १ ॥

### चित्तधारिणस्तज्ज्ञाः परमां गतिं प्राप्नुवन्ति

अदृश्यं सम्प्रति भयं कर्म नारकचञ्चलाः ।
ये चित्तधारिणस्तज्ज्ञास्ते गताः परमां गतिम् ॥ २ ॥

एतन्नयति व्युत्थानमेतन्नयति दुर्गतिम् ।
तदेवाद्यन्तममलं निर्वाणमधिगच्छति ॥ ३ ॥

मनः पूर्वङ्गमा धर्मा मनः श्रेष्ठा मनोमयाः ।
मनसा सुप्रसन्नेन भाषते वा करोति वा [2]॥ ४ ॥

---

1. चित्ताश्रयः तद्विकल्पः स्थितिः सङ्क्लेश एव च ।
संभारो व्यवदानं च यावदेवतावदिन्द्रियम् ॥

एवमिन्द्रियं किमिति—विज्ञानानां ( चक्षुरादिमनोविज्ञानपर्यन्तानां षण्णां ) आश्रयः सत्त्वभेदकल्पनं ( यथा स्त्रीपुरुषेन्द्रियोः ) शरीरस्थिति कल्पनं ( यथा - जीवितेन्द्रियस्य ) संक्लेशः ( यथा पञ्चानां सुखादीनां वेदनेन्द्रियाणां) सम्भारः ( श्रद्धादीनां पञ्चानां ) परिशुद्धिः ( व्यवदानं ) चरमाणां त्रयाणाम् अनाज्ञातमाज्ञास्यामीत्यादीनाम्, यत्र हि चित्ताश्रयत्वादिधर्माणाम् उपलब्धिः त्र इन्द्रियत्वम् अभ्युपगन्तव्यम् ।

- अभिधर्मकोशः २|५ ।

2. स्यैव संस्कृतच्छाया मूलग्रन्थे विराजते—

मनो पुब्बङ्गमा धम्मा मनो सेट्ठा मनोमया ।
मनसा चे पदुट्ठेन भासति वा करोति वा ॥

—धम्मपद-१।१ ।

**चित्तवशगस्य चित्तमनुधावति**

योे न चित्तस्य वशगश्चित्तं तस्यान्तगं सदा।
स निर्णाशयति क्लेशान् तमः सूर्योदयो यथा ॥ ५ ॥

**चित्तदग्धाः नाशं यान्ति**

चित्तं शत्रुः परं शत्रुर्न शत्रुरपरः स्मृतः।
चित्तदग्धाः सदा सत्त्वाः कालदग्धा यथा जडाः[१]। ६ ॥

यश्चित्तवशमापन्नो[२] बालो मूढोऽजितेन्द्रियः।
तेन दुःखे समो नास्ति निर्वाणं तस्य दूरतः ॥ ७ ॥

**चित्तवशगः नरः नरकमधिगच्छति**

आवर्ज्यः शत्रुरपरो न चित्तानि ( निगूहते )।
एष बध्नाति पुरुषो नृपतेर्यमशासने ॥ ८ ॥

विषयेषु रता नित्यं न स धर्मः कथञ्चन।
सद्धर्मपथसम्मूढो नरकं नयते महत् ॥ ९ ॥

दुर्दमानां परं चित्तमनीनामग्निरुत्तमः।
दुर्दान्तं शीघ्रगन्तृ[३] च नरकं नयते ध्रुवम् ॥ १० ॥

ये चित्तस्य वशं याता यातास्ते नरकं पुरा।
यैस्तु तद् वार्यते शीघ्रं न ते दुःखानुगामिनः ॥ ११ ॥

**चित्तानुरूपं सुखं दुःखञ्च भवति**

यथा यथा ( नृणां ) चित्तं परिणामस्तथा तथा।
कल्पानां शुभकर्त्तुश्च पापकर्त्तुश्च पापकम् ॥ १२ ॥

चित्तायत्तं भवेत् कर्म कर्मायत्तं मनो भवेत्।
चित्तकर्म समुत्थाय संसारः परिकीर्तितः ॥ १३ ॥

दुष्टेन चेतसा कर्म यः करोति पुमानिह।
पच्यते-नरके तेन जालिन्या स विडम्बितः ॥ १४ ॥

**चित्तकर्म एवं संसारः**

चित्ताधीनं भवेत् पापं संसारः परिकीर्तितः।
चित्तप्रत्ययजं ह्येतत् हेतुप्रत्ययसम्भवम् ॥ १५ ॥

चित्तेन वञ्चिताः सत्त्वा पापस्य वशमागताः।
गच्छन्ति नरकं पापात् कारणाग्रमहाभया(त्) ॥ १६ ॥

---

१. नशा—क, ख। २. तस्यदुःख—क, ख।
३. गन्धा—ख।

### न भवेत् चित्तवशगोऽपि तु धर्मवशो भवेत्

न गच्छेत् चित्तवशतां गच्छेद् धर्मवशे सदा ।
धर्मचारी सुखी नित्यं पापचारी[1] न शर्मभाक् ।। १७ ।।

### चित्तायत्तं सर्वं फलम्

चित्तायत्ता क्रिया सर्वा चित्तायत्तं फलं स्मृतम्[2] ।
विचित्तं हि फलं चित्तं तथा फलमधिस्मृतम् ।। १८ ।।

चित्तेन चिन्तितं सर्वं लोकश्चित्तभवानुगः ।
न हि तद् विद्यते स्थानं यन्न चित्तवशानुगम् ।। १९ ।।

### शुभस्य निर्वाणसाधनत्वम्

[1]मोक्ष [2]बन्धनयोर्मूलं हेतुभूतं परं मतम् ।
शुभेन मुच्यते जन्तुरशुभेनाशु बध्यते[3] ।। २० ।।

---

1. सावद्या निवृता हीनाः क्लिष्टा धर्माः शुभाऽमलाः ।
प्रणीताः संस्कृताः शुभाः सेव्याः 'मोक्ष'स्त्वनुत्तरः ।।

एवं क्लिष्टा धर्माः सावद्या निवृता हीनाः संज्ञायन्ते । कुशलाः धर्मा अमलाः प्रणीताश्चोच्यन्ते । संस्कृताः कुशलाश्च धर्माः सेवितव्याः । मोक्षः= निर्वाणम् । तद्धि ध्रुवं, कुशलं च अतः सर्वोत्कृष्टम् ।

2. संयोजनादि वचनात् कुप्रज्ञा चेन्न दर्शनात् ।
दृष्टेस्तत्सम्प्रयुक्तत्वात् प्रज्ञोपक्लेशदेशनात् ।।

संयोजन बन्धनाऽनुशयाऽऽस्रवौ घ-योगादय एतत्पर्याया उक्ताः । तत्कथनमपि अमुमेवाऽर्थं द्रढयति । कुत्सिता प्रज्ञा=कुप्रज्ञा, सा एव अविद्या 'बन्धनं' वा इति चेत् न । कुतः ? कुप्रज्ञा अपि दर्शनम् एव । संयोजनेषु हि दृष्टिरविद्या चेति द्वयं पृथक् उद्दिष्टम् । दृष्टिः अविद्या-सम्प्रयुक्ता च उच्यते । दृष्टौ अविद्यायाः अन्तर्भावे, अविद्या सम्प्रयुक्ता दृष्टिरिति कथनं कथं सङ्गच्छते ? भगवतो देशनायामपि प्रज्ञाया मलरूपेण अविद्या उच्यते—'अविद्योपक्लिष्टा प्रज्ञा न विशुद्धयति इति ।

—संयुक्तनिकायः ।

3. भावदृष्ट्या पद्यमिदं तुलनीयम्—
प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।
बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ।।
—श्रीमद्भगवद्गीता–१८।३० ।

---

१. एकश्चित्तकरं कर्मकुरुते–क, २. विविधं यथा–ख ।

### चित्तवशगाः कदापि निर्वाणं नाधिगच्छन्ति

जालिन्या मोहिताः सत्त्वाश्चित्तस्य वशमागताः ।
निर्वाणं नापि गच्छन्ति जात्यन्धा इव सत्पथम् ॥ २१ ॥

[1]पञ्चेन्द्रियाणि जितवान् पापं भुङ्क्ते न कर्हिचित् ।
एकचित्तं तथा कर्म कुरुते विविधे भवे ॥ २२ ॥

पञ्चरङ्गोज्ज्वलं चित्तं यथा दृश्यं प्रशस्यते ।
पञ्चेन्द्रियविचित्रं हि तथा कर्म भवे भवेत् ॥ २३ ॥

### चित्तकर्ताऽनेकधा भवति

चित्तकर्ता हि पुरुषो दृश्यैर्भवति नैकधा ।
चित्तं चित्तकरं शून्यं सर्वथा नैव दृश्यते ॥ २४ ॥

### चित्तं शोभनमशोभनं च कर्म करोति

शोभनाऽशोभनं चित्रं यथा भित्तिः कृतिस्तथा ।
शोभनाऽशोभनं कर्म तथा चित्तं करोति हि ॥ २५ ॥

### चित्तानुगं कर्म

दिवारात्रौ यथा चित्तं स्थितं भवति चित्रगम् ।
दिवारात्रौ तथा कर्म भवे समनुवर्तते ॥ २६ ॥

अकृत्वा सुकृतं कर्म[1] चित्तवृत्त्यनुगा नराः ।
पतन्ति विवशाः पापे चित्तारिपरिवञ्चिताः ॥ २७ ॥

कर्मचित्तकरो ह्येष यत्र यत्र नियुज्यते ।
चरचित्तेन[2] महता तच्चित्तं च करोत्ययम् ॥ २८ ॥

परिणामविशेषेण यत्र यत्र नियोक्ष्यते ।
प्रेष्यन्ते तत्र चित्तेन त्रिधा तु गतिचारिणः ॥ २९ ॥

### चित्तस्य दमनं सुखावहम्

चित्ताधिनानि वर्तन्ते सर्वकर्माणि देहिनाम् ।
तस्माच्चित्तं सदा दान्तं नयते पदमच्युतम् ॥ ३० ॥

---

1. व्याख्यानमस्य पूर्वं ( ६।६५ ) प्रपञ्चितम् ।

---

१. धर्मम्–क, ख । २. चित्तं चरेण–क, ख ।

दुर्विषह्यस्य लघुना यत्र यत्र निपातिनः ।
चित्तस्य दमनं साधु चित्तं दान्तं सुखावहम् [1]॥ ३१ ॥

येन चित्तं सदा दान्तं तेन दोषाः सदा जिताः ।
जितदोषस्य धीरस्य दुःखं नैव प्रपद्यते [१] ॥ ३२ ॥

**चित्तस्य लघुचेष्टितमेव दुःखम्**

यच्च स्वकं भवेद् दुःखं यच्च दुःखं परत्र च ।
तत् सर्वमविषह्यस्य चित्तस्य लघुचेष्टितम् ॥ ३३ ॥

**चित्तमेव सर्वेषां प्रभुः**

ससुरासुरनागानां पिशाचोरगरक्षसाम् ।
प्रभुरेकः परं चित्तं राजा(हि)त्रिभवस्य तत् ॥ ३४ ॥

**चित्तभ्रान्तदुःखमश्नुते**

चित्तं नयति देवेषु चित्तञ्च नरभूमिषु ।
चित्तं नयत्यपाये(षु) चित्तं भ्रामयति प्रजाः ॥ ३५ ॥

चित्ताद् भ्रान्तस्य नष्टस्य विषयैर्मोहितस्य च ।
तृष्णया दह्यमानस्य स्थितं दुःखमनुत्तमम् ॥ ३६ ॥

**चित्तस्य दमनात् सुखानुभूतिर्भवति**

एकचारि सदामूढं दुर्विषह्यं महाबलम् ।
सम्प्रदारि सदादृश्यं चपलं शीघ्रगामिनम् [२] ॥ ३७ ॥

एवं विधं हि ये चित्तं दमयन्ति मनीषिणः ।
ते मारबन्धनातीताः पारं प्राप्ताः सुखोदयम् ॥ ३८ ॥

**चपलं चित्तं नरकायोपकल्प्यते**

सङ्कल्पकुटिलं तीव्रमगाधं चपलं हि तत् ।
चित्तं तमःश्रितं शुभ्रं नरकायोपकल्प्यते ॥ ३९ ॥

---

1. अस्यैव संस्कृतच्छाया मूलग्रन्थे विराजते—

दुन्निग्गहस्स लहुनो यत्थकाम निपातिनो ।
चित्तस्स दमथो साधु चित्तं दन्तं सुखावहम् ॥
—धम्मपद-३।३ ।

---

१. प्रधावते-क, ख । २. शीघ्रगामि च-क, ख ।

**दोषनिर्मुक्तोऽच्युतं पदं प्राप्नोति**

तदेवं दोषनिर्मुक्तं नेन्द्रियार्थवशानुगम् ।
अलिप्तं पापकैर्धर्मैर्नयते पदमच्युतम् ॥ ४० ॥

**शुद्धं चित्तं शुद्धे कर्मणि प्रवर्तते**

हेतुप्रत्ययजं चित्तं योगवाहि परं च तत् ।
परिणामवशाच्छीघ्रं तथा तत् सम्प्रवर्तते ॥ ४१ ॥

**चित्तानधीनत्वे कर्म चञ्चलं भवति**

एकं करोति कर्माणि विविधानि चलं च तत् ।
एकानेकं चरं सूक्ष्मं क्षणादूर्ध्वं न तिष्ठति ॥ ४२ ॥

**संसारस्य मायोपमत्वप्रतिपादनम्**

दुर्विज्ञेयः सदा तस्य निःशरीरस्य सर्वदा ।
कोऽसौ नयति लोकान्तमथ केन च गच्छति ॥ ४३ ॥

गतश्च तिष्ठति कुत्र शरीरकर्मकारकम् ।
दृश्यानि तस्य कर्माणि सञ्चयो न च दृश्यते ॥ ४४ ॥

दमनं दुष्करं तस्य यस्य भूतिर्न विद्यते ।
सर्वसत्वगतं घोरं लघुकारि च चाक्षुषम् ॥ ४५ ॥

पापात् पापतरं दृष्टं मायोपममिदं भवेत् ।
पुण्यात् पुण्यतरं दृष्टं सम्यग्मार्गसमाश्रितम् ॥ ४६ ॥

**मायोपमत्वसमर्थनम्**

न गतिर्ज्ञायते तस्य गमनं नैव दृश्यते ।
नीयते च क्षतं सर्वं जात्युत्तरसमानि च ॥ ४७ ॥

शस्त्रेण छिद्यते नेदं ज्वलनेन च दह्यते [1]।
छिद्यते दह्यते चैव जनः सर्वमचक्षुषा ॥ ४८ ॥

दृढं यत् कर्मरज्ज्वादि नरं बध्नाति दुःखितम् ।
जात्यन्तरसहस्राणि नयते न च दृश्यते ॥ ४९ ॥

---

1. श्रीमद्भगवद्गीतायाः पङ्क्तिरियं (२।२३) तुलनीयम्—
'नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।"

## दान्तमेव चित्तं सुखावहम्

मुहूर्तेन शुभं भूतं[१] मुहूर्तेनाशुभं च तत् ।
शुभाशुभाभ्यां रचितं (चित्तं) दान्तं सुखावहम् ।। ५० ।।

[1]षड्भिर्द्वारैः प्रसूतेषु विषयेष्वतिलोलुपम् ।
चित्तं नयति लोकान्तं व्यसनं न च बुध्यते ।। ५१ ।।

## विप्रसन्नचित्तस्य श्रेयस्करत्वेऽनुत्तमं सुखं भवति

विप्रसन्नं यथा तोयं विप्रसन्नं यथा नभः ।
विप्रसन्नं तथा चित्तं नीयते सुखमुत्तमम् ।। ५२ ।।

जनाः सातिशया (दृष्टा) वितर्कविषयोद्भवात् ।
पौरवाश्चित्तराज्ञस्ते भवन्ति सहचारिणः ।। ५३ ।।

## चञ्चलं मनः संसारे गतिं कारयति

धावति यत्र च मनस्तत्र धावन्त्यज्ञानिनः ।
परस्परबलान्नी(ता) भ्रमन्ति त्रिभवार्ण(व)म् ।। ५४ ।।

## विशेषचित्तेनोत्तमा गतिर्भवति

चित्तवैशद्य भावानां विशेषः कर्मणास्तथा ।
न कर्मगुणहीनस्य विशेष उपलभ्यते ।। ५५ ।।

## सुसमाहितचित्तस्य प्रशंसा

सुसमाहितचित्तः स नित्यं धर्मानुदर्शकः ।
न दोषवशमायाति यथा दिव्यस्तमोनुदः ।। ५६ ।।

## गृहस्थस्य सम्यग्दृष्टित्वे निर्वाणप्राप्तिर्भवति

सम्यग्दृष्टेश्चाधिमात्रा यस्य चेतसि वर्तते ।
गृहस्थोऽपि स मे ज्ञेयो मुक्तः संसारबन्धनात् ।। ५७ ।।

---

1. चक्षुः-श्रोत्र-घ्राण-जिह्वा-काय-मनोविज्ञानानाम् अनन्तरमतीतं च यद् विज्ञानं तदेव मन इत्युच्यते षड्भिर्द्वारैः । चक्षुर्विज्ञानादीनां पञ्चानां सन्ति चक्षुरादयः पञ्चाश्रयाः । षष्ठस्य मनोविज्ञानस्य तु न कोऽप्याश्रयः प्रसिद्धः तदर्थं मनसोः ग्रहणम् इति ।

—अभिधर्मकोशः–१। १७ ।

---

१. भवति–क, ख ।

**विज्ञा देवलोकं गच्छन्ति**

कल्याणनिर्मलं यच्च ततो दोषेण बाध्यते।
विज्ञो[१] (न) मलमाप्नोति देवलोके स जायते ।। ५८ ।।

**विनीतचित्ताः सुखगामिनो भवन्ति**

विषयद्वारचपलं नदीकुटिलगामिनम्।
यैर्विनीतमिदं चित्तं ते सुराः शुभभागिनः ।। ५९ ।।

**अधर्ममार्गः कल्याणाय न भवति**

अधर्मपथमाश्रित्य जनाः पापवशानुगाः।
चिरं भ्रमन्ति संसारे चित्तेन परिखेदिताः ।। ६० ।।

**चित्तं क्षणे क्षणे परिवर्तते**

क्षणे क्षणे चित्तमिदं नैकशः परिवर्तते।
लघुस्वभावचपलं मायागन्धर्वसन्निभम् ।। ६१ ।।

**चञ्चलचित्तो बद्धो भवति**

तस्य बन्धनमेवेष्टं ज्ञानविज्ञानसम्मतम्।
दूरवृत्तिर्महावेगः परिधावत्यनेकधा ।। ६२ ।।

**धृत्या चित्तधारिणः सुखमश्नुते**

ह्रियमाणं सदा चित्तमिन्द्रियार्थे दुरासदम्।
सन्धारयति यो धृत्या स धीरः पारगामिकः ।। ६३ ।।

धृतिमज्ञानमोहं च विषयोत्तानमानसम्।
सन्धारयति यो धीमान् स लोके पण्डितो नरः ।। ६४ ।।

**शुभचित्तं कामावरोधकं भवति**

यो यथा कुरुते चित्तं तथा कामान् स पश्यति।
शुभेन कामशमनं नाशुभेन प्रवर्धनम्[२] ।। ६५ ।।

**अप्रशान्तमतिर्दुःखमाप्नोति**

शान्तचित्तमनाः कामानस्यतीह विषास्त्रवत्।
अप्रशान्तमतिः सर्पमणिवत् तान् स पश्यति ।। ६६ ।।

---

१. सभिज्ञा—क, ख।        २. सशुभेनप्रवर्द्धते—क, ख।

**चित्तवशगो न शुभां गतिमाप्नोति**

इन्द्रियाणीन्द्रियार्थाश्च चित्ताधीना भवन्त्यमी ।
चित्त संश्लेषयोगेन परिणामः प्रवर्तते ॥ ६७ ॥

**धीर-प्रशंसा**

तस्यैव व्यवधानेन धीरश्च प्रतिबुध्यते ।
रूपसामान्यतो दृष्टं परिणामः कथं पृथक् ॥ ६८ ॥

**चित्तस्वरूप-निरूपणम्**

यथा रूपं तथा सर्वं विषयाश्चित्तहेतवः ।
चित्तं दान्तं सदा शान्तं दोषमिश्रविगर्हितम् ॥ ६९ ॥

एकमेकं यथा शालि गन्धरूपे पृथग्विधे ।
संश्लेषो याति नानात्वं तथाचित्तं प्रवर्तते ॥ ७० ॥

क्रियां हि तत्र कुरुते यत्र(चित्तं) प्रधावति[१] ।
चित्तसंवाहनं तद्वाक्यं लोकोऽयं सम्प्रवर्तते ॥ ७१ ॥

विषयाद् भ्रान्तमनसश(चा)तिवेगो महाबलः ।
चित्तं(शान्त)करं दान्तं शिवं भवति देहिनाम् ॥ ७२ ॥

**दान्तेन चेतसा तत्त्वदर्शनं भवति**

तेनादान्तेन शीघ्रेण सर्वपापविहारिणा ।
भ्राम्यते त्रिभवः सर्वः न च तत्त्वं स पश्यति ॥ ७३ ॥

**समीरणरणोद्भ्रान्तो लोकः संसारे भ्रमति**

समीरणरणोद्भ्रान्तो यथा भ्रमति सागरः ।
चित्तेश्वरसमायुक्तो लोकोऽयं भ्राम्यते सदा ॥ ७४ ॥

**चित्तं शुभं सुखमेधीत**

शुभोपनीतं चित्तं ( हि ) शुभेष्वेवापनीयते ।
तथा शुभानुचरितमश्नुते तेषु धावति ॥ ७५ ॥

**योगवाहिचित्तं प्रत्ययं लभते**

योगवाहि नृणां चित्तं वायवम्बुसममेव च ।
[1]प्रत्ययश्च यथा लभ्यस्तथा तत् परिधावति ॥ ७६ ॥

---

1. अस्य व्याख्यानं पूर्वं (२।१६) प्रपञ्चितम् ।

१. यत्र प्रधावति चित्तस्तत्र प्रकुरुते क्रियाम्—क, ख ।

**चित्तं प्रधावति परिवर्तते च**

शीघ्रं प्रधावते चित्तं शीघ्रञ्च परिवर्तते[१]।
शीघ्रं नयति देवेश ( भुवने ) दायभूमिषु ॥ ७७ ॥

**चित्तस्य कर्त्तृत्वम्**

कर्त्तृत्वं सर्वधर्माणां भर्त्तृत्वं सर्वकर्मणाम्।
नेतृत्वं सर्वकर्माणां चित्तत्वमिति लक्ष्यते[२]॥ ७८ ॥

**चित्तं न विश्वसेत्**

न विश्वसेद्धि चित्तस्य नित्यं छिद्रप्रहारिणः।
दुर्लभस्यापि वश्यस्य चपलस्य[३] विशेषतः ॥ ७९ ॥

**चित्तगतिवर्णनम्**

मुहूर्तेन शुभं याति मुहूर्तेन तथाऽशुभम्।
भवत्यव्याकृतं शीघ्रं गतिरस्य न विद्यते ॥ ८० ॥

नायतिर्ज्ञायते तस्य गमनं नैव विद्यते।
अभूतः सम्भवस्तस्य भूत्वा च प्रतिगच्छति ॥ ८१ ॥

**रूपरहितं चित्तम्**

नाकारो विद्यते तस्य सञ्चयोऽपि न विद्यते।
ग्रहणं तस्य नैवास्ति निःशरीरस्य सर्वतः ॥ ८२ ॥

**प्रत्ययसाधनवर्णनम्**

हेतुप्रत्ययसामग्र्या प्राप्तः सञ्जायते पुनः।
मणि-सोमप्रत्ययो (हि) प्रत्ययो ज्ञायतेऽनलः ॥ ८३ ॥

**चित्तमिन्द्रियरूपादीन् प्रति धावति**

तथैवेन्द्रियरूपादीन् प्रतिविज्ञानसम्भवः।
नैकस्य ज्ञायते चित्तं समवाय्यनुलक्ष्यते ॥ ८४ ॥

**चित्तं दुर्निवार्यम्**

तदेवं विषयं मत्वा दुर्निवार्यं च सर्वतः।
सद्धर्ममतिरास्थेया न कामेषु कथञ्चन ॥ ८५ ॥

---

१. प्रधावते—ख,

२. कर्त्तारं सर्वधर्माणां भर्त्तारं सर्वकर्मणाम्
नेतारं सर्वकर्माणां चित्तमित्यभिधीयते—क, ख।

३. चपलस्य—क,

### चित्तमति चपलम्

चण्डातिचपलं तीव्रमविषह्यं महाबलम् ।
चित्तं करोति कर्माणि यन्न पश्यन्ति बालिशाः [1] ॥८६॥

### दुःखप्रवर्तकं चित्तम्

सर्वस्य[१] कर्मणश्चित्तं[२] हेतुभूतं भवे भवे ।
भवेत् प्रवर्तकं दुःखं येन धावति बालिशः ॥ ८७ ॥

### चित्तदोषो महादोष एव

वातादयो न दोषाः स्युर्दोषा रागादयो मताः ।
वातादिभिरपायेषु मानवो नोपपद्यते ॥ ८८ ॥

चित्तदोषो महादोषो नित्यं( पाप )विदर्शकः ।
तस्मात्तेषां समाश्रेयो न वातादिगमादिह ॥ ८९ ॥

### रागानुगं चित्तं दुष्टं भवति

वातादयः प्रणश्यन्ति देहनाशाच्छरीरिणाम् ।
(रागादयो) न तस्य स्युर्जन्मान्तरशतैरपि ॥ ९० ॥

तस्माद् रागस्य वशगं न विधेयं कदाचन ।
आभ्यन्तिकं परं श्रेयः प्राप्यते रागसङ्क्रमात् ॥ ९१ ॥

### मन एव चिकित्सको भवति

यश्चित्तवैद्यः स भिषग् न शरीरभिषग् भृशम् ।
मनश्चिकित्सको ज्ञेयो न तथा लौकिको मतः ॥ ९२ ॥

### स्वचित्तकर्मणा दग्धो नरके पतति

कर्मचिन्त्यं समं चिन्त्यं न चित्तेन प्रपद्यते ।
स्वचित्तकर्मणा दग्धो नरकानुपधावति ॥ ९३ ॥

### ध्यानादेव चित्तं शुद्धं भवति

यच्छ्रेयः समचित्तस्य न तत् (क्वाप्युप)पद्यते ।
संरक्ष्यं हृदयं मूढः प्रयातमनुधावति ॥ ९४ ॥

---

1. भावदृष्टया पद्यमिदं तुलनीयम्—

अनवट्ठितचित्तस्स सद्धम्मं अविजानतो ।
परिप्लवपसादस्स पञ्ञा न परिपूरति ॥
धम्मपद-३।६ ।

---

१. भुवं—क. २. सेवकस्य—ख ।

**चित्तवशगो दुःखमाप्नोति**

ध्यानादध्येयेन कूटेन यः पुमान् वनमाश्रितः ।
तं मुक्त्वा चित्तकः सोऽयं संप्रहृष्यति[१] बालिशः ॥ ९५ ॥

ये बालाश्चित्तपाशेन चित्तकर्मविचारिणः ।
नीयन्ते ह्यवशा घोरं नरकं कर्ममोहिता[२] ॥ ९६ ॥

**चित्तवैचित्र्यनिरूपणम्**

सुचित्तमपि यच्चित्तं न तच्चित्तं सतां मतम् ।
कर्मचित्तं महाचित्तं त्रिधातुगतचित्रितम् ॥ ९७ ॥

सत्त्वा चित्रैरुपायैर्हि भ्रमन्ति गतिपञ्चके ।
तत् सर्वं कर्मसाचिव्यं चित्रकर्तृ विचित्रितम् ॥ ९८ ॥

**चित्तवशगो बद्धो भवति**

चित्तचित्रकरेणेदं कर्मजातं विचित्रितम् ।
येन सर्वमिदं बद्धं जगद् भ्रमति मोहितम् ॥ ९९ ॥

वर्षातपरजोधूमैश्चित्तं नश्यति भूभुजैः ।
कल्पकोटिसहस्रेण चित्रं चित्तं विनश्यति[३] ॥ १०० ॥

नाशं प्रयाति वसुधा सागरश्चापि शुष्यति ।
चित्तेनापि कृतं चित्रं तस्यानुभवने स्थिते[४] ॥ १०१ ॥

**प्रमत्ते चित्ते नानागतिर्भवति**

नानागतिसमावृत्ता नानाकर्मसमानुगाः ।
नानाचित्तवशाः सत्त्वा भ्रमन्ति गतिपञ्चके ॥ १०२ ॥

बालिशा(नां)नृणां चित्तं विषयं(प्रति)धावति ।
न चिनोत्यशुभं कर्म येन धावति दुर्गतिम् ॥ १०३ ॥

---

१. संप्रसह्यति-क, ख ।

२. नयन्तेऽवशानरकं चित्तकर्मविमो-क, ख ।

३. वर्षा न परजाधूमैश्चित्रं नश्यति च भुजैः
कल्पकोटिसहस्रेण विचित्र चित्रं नश्यन्ति-क, ख ।

४. नाशं प्रयान्ति बहुधा सागराश्चापि शुष्यति
चित्ते नापतत्कृतं चित्रं तस्मानुभुवने स्थिते-क, ख ।

**चञ्चलं चित्तं सदा विषमं भवति**

तस्माच्चित्तं सदा रक्ष्यं चञ्चलं विषमं खरम् ।
नित्यं विषयसंसक्तं तृष्णाविषसमावृत्तम् ॥ १०४ ॥

**विषयानुरक्तं चित्तं व्यसने पातयति**

धावते विषयं चैतद् व्यसनं नावबुध्यते ।
पश्चात्तु व्यसने प्राप्ते फलं विन्दति[१] कर्मणः ॥ १०५ ॥

**समाहितचित्तः सुखमश्नुते**

अपायभीरुता तस्य तस्य चित्तं समाहितम् ।
समाहितेन चित्तेन सुखात् सुखमवाप्नुते ॥ १०६ ॥

**निर्जितचित्तः सुखमाप्नोति**

विषमं चपलं तीव्रमविषह्यं महाबलम् ।
यैश्चित्तं निर्जितं धीरैस्ते लोके सुखिनो मताः ॥ १०७ ॥

॥ इति चित्तवर्ग एकादशः ॥

---

१. विन्दते—क, ख ।

## (१२) वाग्वर्गः

### निर्वाणाभिलाषुकः पारुष्यं वर्जयेत्

पारुष्यं वर्जयेत् धीमान् सम्यग्वाग् भीरतो भवेत् ।
माधुर्याभिरतो जन्तुर्निर्वाणस्यान्तिके स्थितः ॥ १ ॥

वाचं पश्यन् सदाभाषेन्मलिनां च विवर्जयेत् ।
वाङ्मनेनाऽभिभूता ये ते यान्ति नरकं नराः ॥ २ ॥

एकधर्मव्यतीतस्य मृषावादस्य देहिनः ।
प्रतीर्णप्रतिलोकस्य नाकार्यं पापमस्तिह ॥ ३ ॥

### मृषावाग् न प्रयोक्तव्या

मृषावाचं न भाषेत सर्वां प्रत्ययकारिकाम् ।
यथा बध्यति संसारे सुगतिं नैव पश्यति ॥ ४ ॥

साधुप्रत्ययतेनीहा सर्वविद्वेषकारिका ।
कान्तारः सर्वधर्माणां मृषावाच प्रवर्तते ॥ ५ ॥

जातमात्रस्य मर्त्यस्य कठारी जायते मुखे ।
पश्चात् छिनत्त्यात्मानं वाचा दुर्भाषितं वदन् ॥ ६ ॥

सर्वा कार्यपताका सा सर्वपापप्रसूतिका ।
तमसां योनिरेका सा यां वाचं भाषते मृषा ॥ ७ ॥

सत्येन हीनाः पुरुषाः सर्वसाधुविवर्जिताः ।
तृणवद् यान्ति लोकेऽस्मिन् प्रत्ययपायेषु दुःखिताः ॥ ८ ॥

न वदेदनृतं धीरः कष्टा ह्यनृतवादिता[१] ।
पूतिगन्ध्यसुखी चापि पश्चात्तापेन तप्यते ॥ ९ ॥

### सत्यमहिमा[1]

सत्यं च न विवर्जेत तस्य धर्मो न विद्यते ।
विनिर्वर्तितधर्मस्य स्थितं दुःखमनेकजम् ॥ १० ॥

---

1. सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम् ।
   प्रियं च नानृतं ब्रूयाद् एष धर्मः सनातनः ॥
   —मनु० ४।१३८ ।

---

१. वादिनः—क, ख ।

## सत्यं सर्वधर्माणां प्रदीपभूतम्

प्रदीपः सर्वधर्माणां साधूनां रत्नवत् प्रियम् ।
स्वर्गस्य च परं वर्त्म सत्यमुक्तं गतज्वरैः ॥ ११ ॥

सत्यं न हि दिवं याति मोक्षस्याऽसत्यवादिनः ।
सत्यहीना हि पुरुषाः[१] पशुतुल्याः प्रकीर्तिताः ॥ १२ ॥

जघन्यानां जघान्यास्ते येषां न विद्यते ।
सत्यं धर्मस्य सोपानं ज्योतिषामाकरो महान् ॥ १३ ॥

पन्थाश्च मोक्षधर्माणां धनानां धनमुत्तमम् ।
पापकैश्च (परि)त्राणां सत्यमुक्तं मनीषिभिः ॥ १४ ॥

## सत्यभूषितं वाग् भूषणस्यापि भूषणम्[1]

ज्योतिषां परमं ज्योतिश्चक्षुश्चक्षुष्मतामपि ।
द्रविणेन विना सत्यं भूषणस्यापि भूषणम् ॥ १५ ॥

निधानमतुलं सत्यमहार्यं ( सर्वसाधकम् ) ।
गच्छन्ति (सत्या यिणः) पुरुषाः परमां गतिम् ॥ १६ ॥

न तथा भासते राजा नानालङ्कारभूषितः ।
सत्येन भूषितो धीमान् शोभते देववद् यथा ॥ १७ ॥

न माता न पिता चाथ मित्राणि न च बान्धवाः ।
त्राणमेवं यथा श्रुत्वा तस्मात् सत्यपरो भवेत् ॥ १८ ॥

## अनृतनिन्दा

वह्नीनां परमो वह्निर्विषाणां परमं विषम् ।
दुर्गतीनां च सोपानमनृतं परिकीर्तितम् ॥ १९ ॥

विषाग्नितुल्यसंस्पर्शं वर्तयेदनृतं पुमान् ।
अनृतेन हि यो देव दग्धइत्यभिधीयते ॥ २० ॥

---

1. केयूरा न विभूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वलाः
न स्नानं न विलेपनं न कुसुमं नालङ्कृता मूर्धजाः ।
वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते
क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम् ॥
—भर्तृहरिशतकम् ।

---

१. युक्तः—क, ख ।

**सत्यासत्ययोः परस्परविरोधित्वम्**

तस्मात् सर्वाभिसारेण ( न वदेद ) नृतं पुमान् ।
सर्वं भयादिकं कष्टमनृतं कीर्तितं बुधैः ॥ २१ ॥

वह्नीनां परमो वह्निर्निर्दहेदपि सागरम् ।
किं पुनर्यो मृषावादी काष्ठलोष्ठसमाकृतिः ॥ २२ ॥

सत्यं त्यक्त्वा मृषावादं यो नरः प्रतिपद्यते ।
रत्नं त्यक्त्वा स पापात्मा पाषाणं प्रतिपद्यते ॥ २३ ॥

यस्यात्मा न भवेत् द्विष्टो यस्य वा नरकं प्रियम् ।
मृषावादं स्वदेहाग्निम् अबुद्धिः स निषेवते[1] ॥ २४ ॥

सदेदं सत्यवचनं भूषणं[2] सर्वदेहिनाम् ।
सत्यं त्यक्त्वा मृषावादे कस्माद् यान्ति कुबुद्धयः[3] ॥ २५ ॥

सत्यं गुणानामग्र्यं वै दोषाणामनृतं स्मृतम् ।
गुणांस्त्यक्त्वा कथं मूढो दोषेषु परिधावति ॥ २६ ॥

बीजं सर्वस्य दुःखस्य मृषावादः प्रकीर्तितः ।
तथा सत्यं सुखस्यैव तस्मान्नानृतको भवेत् ॥ २७ ॥

सत्यवादी हि पुरुषः प्रियः सर्वस्य देहिनः ।
चक्षुर्दोषैर्मृषावादी तस्मान्नानृतको भवेत् ॥ २८ ॥

देवकल्पाः सदा कृष्टाः पुरुषाः सत्यवादिनः ।
नारकेयास्तथा मूढा जना ह्यनृतचेतसः ॥ २९ ॥

कल्याणानां परं सत्यं दोषाणामनृतं तथा ।
दोषवर्जी गुणद्वेषी पुरुषः 'पुरुषोत्तमः' ॥ ३० ॥

सुखोदयं सुखोदर्कं सुखेन परिपच्यते ।
सुखेन लभते सत्यं(सत्यं) निर्वाणगामिकम् ॥ ३१ ॥

दुःखोदयं कटुफलं दुःखेन सह पच्यते ।
अनृतं सर्वदुःखान्तं[4] कः पुमान् न विवर्जयेत् ॥ ३२ ॥

---

१. स निषेवत्य बुद्धिमान्—क, ख ।        २. भूषितं—क, ख ।
३. वर्जन्त्यबुद्धयः—क, ख ।        ४. दुःखाति—क, ख ।

नान्यदेशागतं सत्यं नान्यस्मात् प्रार्थ्यते हि तत् ।
सर्वतीर्थोत्तमं सत्यं न तीर्थसलिलावृतम् ॥ ३३ ॥

दीपानां च परो दीपः सत्यं बुद्धेन देशितम् ।
औषधानां परं तच्च सदा दुःखनिषूदनम् ॥ ३४ ॥

अमृतञ्च विषञ्चैव जिह्वापाशे स्थितं नृणाम् ।
अमृतं सत्यमित्युक्तं विषं तूक्तं मृषावचः ॥ ३५ ॥

यस्यानृतमभिप्रेतं तस्य सत्यं ध्रुवं स्थितम् ।
विषन्तु यस्याभिमतं तस्येष्टं स्यान्मृषावचः ॥ ३६ ॥

विषेण निश्चितं नाशो मृषावादेन निश्चितः ।
मृतवत् स पुमानस्ति यो मिथ्यात्वभिभाषते ॥ ३७ ॥

नात्मनो हि हितं पथ्यं (पर)स्य न कथञ्चन ।
पश्चात्तु परदुःखाय तत् कथं सेव्यते नृभिः ॥ ३८ ॥

देशे देशे मया दृष्टं जन्ममृत्युसहस्रकम् ।
परः सहस्रं जनयेन्नाशयेदनृतं वचः[१] ॥ ३९ ॥

अभिजातस्य निष्कर्षो द्विजातीनां च भूषणम् ।
दर्शनं मोक्षमार्गस्य सत्यमित्यभिधीयते ॥ ४० ॥

तृष्णानदी ह्यमाराणां सतां सत्येन[२] कर्मणाम् ।
पूर्ववत् सत्यमित्युक्तं परं सुगतदेशिकम् ॥ ४१ ॥

अनादिनिधने लोके तृष्णापारङ्गता ( नराः ) ।
नास्त्यत्राणं यथा सत्यमिति धर्मविदो विदुः ॥ ४२ ॥

## अभिध्यापाशो न सेवनीयः

सत्यवध्या सदा क्लेशा वज्रवध्या यथा नगाः ।
हता(स्ते) पुरुषा (ज्ञेया ये ऽ)भिध्या परिवञ्चिताः ॥ ४३ ॥

परचित्तसमेनेदं रूपाद्यैः परिवञ्च्यते ।
[1]अभिध्यामानसं पाशं सेवितं न विचक्षणैः ॥ ४४ ॥

1. अभिध्या = लोभः, चौर्यं च समाधिं गच्छन्ति लोभेन लोभमूला इमे । एवम् अभिध्या-व्यापादः मिथ्यादृष्टिश्चेति त्रिमूलजा भवन्ति । स्वार्थसाधनं क्रीडा आत्मसुहृदत्राणं चेति त्रयं मूलम् ।

१. जनयति परः सहस्राणि नाशयत्यनृतं वचः–क, ख । २. सत्वानात्येन–क, ख ।

दहृयतेऽविकृत आत्मा तैलदीप्तिरिवानलः ।
अभिध्यादग्धमनसः कारणं नोपलभ्यते ॥ ४५ ॥

**व्यापादः सत्त्वान् मोहयत्येव**

यस्मात् तत् सर्वदा वर्ज्यं कटुकाशाविषोदयम् ।
व्यापादमोहिताः सत्त्वा नित्यं तद्गतमानसाः ॥ ४६ ॥

न शान्तिमधिगच्छन्ति सर्पा इव बिलेशयाः ।
अथ[1] क्रूरस्वभावा ये व्यापादपरमा नराः ॥ ४७ ॥

न तेषां विद्यते सौख्यमादित्येन यथा तमः ।
न धर्मे नार्थनिकरो[2] न धर्मा न च बान्धवाः ॥ ४८ ॥

रक्षन्ति पुरुषान् सर्वान् व्यापादाहतचेतसः ।
तमसामाकरो ह्येष व्यापाद इह कथ्यते ॥ ४९ ॥

व्यापादयति जनकं व्यापादः परिकीर्तितः ।
अव्यापादः परं श्रेयो न व्यापादः कथञ्चन ॥ ५० ॥

अव्यापादपरा ये तु ते यान्ति पदमच्युतम् ।
नियतातथवादी योऽधर्मवादी न धार्मिकः ॥ ५१ ॥

स चौरः सर्वलोकस्य न चौरः प्राकृतः स्मृतः ।
धर्मवादी नरो यस्तु चरते धर्ममेव यः ॥ ५२ ॥

स याति शाश्वतं स्थानं यत्र गत्वा न शोच्यते ।
मिथ्यावचोहत (पुमान्)लौकिकः सम्प्रकीर्त्यते ॥ ५३ ॥

लोकोत्तरैः कल्पशतैः कदाचित् कथ्यते न वा ।
तस्मात् लोकोत्तरं वाक्यं लौकिकं न कथञ्चन ॥ ५४ ॥

---

मिथ्यादृष्टौ कर्ममार्गस्य त्रयो भेदाः—अभिध्या व्यापादः मिथ्यादृष्टेश्चेति । उक्तञ्च आचार्यवसुबन्धुना—

ततोऽन्यत् क्लिष्टमन्ये तु लयनागीतनाट्यवत् ।
कुशास्त्रवत् अभिध्या या परस्वे विषमा स्पृहा ॥
—अभिधर्मकोशः—४।७७ ।

---

१. पापं—ख । २. क्षुद्राः—क, ख ।

संसारबन्धनं दृष्टं लौकिकं विषवद् वचः।
तृष्णारतः सदा पुण्यान्मुच्यतेति सुनिश्चितम् ॥ ५५ ॥

लोकोत्तरो (नरो) धन्यो विद्वद्भिः समुदाहृतः।
हितं तत्त्वं च यो मूढो न गृह्णाति गुरोर्वचः ॥ ५६ ॥

**सत्यवादी सदा देवताभिः पुरस्कृतः**

स पश्चाद् व्यसने प्राप्ते तप्यते स्वेन चेतसा।
सत्यवादी सदा दान्तो देवताभिः पुरस्कृतः ॥ ५७ ॥

प्रियो भवति लोकस्य पश्चाद् देवेषु मोदति।
प्रियो भवति लोकस्य पश्चाद् स्वान्तेन(वर्धते)।
दर्शनीयं मुखं चास्य देवलोकेषु जायते ॥ ५८ ॥

अभूतवादी पुरुषः सर्वसत्त्वोपपातकः।
तमोनिचयसङ्काशो जीवन्नपि मृतः समः ॥ ५९ ॥

कथं न जिह्वा पतिता वाक्यसंस्तुतिकर्त्तृका।
मृषा वदति यो वाचं सद्भूतगुणनाशिकाम् ॥ ६० ॥

मुखे सन्निहितो व्यालो मुखे सन्निहितोऽफलः।
(मुखे)सञ्ज्वलितो[१] वह्निर्यो वाचा भाषते मृषा ॥ ६१ ॥

जिह्वा सङ्ग्रथितैः पाशैः नरकस्याग्रहेतुकैः।
छेत्ता च धर्महेतूनां मृषावादः प्रवर्तते ॥ ६२ ॥

न तस्य माता न पिता बुद्धो नापि सम्वरः[1]।
यः पापबुद्धिः पतितो मृषावादं प्रभाषते ॥ ६३ ॥

अकस्माल्लघुतां याति षड्भिश्च परिवर्तते।
मुच्यते देवताभिश्च यो वाचं भाषते मृषा ॥ ६४ ॥

असङ्गृहीतवाक्यस्याऽविचार्य क्रोधनस्य च।
चपलस्याऽल्पभाग्यस्य स्थितं दुःखमनन्तकम् ॥ ६५ ॥

परस्य दुःखं दृष्ट्वापि सत्त्वः सत्त्वोपपातकः।
परव्यसनवत् तज्ज्ञः पुमान् नरकगामिकः ॥ ६६ ॥

---

1. अस्य व्याख्यानं पूर्वं (१।१६) प्रपञ्चितम्।

---

१. संक्लिप्तो–क, ख।

[१] ये यथावादिनो मर्त्या न च तत्कारिणः सदा ॥ ६७ ॥

**सत्यमेव स्वर्गस्य निर्वाणस्य च सोपानम्**

सत्यं स्वर्गस्य सोपानं निर्वाणद्वारमेव तत्।
तस्मात् सत्यपरो नित्यं नित्यं धर्मगतिः स्मृतिः ॥ ६८ ॥

**अनृतं न वदेत्**

अशोकमजरं स्थानं प्रयाति पुरुषोत्तमः।
वर्जयेदनृतं धीमान् निन्दितं तत्त्वदर्शिभिः ॥ ६९ ॥

॥ इति वाग्वर्गो द्वादशः ॥

---

१. इतोऽग्रे केचिच्छ्लोकाः क, ख पुस्तकयोः परिभ्रष्टा अपाठ्याः ।

## (१३) कर्मवर्गः

**शुभाशुभकर्मणां फलभोगः**

[1]शुभानामशुभानां च [2]कर्मणां फलनिश्चयः ।
भुज्यते सुकृतं सर्वं कर्मबद्धा हि देहिनः ॥ १ ॥

(यदङ्गी)क्रियते कर्म तत्कृद्भिरनुभूयते ।
चित्तमानेन मूढेन तृष्णानगरवासिना[1] ॥ २ ॥

**स्वयमेव फलं भुङ्क्ते**

सहायैर्बहुभिः सार्धं कुरुते कर्म दुष्कृतम् ।
एकाकी कर्मणस्तस्य फलं भुङ्क्ते भवे भवे ॥ ३ ॥

कर्मणामविसंयोगः सर्वैः स्वजनबान्धवैः ।
शुभाशुभं परं लोके गच्छन्तमनुगच्छति ॥ ४ ॥

यत्र प्रयान्ति पुण्यानि गन्धस्तत्रानुधावति ।
तथा शुभाशुभं कर्म गच्छन्तमनुगच्छति ।
स्वकर्मफलदायादा प्राणेन कर्मयोजिनः ॥ ५ ॥

---

1. अष्टाशीति श्लोकात्मकोऽयं वर्गः पाण्डुलिपेः पुष्पिकायां 'संयोजनवर्ग' नाम्ना संबोधितः । परम् अत्र विषयदृष्ट्या षट्त्रिंशत् श्लोकाः कर्मणा सम्बद्धा अवशिष्टाश्च ज्ञानेन । अतः अत्र षट्त्रिंशत् श्लोकपर्यन्तं त्रयोदशः 'कर्मवर्गः' अवशिष्टश्च संयोजनवर्गो बोध्यः ।

2. दृष्टधर्मफलं कर्म क्षेत्राशयविशेषतः ।
तद्भूम्यत्यन्तवैराग्यात् विपाके नियतं च यत् ॥

एवमिह जन्मनि फलदं कर्म ( दृष्टधर्मफलं ) भवति, यदि कार्यक्षेत्रे विशेष आशये ( अभिप्राये ) वा विशेषो भवेत् । यथा संघावमानेन "स्त्रियो यूयं" इति भाषमाणो भिक्षुः स्त्रीत्वं गत । आशयविशेषेण षण्ढोऽसौ, यस्यां भूमिकायां पुरुषस्याऽत्यन्तं वैराग्यं, स तस्यां भूमिकायां नोत्पद्यते ।

अतएव तस्यां भूमिकायां शरीरान्तरे विपक्त्रिमं कर्म स्वप्रकृतिं परिवृत्य वर्तमाननिकाये शरीरे परिपाकोन्मुखं ( दृष्टधर्मफलं ) भवति । विपाककालनियतमपि कर्म अवश्यविपाकम् इह जन्मनि फलदम् ।

—अभिधर्मकोशः—४।५५ ।

---

१. तृष्णाम्बर—क,

**सुकृतैः सुरलोकं गच्छन्ति**

सुकृतैः सुरलोकेषु दुष्कृतैश्च तथाप्यधः।
यद्दुःखं कर्मफलजं जायते कटुकोदयम्॥ ६॥

तस्योपमानमसुरं त्रिषु धातुषु जायते।
त्रिदोषजं त्रिचित्तोत्थं त्रिषु धातुषु पच्यते॥ ७॥

तस्य कर्मविपाकस्य त्रिषु धातुषु लक्ष्यते।
हेतुप्रत्ययसामग्रीसमुत्थं च प्रमेव तत्॥ ८॥

**अन्यकृतकर्मणः फलं नान्यो भुङ्क्ते**

न ह्यन्येन कृतं पापमन्येन परिपच्यते।
सुकर्मफलदायादः प्राणिनां सर्व एव हि॥ ९॥

**पूर्वोक्तानां त्रिविधानां स्वस्य कृत एव विपाको भवति**

कर्मणस्त्रिविधस्यास्य न चाप्यन्यस्य पच्यते।
चत्वारिंशद्विपाकस्य[1] घोरं भवति चेष्टितम्॥ १०॥

**कर्मफलवर्णनम्**

एकः करोति कर्माणि एकश्च फलमश्नुते।
एकस्तरति दुर्गाणि सहायो जायतेऽपरः॥ ११॥

जलापेक्षी जनो यस्तु कुरुते कर्म दुष्कृतम्।
न जनो जनशतानां भुङ्क्ते हि व्यञ्जनं(क्वचित्)॥ १२॥

न ह्यन्येन कृतं कर्म सङ्क्रामत्यपरस्य तत्।
न मन्येऽनादिनिधनमस्मिँल्लोके न चापरैः॥ १३॥

दुःखास्वादं सुखोद्भूतं येन दुश्चरितं कृतम्।
तेम चरति संसारे प्रेरिते कर्मवायुना॥ १४॥

---

1. "निरोधोऽसंज्ञिक समापत्तेरेव "विपाकः"। जीवितेन्द्रियं पूर्वकृतकर्मणो विपाकमात्रम्। अन्त्यम् अष्टकम् एकविंशत्सु, श्रद्धा-वीर्य-स्मृति-समाधि-प्रज्ञाऽऽज्ञास्याम्याऽऽज्ञाऽऽज्ञातावीति, दौर्मनस्यं च त्यक्त्वा शेषाणि द्वादश चक्षुः-श्रोत्र-घ्राण-जिह्वा-कार्य-मनः-पुरुष-स्त्री-सुख-दुःख-सौमनस्यो-पेक्षेति सविपाकानि अविपाकानि च भवन्ति।

एकं तत् दौर्मनस्येन्द्रियं तु सविपाकमिन्द्रयम्। मनः+(सुख-दुःख-सौमनस्योपेक्षा)+श्रद्धा-वीर्य-स्मृति-समाधि-प्रज्ञे) ति दशसविपाकानि अविपाकानि च सन्ति इति।

—अभिधर्मकोशः।

**कस्य धर्मो वर्धते ?**

अनपेक्षिततत्त्वस्य व्याकुलीकृतचेतसः।
बर्धते सकलो (धर्मः) धर्मावृतमनोहरः॥ १५॥

**के नरकं गच्छन्ति ?**

मनसा वञ्चिताः सत्त्वा मनसा विप्रमोहिताः।
गच्छन्ति नरकं पापास्तमस्तमपरायणाः॥ १६॥

तमोवृते हि संसारे दुर्लभं बुद्धशासनम्।
दुःखाद् दुःखतरं यान्ति येभ्यः[1] धर्मो न रोचते॥ १७॥

अनादिमति संसारे कर्मजालावृता प्रजा।
जायते म्रियते चै(व) स्वकर्मफलहेतुना॥ १८॥

जायन्ते नरके देवा नारकेयास्तथाविधाः।
मनुष्याः प्रेतविषये नरकं वा प्रयान्ति हि॥ १९॥

**सुकर्मणैव सुखम्**

अन्योन्यप्रभवं दृष्टं दुःखं वा यदि वा सुखम्।
क्लेशधर्मोद्भवे जन्मन्यपरादिकृतं च तत्॥ २०॥

असङ्ख्येयकृतं कर्म संसारे प्राणिभिः सदा।
तत्र शक्यं बुधैर्गन्तुं वर्जयित्वा तथागतैः॥ २१॥

नाधर्मस्य फलं साधु विपरीतं न पच्यते।
हेतोः सदृशता दृष्टा जलस्य विविधस्य वै॥ २२॥

सादृश्यस्य हेतुफलं विपरीतं न जातु हि।
[1]संस्कृतानामरूपाणां हेतुः प्रत्ययसम्भवः॥ २३॥

1. कायिकी विज्ञप्तिः नास्ति गतिः, यतः सर्वमेव 'संस्कृतं' क्षणिकम्। क्षणो हि आत्मलाभानन्तरविनाशस्वभावः क्षणवान् क्षणे भवो वा क्षणिकः, यत्रोत्पन्नः तत्रैव द्वितीयक्षणे धर्मो विनश्यति। इत्थं द्वितीयक्षणे स्वरूपस्यैव विनाशः, तर्हि पूर्वदेशत्यागपूर्वकोत्तरदेशप्राप्तिरूपां गतिं को विधास्यति ? अतो विज्ञप्तिः न गतिः।

रूप-चित्त-चैत्त-चित्त-विप्रयुक्ताः सर्वं एव संस्कृता धर्माः स्वीयैः जाति-स्थिति (व्यय-क्षयैः) संस्कृतधर्मैः समन्विता भवन्ति। संस्कृतधर्मेषु ये सत्त्व-संख्यातानां समीपगाः सन्ति, ते स्वाश्रया प्राप्त्या सहिताः, अन्येषां तु न प्राप्त्याश्रय इति वा शब्दग्रहणम् इति।

—अभिधर्मकोशः—२|२१।

१. येषां—क, ख।

**सहेतुकं सर्वं कर्मफलम्**

नाहेतुकं फलं दृष्टं नरके तु विशेषतः ।
हेतुसङ्घातसंसक्तं नरकेषु विपच्यते ॥ २४ ॥

कृतोपरतगाढानां नियतं पापगामिनाम् ।
कर्मणा फलसम्बन्धो नरकेषु विपच्यते ॥ २५ ॥

देशानां प्रति कालं तु यत् कर्म (वि)निवर्तते ।
तस्य नेष्टं फलं दृष्टं तत्त्वमार्गविदर्शकैः ॥ २६ ॥

**उदाहरणप्रदर्शनपूर्वकं फलस्य कर्माधीनत्वमेवेति**

दीपाधीना प्रभा यद्वत् कर्माधीनं फलं तथा ।
अन्योऽन्यफलसम्भूतः संस्कृतः सर्व एव हि ॥ २७ ॥

**प्रतीत्यसमुत्पादसमर्थनम्**

अन्योन्यहेतुका दृष्टा ह्यन्योन्यवशवर्तिनः ।
सादृश्यस्यानुबन्धेन दृश्यन्ते तत्त्वदर्शकैः ॥ २८ ॥

नाहेतुफलसन्धानमीश्वरादिभिरास्थितम् ।
भवन्ति संस्कृता धर्मा देशितास्तत्त्वदर्शिभिः ॥ २९ ॥

अनादिमतिसंसारे हेतुप्रत्ययसम्भवे ।
सादृश्यं कर्मणा दृष्टं विपरीतं न कल्प्यते ॥ ३० ॥

**बुद्धस्य स्वरूपम्**

तत्स्थेषु कर्मवशगाः प्राणिनः कर्महेतुजाः ।
स कर्मफलतत्त्वज्ञो (बुद्ध) इत्यभिधीयते ॥ ३१ ॥

**केषां शान्तिः न विद्यते ?**

मार्गामार्गविरुद्धा ये मूढा बुद्धस्य शासने ।
(न) तेषां विद्यते शान्तिरादित्यस्य तमो यथा ॥ ३२ ॥

**कर्मायत्तं सुखम्**

कर्मायत्तं सुखं दृष्टं सुखायत्तं मनस्तथा ।
मनोऽवबोद्धया(स्ते)धर्मा ये व्युत्पत्तिविचारिणः ॥ ३३ ॥

**सुचरितस्य कर्मणः फलम्**

अनित्याः सर्वसंस्कारा जलबुद्बुदसन्निभाः ।
तस्मात् सुचरितं कर्म लोके मर्त्ये[1] परत्र च ॥ ३४ ॥

दृष्टं कर्मफलं लोके दृष्टा एव विचित्रता ।
यः प्रमादपरः पुंसास्तस्यात्मा ध्रुवमप्रियः ॥ ३५ ॥

कर्मरज्ज्वातिदृढया[2] दुष्प्रमोक्षसुगाढया ।
बद्धा बाला न गच्छन्ति निर्वाणपुरमुत्तमम् ॥ ३६ ॥

॥ इति कर्मवर्गस्त्रयोदशः ॥

---

१. इह–क, ख । २. दीर्घया–क, ख ।

## (१४) संयोजनवर्गः

### ज्ञानेन निर्वाणाधिगमः

ज्ञानशस्त्रे(ण) तां छित्वा निर्मुक्ता विगतज्वरा।
प्रयान्ति निर्वृत्तिं धन्या यत्र ज्ञान्येव विद्यते ।। १ ।।

सदृशं हि फलं हेतोः कथयन्ति मनीषिणः।
हेतोरसदृशं नैव फलं पचति देहिनाम् ।। २ ।।

हेतुप्रत्ययसम्बद्धजन्मप्रत्ययसङ्गताः ।
यथा बद्धा हि संसारे प्रमुच्यन्ते (न) देहिनः ।। ३ ।।

### परमशान्तेरुपायः

तां विश्लिष्य सुसम्बद्धां गाढां दुर्विषेहां पराम्।
गच्छन्ति परमां शान्तिं यत्र दुःखं न विद्यते ।। ४ ।।

कर्मणा नियतं जन्तुः कर्मणा परिपच्यते।
सूपगं (ननु) संसारे सुखं नैवोपलभ्यते ।। ५ ।।

दुःखे दुःखाभिषक्तानां जन्तूनां मूढचेतसाम्।
सन्मार्गदेशिको नास्ति योऽस्माद् दुःखात् प्रमोचयेत् ।। ६ ।।

ये न धर्मपरा नित्यं ये न सत्यपराः सदा।
ये च योनिरता नित्यं तेषां दुःखं न हीयते ।। ७ ।।

### धर्म इह परत्र च सुखावहः

मातृवत् पितृवच्चैव (मित्रवद्) बन्धुवत् सदा।
धर्मो वै देशितो बुद्धैरिह लोके परत्र च ।। ८ ।।

त्रिगत्यवस्थिताः सत्त्वास्त्रिदोषवशमागताः।
त्रिधातुगतिका नित्यं त्रिलोक्यां पतिताः (जनाः)।। ९ ।।

त्रिकर्मोपान्तवशगाः स्त्रीपानादिपराश्च ये।
न भवान्मुक्तिगतिकाः स्युर्भूमौ विचरन्ति ते ।। १० ।।

**केषां दुःखं न विद्यते ?**

त्रिरत्ने (न) प्रमाद्यन्ति त्रिबोधिवशगाश्च ये।
त्रिदृष्टिवर्जका ये तु तेषां दुःखं न विद्यते ॥ ११ ॥

त्रिकालस्थितिसंलग्ना विज्वरास्तत्त्वदर्शिनः।
त्रिभागकृतिसन्तुष्टा वीतशोका निवृत्तिगाः[१] ॥ १२ ॥

त्रिराशिसमवेता ये त्रिकर्मप्रविचारिणः।
न ते वत्स्यन्ति संसारे वीतदोषा गतज्वराः ॥ १३ ॥

मार्गामार्गविधिज्ञा ये भावाभावविचिन्तकाः।
मैत्रीभावविविक्ता ये ते यान्ति परमां गतिम् ॥ १४ ॥

**नरः कान् भजेत् ?**

अनाविलेन ( मनसा ) विप्रसन्नेन ( चेतसा )।
सर्वदा धर्मवशगान् धीरान् विप्रान् भजेन्नरः ॥ १५ ॥

सत्यमेव प्रपन्ना ये स्मृत्या (हित्वा) मनोमलम्।
भावाभिलाषाद् विरता मुक्ता निःसंशयं हि ते ॥ १६ ॥

नित्यं दुःखसुखैर्बद्धा विप्रलब्धा ह्यनेकशः।
नरा निधनतां यान्ति प्राणिनो मोहवञ्चिताः ॥ १७ ॥

**कैर्दुर्गुणैः स्वर्गो न लभ्यते ?**

नाह्रीक्यमनपत्राप्यं कौसीद्यं पापमित्रता।
नैतानि नाकबीजानि तेभ्यो रज्येन्न पण्डितः ॥ १८ ॥

[1]आह्रीक्यमनपत्राप्यं नित्यं पापानुचारिणः।
नरः प्रपातात् पतति स पश्चात् प्रतिबुध्यते ॥ १९ ।

1. ह्रियोऽभाव 'आह्रीक्यम्' । अपत्रपाया अभावोऽनपत्रपा । इमे द्वे अकुशलधर्मौ विद्येते । प्रत्येकम् अकुशलं द्विविधं भवति विज्ञप्तिरविज्ञप्तिश्चेति । संप्रयोगकाल एव विज्ञप्तिः, कालं व्यतीत्य चेत् अविज्ञप्तिः । रूपिणः सप्तकुशलाः कर्मपथाः, काय-वाक्सम्बन्धिनः सन्ति द्विविधाः विज्ञप्त्यविज्ञप्तिभेदात् । समाधिजाः कर्मपथाः केवलम् अविज्ञप्तिः । ध्यानजाऽनास्रवसंवरयो कर्मपथाः समाधिजा इति ।
सर्वे रागाः प्रतिघा ( द्वेषाः ) मूढयः ( मोहाः ) च कामधातुगताः ( सत्कायान्तग्राहदृष्टीवर्जयित्वा ) यथाक्रमं लोभ-द्वेष-मोहा अकुशलमूलानि । सत्कायदृष्टि अन्तग्राहदृष्टिश्च नाकुशलमूले, यद्धि केवलं कुशलमकुशलमूलं च तदेवाकुशलमूल भवितुमर्हति । —अभिधर्मकोशः-२/२६ ।

१. विवर्तंते–क, ख ।

**क्रोधेर्ष्यादिभयग्रस्ताः स्वर्गं न गच्छन्ति**

क्रोधेर्ष्यास्त्यानमिद्धं हि त्वश्रद्धं यन्मनस्तथा।
मोहशोकभयग्रस्ता न स्वर्गं प्रभवन्ति ते ॥ २० ॥

अमृतं मद्यपानं च मिथ्यादृष्टिश्च लुब्धता।
कारणानि करणस्य व्यापादक्रूरकर्मता ॥ २१ ॥

**कुदृष्टेः कुफलम्**

अदर्शनं परं श्रेयो न कुदृष्टिः कथञ्चन।
कुदर्शनेन संमूढाः प्रयान्ति नरकं नराः ॥ २२ ॥

अहेतुं हेतुमापश्यन्त्य ( नित्यं ) नित्यवन्नराः।
प्रयान्ति नरकं तीव्रं मिथ्यावादेन वञ्चिताः ॥ २३ ॥

कष्टेन तेजसा तेषां मिथ्यादर्शनतत्पराः।
प्रज्ञाभिमानिनो भूता मोहयन्त्यपरान् जनान् ॥ २४ ॥

मोहान्धकारगहने पतन्त्येव महार्णवे।
लोके प्रकृतिदुःखेऽस्मिन् हेतुभूता हि ते जनाः ॥ २५ ॥

शराणां तापनं क्षेपं कथयन्ति मनीषिणः।
चित्तता या तुदत्यन्ते सर्वतः क्लेशपर्वतः ॥ २६ ॥

क्लेशनागाद् विमोक्षो यो यस्य ज्ञानपुरःसरः।
प्राप्यते वीतकैः रूपैः पुरुषैस्तत्त्वदर्शिभिः ॥ २७ ॥

अन्योऽन्यमतिभिः सर्वा लोकोऽयं विप्रलोभितः।
न याति परमां शान्ति यत्र मिथ्या न कथ्यते ॥ २८ ॥

**नरकहेतवः**

औद्धत्यपापसंसर्गः कौसीद्यं लुब्धता तथा।
हेतवो नरकस्यैते शीलस्य हि विवर्जनम् ॥ २९ ॥

मद्यपानं सदा हिंसा परदाराभिदर्शनम्।
लोभः क्रूरा मतिश्चैव हेतवो नरकस्य ते ॥ ३० ॥

**नाशहेतवः**

पैशुन्यं पापसंसर्गो मिथ्यादृष्टिरसंयमः।
चापल्यं मनसश्चैव नाशयन्ति नरं सदा ॥ ३१ ॥

[1]अविद्यया सह पारुष्यैः मिथ्यावागभिमानिता ।
न सुखाय भवन्त्येते अस्मिल्लोके न चापरे ।। ३२ ।।

**के परिवर्जनीयाः ?**

यद्यसौ भ्रमति प्रायो लोकेस्मिन् किन्न चापरे ।
यद्यसम्भ्रामिते लोके ये च दुःखे निमज्जति ।। ३३ ।।

तच्चेष्टितमविद्यायाः कथयन्ति तथागताः ।
मिथ्यामानोऽतिमानी च सर्वथा (परिवर्ज्यताम्) ।
परिवर्ज्याः सदा ह्येते दुःखवृक्षस्य हेतवः ।। ३४ ।।

ज्ञानिनः परमोदारा नित्यं क्लेशवधे रताः ।
छित्वा (तद्)बन्धनं सर्वं गच्छन्ति पदमच्युतम् ।
आदिमध्यान्तकल्याणमस्मिल्लोके न चापरे ।। ३५ ।।

---

1. संयोजनादि वचनात् कुप्रज्ञा चेन्न दर्शनात् ।
दृष्टेस्तत्सम्प्रयुक्तत्वात् प्रज्ञोपक्लेश दर्शनात् ।।

एवं संयोजन-बन्धना-अनुसया-आस्रवौ-योगादय एतत्पर्याया उक्ताः। तत्कथनमपि अमुमेवाऽर्थं द्रढयति । कुत्सिता प्रज्ञा=कुप्रज्ञा, सा एव अविद्या इति चेत् न । कुतः ? कुप्रज्ञा अपि दर्शनम् ( दृष्टिः ) एव । संयोजनेषु हि दृष्टिरविद्या चेति द्वयं पृथक् उद्दिष्टम् । दृष्टिः अविद्याः सम्प्रयुक्ता च उच्यते । दृष्टौ अविद्याया अन्तर्भावे, अविद्यासम्प्रयुक्ता दृष्टिरिति कथनं कथं सङ्गच्छते ? अथ च आस्रवौ-घ-योगोपादानमिति चतुर्विधा अनुशयाः पञ्चविधा अपि संयोजनम्–उक्तञ्च आचार्यवसुबन्धुना—

संयोजनादिभेदेन ते पुनः पञ्चधोदिताः ।
द्रव्यपरामर्शसाम्याद् दृष्टी संयोजनान्तरम् ।।
यत एकान्ताकुशलस्वतन्त्रमुभयं ततः ।
ईर्ष्या मात्सर्यमेषूक्त पृथक् संयोजनद्वयम् ।।
पञ्चधाऽवरभागीयं द्वाभ्यां कामानतिक्रमः ।
त्रिभिर्निवर्तनं मूलमुखयोः सङ्ग्रहात् त्रयम् ।।
गमनाप्रार्थना मार्गविभ्रमो मार्गसंशयः ।
मोक्षगतिविघ्नकराः तावन्तः कथितास्त्रयः ।।
पञ्चधैवोर्ध्वभागीयं रूपाऽऽरूप्यजरञ्जने ।
औद्धत्यमानमोहाश्च वित्तिवशात् त्रिबन्धनम् ।।

—अभिधर्मकोषः–५।४१-४५ ।

**दोषसेवनैः नाशो भवति**

दोषाणां सेवनं दृष्टमविद्यासम्प्रवर्तकम् ।
वर्जनीयाः सदा क्लेशाः सेव्यं ज्ञानमनुत्तमम् ।। ३६ ।।

**ज्ञानेन मुक्तिर्भवति**

ज्ञानेन मुक्तिर्भवति न च क्लेशैरिहोच्यते ।
ज्ञानाग्निना हि दह्यन्ते क्लेशकाष्ठा न शेषतः ।। ३७ ।।

**काममयज्ञानं क्लेशजनकम्**

क्लेशैः किमर्थं संरुद्धा जालिनी विष(यै) रता ।
पुनः काममयं ज्ञानं चक्षुःपटलबाधकम् ।। ३८ ।।

**रागनिन्दा**

निर्वाणयति सम्बुद्धवाक्यभैषज्यभोजनैः ।
सद्धर्मसेनापतिना रागसेना विगर्हिताः ।। ३९ ।।

**शुभा वाणी प्रयोक्तव्या**

उदीरिता शुभा वाणी निश्चेतव्या प्रयत्नतः ।
चत्वारो हि [1]विपर्यासा बुद्बुदवच्चकासते ।
लोकधर्मास्तथा चाष्टौ नाशयन्त्यखिलं जगत् ।। ४० ।।

**ज्ञानप्लवः सन्तरणसमर्थः**

जालिनीप्रभवा नद्यो वितर्कशतदुस्तराः ।
ज्ञानप्लवं समारुह्य तरन्ति मुनयः शिवाः ।। ४१ ।।

---

1. अन्तग्राहदृष्टेः नित्यध्रुवदृष्टिभाग एको विपर्यासः-( मिथ्या-ज्ञानं ) दृष्टिपरामर्शे भागद्वयं द्वौ विपर्यासौ, सत्कायदृष्टे आत्मदृष्टिभाग एकः, एवं दृष्टित्रये "चत्वारो विपर्यासा" भवन्ति इति ।

अन्ये क्लेशा न विपर्यासाः विपर्यासे त्रीणि लक्षणानि भवन्ति—विपरीतता, अतीरणता, समारोपता च । विपरीतता यथा अनात्मनि आत्मज्ञानम् । अतीरणं = अनध्यवसायः, यथा स्थाणुर्वा पुरुषो वा । समारोपः तद्गुणाभाववति तद्गुणारोपः ।

दृष्टिवशादेव चित्तं संज्ञा च विपर्यासः । चित्तसंज्ञासंयुक्ता हि दृष्टिः विपर्यासे गृह्यते ।

—अभिधर्मकोशः-५/९ ।

विपर्यासेन संज्ञानां चित्तं ते परिदह्यते ।
निमित्तं वर्ज्यतां तस्माच्छुभं रागोपसंहितम् ।।
—सुत्तनिपाते ।

**केषां मुक्तिर्न विद्यते ?**

मूढा ये भूतमनसो नराः कामस्य सेविनः ।
सदा च पञ्चभिः स्थानैर्मुक्तिस्तेषां न विद्यते ।। ४२ ।।

अयोनिशोमनस्कारैर्यो वह्निः समुदीर्यते ।
स योनिशोमनस्कारवर्षणैः प्रतिकल्पते ।। ४३ ।।

**अविद्यासंभवम् अन्धत्वं कथं दूरीभवेत् ?**

अन्धत्वं चिरकालोत्थमविद्यासम्भवं नृणाम् ।
तदल्पकाले जातेन प्रदीपेन न पश्यति ।। ४४ ।।

**ज्ञानलोकेन त्रयो दोषाः विनश्यन्ति**

रागमूढा विपच्यन्ते नरके मन्दमेधसः ।
ज्ञानिनस्तु न नश्यन्ति निर्वाणगमना यथा ।
त्रयो दो(षा) विनश्यन्ति ज्ञानलोकेन देहिनाम् ।। ४५ ।।

तस्मादशेषविज्ञानशीलक्षान्तिरतो भवेत् ।
अमूढानां प्रणश्यन्ति त्रयो दोषाः शरीरिणाम् ।। ४६ ।।

ज्ञानानलेन मन्दश्च क्लेशेन्धन महात्विषः ।
व्याधिनिर्मग्नतनवः शय्यावेष्टनगोचराः ।। ४७ ।।

यत्र याति परं वेदं मनोमोहमयं फलम् ।
यानि दुःखान्यनेकान्यनेका भुज्यते गतिः ।। ४८ ।।

पञ्चकैः प्राणिभिर्नित्यमेतन्मोहस्य चेष्टितम् ।
त्रयो वा निर्जिता दोषा यैरिदं दह्यते जगत् ।। ४९ ।।

**ज्ञानयोगेन सुखं भवति**

तमग्निं ज्ञानयोगेन निर्वाप्य सुखितो भवेत् ।
तस्माज्ज्ञानाग्निना नित्यं निर्दहेत् क्लेशपर्वतम् ।
क्लेशपर्वतदग्धस्य सुखं पदमवस्थितम् ।। ५० ।।

।। इति संयोजनवर्गश्चतुर्दशः ।।

## (१५) पापवर्गः

**पापफलस्य अज्ञाता परितापं लभते**

क्रियमाणस्य पापस्य विज्ञेयं कटुकं फलम्।
यो न जानाति[1] मूढात्मा पश्चात् स परितप्यते ॥ १ ॥

(फलं च) लभते पुरुषः सर्वपापस्य कर्मणः।
तस्मात् पापं न सेवेत यदीच्छेत् सुखमात्मनः ॥ २ ॥

अल्पादपि महाघोरात् नरकात् पापचेतसः।
मुक्त्यर्थं (तानि) पापानि भूयो मोहवशं गताः ॥ ३ ॥

न विश्वसेद्धि पापस्या(ल्पतां) नरकगामिकाम्।
अल्पेन वह्निना शैले दह्यन्ते सर्वतो द्रुमाः ॥ ४ ॥

**नास्ति पापसमो शत्रुः**

पापेन नरकं याति पापेन परिदह्यते।
पापेन नैति निर्वाणं नास्ति पापसमो रिपुः ॥ ५ ॥

पापाचारो हि पुरुषो न क्वचित् सुखमेधते।
(पापं) तस्मान्न सेवेत यदीच्छेत् सुखमात्मनः ॥ ६ ॥

साधुकारं च साधूनां पापमार्गस्य दुष्करम्।
कुर्वन्तः पापकान् सत्त्वा मोदन्ते[2] (लघुचेतसः) ॥ ७ ॥

विपाककटुकः पश्चात् परितापोऽल्पचेतसः।
कुतोऽपचितगात्रस्य कर्मणो दृश्यते फलम् ॥ ८ ॥

तस्मात् पापं न कुर्वीत कष्टा पापस्य वेदना।
पापं पापविपाकं च पापिनां पच्यते ध्रुवम् ॥ ९ ॥

न हि पापं न पापस्य तस्मात् पापं विवर्जयेत्।
परिवर्जितपापस्य न पापाद् भयमस्ति हि ॥ १० ॥

स्वकृतं बाधते पापं परोक्ष्यं नैव भुज्यते।
कल्याणस्य फलं साधु कष्टं पापस्य पच्यते ॥ ११ ॥

---

१. विन्दति—क, ख। २. मोदति—क, ख।

कृत्वा तु पुरुषः पापं कल्याणं नानुसेवते ।
न शस्त्राग्निप्रपातेभ्यो दुःखं स्यात् तादृशं नृणाम् ॥ १२ ॥

यथा निषेवितं मिथ्यापापं पापेषु कल्प्यते ।
विनिर्वर्जितपापस्य नित्यं च शुभचेतसः ॥ १३ ॥

### शान्तस्य भिक्षोर्निर्वाणं नातिदूरम्

(देहिनो) शान्तवक्त्रस्य निर्वाणं नातिदूरतः ।
तीव्रात् तीव्रतरं यान्ति नराः कुकृतकारिणः ॥ १४ ॥

सुखात् सुखतरं यान्ति नराः सुकृतकारिणः ।
न हि तीव्रस्य पापस्य सुखं फलमवाप्यते ॥ १५ ॥

सुखस्य वा फल तीव्रं विपरीतं न पच्यते ।
अनादिमति संसारे सुकृतानां फलं सुखम् ॥ १६ ॥

कर्मणां सुकृतानां च तथा दुःखफलं स्मृतम् ।
पापं पापानुगं दृष्टं शुभस्य च शुभं तथा ॥ १७ ॥

### पापी नरकेषूपपद्यते

पापाचारः शुभद्वेषी नरकेषूपपद्यते ।
परिवर्जितपापस्य नित्यं च शुभचेतसः ॥ १८ ॥

हस्तावलम्बि निर्वाणमदृष्टं तदनाविलम् ।
आदिमध्यान्तकल्याणा धर्मा नित्यं सुखोदयाः ॥ १९ ॥

### तस्मात् पापं विवर्जयेत्

आदिमध्यान्तकटुकं फलं पापस्य कर्मणः ।
तस्मात् पापं सदा वर्ज्यमालम्ब्यश्च शुभं सदा ॥ २० ॥

परिवर्जितपापस्य नित्यं सुखमवस्थितम् ।
अनादिमति संसारे दग्धाः पापैः पुनर्नराः ।
खेदं कस्मान्न गच्छन्ति बाला मोहवशानुगाः ॥ २१ ॥

आपातमधुरं[1] पापं परिणामेऽग्निसन्निभम्[2] ।
पापकारी तु पुरुषः सर्वलोके विगर्हितः ।
शुभकारी सदा शान्तस्तस्मात् पापं विवर्जयेत् ॥ २२ ॥

---

१. रम्येवदृश्यते—क । २. दृश्यते—क ।

**धीरैस्तत्त्वनिदर्शकैः पापविवर्जनम्**

अनिष्टमहितं दृष्टं विपाके कटुवेदनम् ।
पापं पापविपाकं च तस्माद् धीमान् विवर्जयेत् ।। २३ ।।

अस्ति पापं ध्रुवं पापे पापमस्ति न पातकम् ।
पापाच्चेष्टा क्षयापेक्षा कृपा[1] चित्तसुगामिता ।। २४ ।।

पापं पापाश्रितं नित्यं धर्मो धर्माश्रितस्तथा ।
उन्नयत्युक्तमेतद्धि धीरैस्तत्त्वनिदर्शकैः ।। २५ ।।

**पापविरहिताः परमं सुखं प्राप्नुवन्ति**

अचेतना ध्रुवं बाला येषां दुश्चरितं प्रियम् ।
विनिर्वर्जितपापास्तु गच्छन्ति परमां गतिम् ।। २६ ।।

अतीव वञ्चनाघोरा नियता पापगामिनी ।
मानुष्यं दुर्लभं प्राप्य यस्य पापं प्रियं बहु ।। २७ ।।

**शुभाशुभफलयोः परिणामभेदः**

पापाद् विरज्यते यस्तु शुभे वाऽतीव रज्यते ।
स सुखात् सुखमाप्नोति निर्वृत्ति वा प्रयाति हि ।। २८ ।।

नरो भवति धन्योऽयं यः शुभान्युपसेवते ।
स त्वधन्यतमो लोके यः पापमुपसेवते ।। २९ ।।

आदिमध्यान्तनिधनं सद्भिरेव विगर्हितम् ।
पापं पापानुगं दृष्टं नरकायोपकल्प्यते ।। ३० ।।

**शुभकर्मा सुखमाप्नोति देवलोकं च गच्छति**

अतीव शोभते लोके शुभकर्मा जितेन्द्रियः ।
कायस्य भेदात् सततं देवलोके स जायते ।। ३१ ।।

**पापस्य परिणामः सुदारुणः**

दुष्कृतस्यानुबद्धं हि दुष्कृतं फलमुच्यते ।
सुकृतस्य तथा दृष्टं फलं सुखविपाकजम् ।
बीजस्याशुविभीतस्य परिणामः सुदारुणः ।। ३२ ।।

निमित्तं सदृशं दृष्टं फलं पापस्य कर्मणः ।
पापेनाकृष्यते जन्तुः दुर्गतौ बडिशैरिव ।। ३३ ।।

---

१. कृपणः—क, ख ।

बडिशैर्मुच्यते मीनः पापं पापान्न मुच्यते ।
दिन[1]पीडापि पापस्य सर्वथा दुःखकारिका ।। ३४ ।।

अमेध्यस्य यथा गन्धः प्रतिकूलो हि देहिनाम् ।
शुभस्य वासना रम्या विप्रणष्टस्य दुर्गतौ ।। ३५ ।।

विलेषु वासनं यद्वत् पुष्पे नष्टे प्रदृश्यते ।
चलत्ययं पापकारी नित्यं कामवशानुगः ।। ३६ ।।

**के शुभचारिणः ?**

आलस्यानृतिको नित्यं नासौ कल्याणमर्हति ।
अनन्ता रजनी तेषां (येषां) पापे स्थितं मनः[2] ।। ३७ ।।

प्रभातं रजनी तेषां येषां पापे[3] स्थिरा मतिः ।
अनीर्ष्यकाः सकल्याणाः पुरुषाः शुभचारिणः ।। ३८ ।।

**अल्पपापी सुखमाप्नुते**

ये न[4] पापात्मनो भूतास्ते नित्यं कोटचारिणः ।
अल्पभारा यथा नावा प्लवते न निमज्जति ।। ३९ ।।

**पापीमित्रेण दुःखं भवति**

तथाल्पपापपुरुषः प्लवते न निमज्जति ।
न पापमित्रसंसर्गात् पुरुषः सुखवान् भवेत् ।। ४० ।।

पापमित्रं समासाद्य सर्वानिलपरो भवेत् ।
कर्मारम्भ[5]विधिज्ञो यो नित्यं सूक्ष्मार्थ(दर्शकः) ।। ४१ ।।

नासौ लिम्पति पापेन पङ्केन गगनं यथा ।
अश्रुतं पुरुषः शृण्वन् श्रुतश्चापि भवेद् दृढम् ।। ४२ ।।

**पण्डितलक्षणम्**

पापं च वर्जयेद् धीमान् प्रेत्य देवेषु जायते ।
गुणदोषपरिज्ञानम्मेतत् पण्डितलक्षणम् ।। ४३ ।।

**मूढलक्षणम्**

गुणदोषापरिज्ञानमेतन्मूढस्य लक्षणम् ।
गुणेषु गुणसञ्चारो दोषेषु च तथैव च ।। ४४ ।।

---

१. वासर–क, ख । २. स्थितामतिः–क ।
३. बुद्धेः–क, ख । ४. तु–ख ।
५. फल–क, ख ।

**मूढामूढयोर्लक्षणम्**

सवोषगुणतत्त्वज्ञो नित्यं भवति शोकभाक्।
पापकर्त्ता (तु) पुरुषः शत्रुवच्चात्मनः स्थितः ॥ ४५ ॥

शुभकर्त्ता तथा पुंसो मित्रवत् प्रतिपद्यते।
तमोनिरयभूमिष्वमृतोऽयं प्रतिपद्यते ॥ ४६ ॥

यस्य पापरता बुद्धिर्नित्यं विषयतत्परा।
विषयारामचपला नित्यं रागानुचारिणी ॥ ४७ ॥

यस्य बुद्धिर्न धर्मेषु नरस्य दुःखभागिनः।
हेतुतश्च[1]महादुःखान्तहेतोर्वह्निसंयुतात् ॥ ४८ ॥

क्षीणपापा वयं सर्वे भूयो लोकमिहागताः।
सुकृतस्य फलं साधु ह्यनेकगुणमण्डितम् ॥ ४९ ॥

दुष्कृतस्य फलं दुःखं विसंवादकमिष्यते[2]।
ते वयं सुखदुःखाभ्यां भूयाम भवसङ्कटे ॥ ५० ॥

कर्मवायुसमुद्भ्रान्ताः समुद्रस्य यथोर्मयः।
कृतं पापेष्वमनसः पापैः रक्षन्ति ये जनाः ॥ ५१ ॥

ते तस्य हेतोर्नरकं प्रयान्त्यशुभचारिणः।
तस्मात्तु नरकान्मुक्ताः ते गच्छन्ति त्रिविष्टपम् ॥ ५२ ॥

ते हि दुःखं (न) संस्मृत्य[3] पुनः कामवशानुगाः।
खरीभूतमिदं चित्तं दोलादोलैः सुखासुखैः ॥ ५३ ॥

वियोगोऽयं परीघातो न च दुःखैर्न विद्यते।
अपारदारसंयुक्त इन्द्रियैः परिवञ्चितः ॥ ५४ ॥

**तृष्णापाशवशगः संसारे भ्रमति**

जनो भ्रमति संसारे तृष्णापाशवशानुगः[4]।
नरकात् प्रेतभुवनं तिर्यग्योनिषु प्रेततः ॥ ५५ ॥

तिर्यग्भ्यो नाकभुवनं नाकाद् भूयो नृजातिषु।
एककर्मपरिभ्रान्तो जगद् भ्रमति चक्रवत् ॥ ५६ ॥

---

१. कारणान्–क, ख।
२. हि तत्–क, ख।
३. विस्मृत्य–क, ख।
४. द्विरावृत्तेरियं पंक्तिः–क पुस्तके।

### सर्वं दुःखम्

न च खेदवशं यान्ति(ह्यभ्यास) वशमागताः ।
रक्षन्ति नाकभुवनं बिरज्यन्ते तथा सुखैः ।। ५७ ।।

सुखात् सुखपरिभ्रान्ता भ्रमन्ति भ्रमचारिणः[१] ।
दुःखं पद्मसहस्राणि पद्मकोटिशतानि च ।। ५८ ।।

(तानि) दुःखानि भुङ्क्तानि न च क्लिश्यन्ति[२] बालिशाः ।
न सुखं विद्यते लोके[३] सर्वदुःखैः परिप्लुतम् ।। ५९ ।।

### दुःखस्य हेतुः भवति

उद्वेगं नैव गच्छन्ति प्राणिनो मोहपीडिताः ।
दुःखेन खिद्यते बालो दुःखहेतौ च वर्तते ।। ६० ।।

हेतौ शतफलं दृष्टं बीजं प्रति यथा फलैः ।
सुखदुःखकशाबद्धाः प्राणिनस्त्रिभवानुगाः ।। ६१ ।।

न यान्ति परमं क्षेमं सर्वदुःखविवर्जितम् ।
स्मर्यते[४](हि) यदा दुःखं तदा विध्यति देहिनम् ।। ६२ ।।

विस्मृते च पुनर्दुःखे चरन्ति विगतज्वराः ।
नारकं तु सदा दुःखं स्मृतं भवति देहिभिः ।। ६३ ।।

तदा कृष्णमिदं सौख्यमनुमानेन तिष्ठति ।
तदेव विदितं मत्वा जगत् सर्वं समन्वितम् ।। ६४ ।।

श्रेयसि क्रियतां बुद्धिर्दोषेभ्यो विनिवार्यते ।
क्षणाधिकारचपलं जीवितं वेति वर्तते ।। ६५ ।।

क्षीयन्ते चापि कर्माणि तस्माच्छ्रेयःपरो भवेत् ।
चित्तवेगं मनः सर्वं जीवितं वेति वर्तते ।। ६६ ।।

### अनागताद् दुःखात् ज्ञानी न बिभेति

तस्मान्न जीविकाहेतौ पापं कुर्याद्विचक्षणः ।
अनागतस्य दुःखस्य न बिभेति महाजनः ।। ६७ ।।

येना(स्य) पच्यते पापं मोहपापवशङ्गतम् ।
मोहितः पापकैर्धर्मैरशुभैः शुक्लवर्जितैः ।। ६८ ।।

---

१. भवचारिणः–क । २. खिद्यते–क ।
३. त्रिभवे–क, ख । ४. शाश्वतं–क, ख ।

**मूढः पापवशाद् नरकं गच्छति**

नीयते नरकं मूढो यत्र पापं विपच्यते।
यस्य पापाद् भयं नास्ति स पापं कुरुते बहु ॥ ६९ ॥

स पापानन्तसन्दग्धः पश्चान्नरकमाप्नुते।
(अपि) सूक्ष्माग्निकणिका यथा दाहाय कल्पते ॥ ७० ॥

**पापविरहिताः सुखमिच्छन्ति**

अन्यैरपि तथा पापैर्नरकं यान्त्यबुद्धयः।
अपापभीरुता तस्मात् कर्तव्या सुखमिच्छता ॥ ७१ ॥

हिंसा मिथ्यावचोऽब्रह्मचर्यं भूयः सुखोदयम्।
[1]आह्रीक्यमनपत्राप्यमौद्धत्यं पापमित्रता ॥ ७२ ॥

**विषाग्निसदृशं पापम्**

विषाग्निसदृशा ह्येते तेभ्यो रक्षेत् प्रयत्नतः।
दुःखं हि मारधर्मोऽयं सुखं धर्मसमन्ततः ॥ ७३ ॥

**सुखदुःखयोर्लक्षणम्**

लक्षणं ( सुख ) दुःखानां विदुस्तत्त्वविदो जनाः।
सत्यं दानं तथा क्षान्तिः सदा चापापमित्रता।
मैत्री सदाभिभूतेषु प्रस्थानं त्रिदिवस्य (हि) ॥ ७४ ॥

---

1. अस्य व्याख्यानं पूर्वं (१४/१९) प्रपञ्चितम्।

॥ इति पापवर्गः पञ्चदशः ॥

卐

# (१६) नरकवर्गः

**अष्टौ नरकाग्नयः**

कृत्वा दुष्कृतकर्माणि सत्त्वा विषमजीविनः।
या गतिः प्रेत्य गच्छन्ती तानपायान् (हि मे) शृणु ॥ १ ॥

सञ्जीवं कामसूत्रं च सम्पातं द्वौ च [1]रौरवौ।
तमोपरं महाचित्रपतनं च प्रतापनम् ॥ २ ॥

इत्येते नरका अष्टावाख्याता दुरतिक्रमाः।
रौद्रकर्माभिसङ्कीर्णाः प्रत्येकं क्षोभदा (मताः) ॥ ३ ॥

**नरकाग्नीनां भयानकत्वम्**

चतुःस्कन्धाश्चतुर्द्वारा विभक्ता भागशो मिताः।
अयः प्राकारपर्यन्ता अयसा प्रतिदुःखिताः ॥ ४ ॥

तप्तायोमयसं भूमिर्ज्वलन्ती तेजसोद्गता।
अनेकयोजनशतं दहति स्वर्चिषा ( भृशम् ) ॥ ५ ॥

---

1. नरकं प्रेततिर्यञ्चो मानुषाः षड्दिवौकसः।
   कामधातुः स नरक-द्वीपभेदेन विंशतिः ॥

एवं नरकलोकः, प्रेतलोकः तिर्यक्लोकः मानुषलोकः, षड्देवाः चातुर्महाराजिक-त्रयस्त्रिंश-याम-तुषित-निर्माणरति-परनिर्मितवशवर्तिन इति।

नरका अष्टौ ( संजीव-कालसूत्र-संघात-रौरव-महारौरव-तपनप्रताप-नाऽवीचयः ) द्वीपाः चत्वारः-जम्बूद्वीप पूर्वविदेहाऽवरगोदानीयोत्तरकुरवः।

इत्थं नरक-द्वीपभेदसङ्ग्रहेण—८+४) द्वादश+षड्देवलोकाः +( प्रेत-तिर्यञ्च इति चत्वारः ) सर्वे द्वाविंशत्संख्याकाः कामधातुशब्द वाच्या।

त्रिषु धातुषु नरक-प्रेत-तिर्यङ्-मानुष-देवनामभिरुक्ताः पञ्चगतयः। नरके जायमानाः सर्वे एव सत्त्वा उपपादुका एव। नारकवत् अन्तराभवाः देवाश्च उपपादुका एव भवन्ति, न अण्डज-जरायुज-संस्वेदजाः।

नारकाः सत्वा ऊर्ध्वपादा भूत्वा नरकस्थानेषु गच्छन्ति। तथाहि—

एते पतन्ति निरये उद्धपादा अवंसिरा।
इसीनं अतिवत्तारो संयतानं तपस्सिनम् ॥
—सुत्तनिपाते।

कन्दर्पदमना घोरा अर्चिष्मन्तो दुरासदाः ।
रोमहर्षणरूपास्तेऽप्याहुर्दुःखा भयानकाः ॥ ६ ॥

**नरके पतिता भृशं तप्यन्ते**

एते पतन्ति नरके ऊर्ध्वपादा अवाङ्मुखाः ।
ऋषीणामतिवक्तारः संयतानां तपस्विनाम् ॥ ७ ॥

ते पुनस्तत्र पच्यन्ते तप्ताम्भसि कृता इव ।
क्रन्दमाना दिवारात्रौ, नगा वातेरिता इव ॥ ८ ॥

प्रणदन्ति महानादं तीव्रदुःखैः प्रतापिताः ।
सर्वा दिशश्च धावन्ति नारकैः पुरुषैर्वृताः ॥ ९ ॥

कुदृष्ट्या मोहयित्वार्थे मोहपाशावृतो जनः ।
प्राप्नोति नरकं घोरं कारणोदधिसंवृतः ॥ १० ॥

कुदृष्ट्या दग्धसर्वस्वो मनुष्यः पुरुषाधमः ।
तथा बद्धोऽस्ति नरके मानिनां घोरकारणम् ॥ ११ ॥

ये मिथ्यावशमापन्नाः पुरुषा मन्दमेधसः ।
ते सर्वे नरकं यान्ति चित्तैर्हि[1] परिवञ्चिताः ॥ १२ ॥

**कुकृतफलम्**

यस्त्वया दुष्कृतं पूर्वं कृतं चित्तानुवर्तिना ।
तस्य भुङ्क्ष्फलं मूढ विपाकोत्तम (माप्स्यसि) ॥ १३ ॥

हार्याणि परिचित्तानि, संसेव्याः परयोषितः ।
ह्रस्वा(हि) जन्तवो नित्यं स्वचित्तपरिवञ्चिताः ॥ १४ ॥

तस्य कर्मविपाकस्य वश एव[2] त्वमागतः ।
किं क्रन्दसि स्वयं कृत्वा कुकर्म पुरुषाधम ! । १५ ॥

ये नराः कुकृतं कृत्वा पञ्चत्वं यान्त्यमेधसः ।
येषां तु निष्फलं जन्म बीजमुप्तं यथोषरे ॥ १६ ॥

अल्पमाधुर्यसंयुक्तान् कामान् कटुविपाकिनः ।
सेवते यस्त्वसौ मूढः स याति तमसो तमः ॥ १७ ॥

किं कृतं मूढ भवता[3] पुत्रदारसुखार्थिना ।
दहस्ये नरके चैकः[4] स्वकर्मफलवञ्चितः ॥ १८ ॥

---

१. चित्तानि–क, २. मद्य–क,
३. कृत्वा–क, ख । ४. एकाकी–क, ख ।

## केषां दुष्करं जीवनम् ?

यः पुत्रदारवशगः सेवते दुष्करं नरः।
स याति नरकत्वं (च) पापं तदनुभूयते ॥ १९ ॥

न दारा न सुता नार्थं न मित्राणि कथञ्चन।
मृत्युकाले समुत्पन्ने रक्षन्ति समुपस्थिताः ॥ २० ॥

येषां सांक्लेशिकं चित्तं तृष्णया परिवञ्चितम्।
सहायता कुतस्तेषां कस्मात् (त्वं) परितप्यसे ? ॥ २१ ॥

हृतोऽसि पूर्वविषयैस्तृष्णया परिवञ्चितः।
किं क्रन्दसि स्वयं कृत्वा कुकृतं मूढचेतनः ॥ २२ ॥

न तथाग्निर्न शस्त्राणि न विषं नारयः स्थिताः।
बाधते पुरुषं लोके यथा दुष्कृत्यमात्मजम्[1] ॥ २३ ॥

## पक्षिणां नीडवासवत् भवचक्रम्

दिग्भागे हि यथा गत्वा संश्रयन्ते वनस्पतीन्।
विहगाः कालमुत्थाय तथा प्राणिसमागमः ॥ २४ ॥

नाशयित्वा परं द्रव्यं[2] कृत्वा लोकव्यतिक्रमं।
किं करोत्यशुभं कर्म मोहेन परिवञ्चितः ॥ २५ ॥

येन[3] याति परां शान्ति येन यात्यसुरालयम्।
तत्र हेतुः परं मोहस्तमसामपि यत् तमः ॥ २६ ॥

## कुटुम्बाय कृतं पापं नरके पातयति

पुत्रदारमयैः पाशैश्चानीता नरकालयम्।
यदर्थं क्रियते पापं युष्माभिश्चित्तवञ्चितैः ॥ २७ ॥

मित्राणि पुत्राः (पितरौ किं)बन्धुजन-बान्धवाः।
येषामर्थे कृतं पापं भवद्भिर्मन्दबुद्धिभिः ॥ २८ ॥

नूनमात्मा न ते कान्तो बभूव नरभूमिषु।
येन त्वया कृतं पापं पुत्रार्थेन नराधमः ॥ २९ ॥

येन पूर्वकृतं पापं पश्चान्न परितप्यते।
स याति नरकं घोरं पुत्रकारणवञ्चितः ॥ ३० ॥

---

१. कौकृत्य–क, ख। २. ग्रीवै–क, ख। ३ यन्न–ख।

**पापकर्म–फलम्**

किं करिष्यन्ति पुत्रास्ते किं दाराः किं च बान्धवाः ।
दहस्यनादिनरके वह्निः[1] कर्म दुनोत्यसौ ॥ ३१ ॥

स्वयं कृत्वाऽशुभं कर्मासुखोदयमनिन्दितः ।
तप्यसेऽपि वृथाधानः पश्चान्मोहेन वञ्चिकः ॥ ३२ ॥

रागद्वेषानुगाः पापं मोहेन परिवञ्चिताः ।
अघं प्रयान्ति ते सर्वे पुत्रदारसुखार्थिनः ॥ ३३ ॥

अन्तर्गतेन च पुनर्बहिःस्थेन च वह्निना ।
दह्यमानो (हि) दुःखेन नरके पापकर्मणा ॥ ३४ ॥

वशं प्राप्ताः स्वचित्तस्य सर्व एव विडम्बिताः ।
किं क्रन्दसि वृथा नादे वह्निना परितापितः ॥ ३५ ॥

**पापानुगफलं दृष्टम्**

अथ[2] पापानि कर्माणि कृतवानसि मन्यसे ।
दुर्मते तत्र मा क्रन्द किं वृथा परिदेवसे ॥ ३६ ॥

पापेषु रक्ष्यते मूढः कारणाशुचि रक्ष्यते ।
पापानुगफलं दृष्टं हेतुप्रत्ययसम्भवम् ॥ ३७ ॥

कस्मान्न सेवितो धर्मः पापञ्च नहि वर्जितम् ।
पापाद् बहिश्च पुरुषो नरकं नैव पश्यति ॥ ३८ ॥

यो न विन्दन्ति मूढात्मा फलं पापस्य कर्त्तृकम् ।
सोऽवश्यं लभते दोषान् कथं भोक्ष्यसि दुर्मते ॥ ३९ ॥

पापेन वञ्चित पूर्वं पापेन परिदह्यते ।
न करिष्यसि पापानि त्वदुःखेनैव यास्यसि ॥ ४० ॥

कृतवानसि पापानि शुभानि न कथञ्चन ।
पापेन दह्यते तस्मादशुभे न मनः कृथाः ॥ ४१ ॥

**किं दुःखादपि दुःखम् ?**

नास्ति दुःखादतो दुःखं यः पापमनुसेवते ।
तस्मात् पापं न सेवेत यदि दुःखं न[3] वाञ्छसि[4] ॥ ४२ ॥

---

१. पापकर्मपथ्य–क, ख ।
२. यथा–क, ख ।
३. दुःखं–क ।
४. विद्यते–क, ख ।

**कः लघुतां याति ?**

रूपैश्वर्यकुलादीनि भिद्यन्ते ( यस्य ) देहिनः ।
भयप्रदं तं मातङ्गः प्रयान्तं नैव पश्यति ।। १३ ।।

उद्‌वृत्तः पुरुषो नित्यं प्रमादाकुलितेन्द्रियः ।
लघुतां याति लोकेऽस्मिन् प्रेत्यपापेषु पच्यते ।। १४ ।।

रूपैश्वर्यमदार्था ये ते नराः पापकारिणः ।
तेषां न सुशमं ( कर्म ) प्रेत्यपापेषु पच्यते ।। १५ ।।

रूपैश्वर्यकुलार्था ये न ते तत्त्वस्य भागिनः ।
अतत्त्वबुद्धयो बाला न तरन्ति भवार्णवम् ।। १६ ।।

**ज्ञानशीलादियुतं कुलं श्रेष्ठम्**

एतत्कुलं ये विभवा यच्चान्यत् सुखमिष्यते ।
सर्वाण्येतान्यनित्यानि तस्मात्तेषु न विश्रमेत् ।। १७ ।।

न ज्ञानशीलनिर्मुक्तं कुशलं यान्ति पण्डिताः ।
येषां ज्ञानं च शीलं च ते कुले महति स्थिताः ।। १८ ।।

चरितुं चामलं शीलं शीलमेव महाद्‌भुतम् ।
महाकुलप्रसूतास्ते ( पण्डिताः ) वशमानिनः ।। १९ ।।

दानशीलतपोध्यानसत्यैश्वर्यपराक्रमैः ।
संयुक्ता ये कुलीनास्ते ये न धर्मविवर्जिताः ।। २० ।।

नैश्वर्यज्ञानहीनस्य न कुलं नापि सङ्गतिः ।
तस्मात्कुलं ज्ञानमयं ज्ञानहीनं न तत् कुलम् ।। २१ ।।

।। इति मित्रवर्गश्चतुस्त्रिंशः ।।

# (३५) राजापवादवर्गः

## धार्मिको राजा स्वर्गं याति

भुवं परिजनो पश्यन् धर्मचारी जितेन्द्रियः ।
स राजा धार्मिको धीमान् स्वर्गलोकोपपत्तये ॥ १ ॥

## कः लोभनिर्मुक्तो राजा ?

नियतं यः करं काले धर्मेण परिभुज्यते ।
स राजा लोभनिर्मुक्तो यामानामधिपो भवेत् ॥ २ ॥

## राज्ञः स्वरूपम्

क्षमावान् प्रियवाक्यो यः क्रोधहर्षादिधारकः ।
स महीं पालयेत्त्वेनां लोके हि श्रेष्ठतां गतः ॥ ३ ॥

अपक्षपातिनः श्रद्धा मित्रेण च (वि)हन्यते ।
स राजन्यसभाजेता देवलोकाय कल्प्यते ॥ ४ ॥

बद्धदर्शी महात्मा यो गुरुपूजक एव च ।
अलोलो यो दृढमतिर्देवानामन्तिकं व्रजेत् ॥ ५ ॥

पूर्वे यत् पितृभिर्दत्तं देवानुपदिशन्ति च ।
न च हिंसति भूतानि स देवेषूपपद्यते ॥ ६ ॥

दानशीले सदा दक्षो धर्मवादी जितेन्द्रियः ।
स मत्वार्यां महीं कृत्स्नां देवलोकं महीयते ॥ ७ ॥

नाधार्मिकं धारयति धार्मिकेषु च रक्षति ।
स धर्मशीलसंशुद्धो देवानामन्तिकं व्रजेत् ॥ ८ ॥

न स्त्रीणां वशगो राजा साधूनां च वसेत् सदा ।
स निर्मलमतिर्धीरः सुरलोकोपपत्तये ॥ ९ ॥

न सर्वस्य वचोग्राही प्रियः साधुजनस्य तु ।
सोऽमृतस्तत्त्वदर्शीवा नाकृष्ट इव रोहति[1] ॥ १० ॥

---

१. हविष्यं–क, ख ।

तस्य तीव्रविपाकस्य फलमद्योपभोक्ष्यसे ।
हेतुप्रत्ययसादृश्यं विपरीतं न कल्प्यते ॥ ७० ॥

हेतुः कृतो यथा पूर्वं तथा फलमवाप्स्यसि ।
यथा तव तथाऽन्येषां प्राणरक्षा प्रयत्नतः ॥ ७१ ॥

कस्मात् प्राणातिपातास्ते कृताः पापानुवर्तिना ।
प्राणत्यागेन पुरुषैर्यद् धनं समुपार्जितम् ॥ ७२ ॥

कर्मोदयकृतं तत्ते यत्त्वया समुपार्जितम्[१] ।
सर्वेषां दयिता दाराः प्राणेभ्योऽपि गरीयसः ॥ ७३ ॥

तत्त्वया रागरक्तेन कस्मादपकृताऽवनात् ।
बुद्धेर्व्यामोहजनकं धर्माणां दूषणं परम् ॥ ७४ ॥

धर्मपानं त्वया कार्यं[२] कर्मानुपरिवर्जितम् ।
जिह्वाविषसमुत्थं यत् सर्वाप्रत्ययकारकम् ॥ ७५ ॥

मृषावादं त्वया पापं कर्माऽनुपरिवर्जितम् ।
एवं पञ्च-विधेयेषु यस्मात् त्वमनुरक्तवान् ॥ ७६ ॥

तस्मात् संमुक्ष्य मा रोदि किं वृथा परिदेवसे ।
विषयं पापका धर्मा यस्मान्नु परिवञ्चितः ॥ ७७ ॥

तस्मात् प्राप्नोषि नरकं ज्वालामालाकुलं महत् ।
एतत् तृष्णाग्निना सर्वं प्रदीप्तं भुवनत्रयम् ॥ ७८ ॥

## धर्माचरणे सावहितेन भवितव्यम्

दृष्ट्वा नाचरितो धर्मः किमद्य परितप्यसे ।
( श्रुत्वा ) ते मधुरं चित्तं काममन्दिरकं वचः ॥ ७९ ॥

उदीरिते महापापे तस्मै तत्फलमागतम् ।
स कृत्वा पापकं कर्म नियता पापवेदना ॥ ८० ॥

करुणं विकलं दीनं किमद्य परितप्यसे ।
कर्मक्षयेण नरकात् मुच्यन्ते पापकारिणः ॥ ८१ ॥

विक्रोशमग्ना बहुशो न मुच्यन्ते कथञ्चन ।
अनिष्टं पापकं कर्म कृत्वा रोगवशे स्थिताः ॥ ८२ ॥

---

१. धनकाङ्क्षिन (ण)–क, ख ।    २. पापं–क, ख ।

**अज्ञानिनोऽशुभमाचरन्ति**

परिदेवति यो मूढो वृथा स परिदेवति।
अनागतफलज्ञो यः प्रत्युत्पन्नशुभे रतः ॥ ८३ ॥

क्रोशते नरके नासौ यथा त्वमनुतप्यसे।
मया कृतानि कर्माणि फलदानि ममैव हि ॥ ८४ ॥

रोगेण शत्रुणा दग्धः पश्चान्नरकमागतः।
प्रमादभूमिरशुभा रागदग्धस्य देहिनः ॥ ८५ ॥

तेन पाशेन बद्धोऽहं गतोऽवस्थामिमां भृशम्।
दुराचाररतानां तु नृणामस्य फलं कटु ॥ ८६ ॥

अज्ञानबाधितोऽस्मीति स्वकृतं भुज्यते मया।
निर्दयानां सुघोराणां पापानां वशमागतः ॥ ८७ ॥

**मुक्तिः कथं स्यात् ?**

मुक्तिरस्मात् कथं स्याद्वै दुःखसंसारसागरात्।
दुःखाद् दुःखतरं कर्म मयेदं परिपच्यते ॥ ८८ ॥

सुखावाप्तिं न पश्यामि क्षेमं वा नरकस्य मे।
जीवलोकादहं भ्रष्टो अबुद्ध इव मार्गतः[१] ॥ ८९ ॥

जीवोऽयं विवशो भूत्वा[२] विकृतैः परिवारितः।
ज्वालामालाकुलं सर्वमन्तरिक्षं निरन्तरम् ॥ ९० ॥

दिशश्च[३] त्रिदिशश्चैव पृथि(वी) च निरन्तरा।
कृपणोऽज्ञानगो[४] दुःखी निवासं नोपलक्षये ॥ ९१ ॥

क्षुरधाराविततप्तस्य नृपस्यास्यातिभीषणम्।
कान्तारे बाह्यमानस्य निःसहायस्य सर्वतः।
त्रातारं नावगच्छामि योऽस्माद् दुःखात् प्रमोचयेत् ॥९२॥

निःशक्तिरवशो दुःखी वह्निना परितापितः।
नीयेऽहं विवशः क्वापि बाहुबन्धनयन्त्रितः ॥ ९३ ॥

न वाऽर्था नापि मित्राणि न पुत्रा न च योषितः।
त्रायन्ते व्यसनादस्मात् कृतघ्ना बत ते मम ॥ ९४ ॥

---

१. भ्रष्टः मार्गादिवाबुद्धः–क, ख।
२. भूतं–क, ख।
३. दिवसश्च–क, ख।
४. कृपास्यास्यवसौ–क, ख।

## अधर्मचारिणो न क्वापि शरणम्

निरानन्दस्य न सुखं दुःखं ( गृह्णामि सर्वशः ) ।
मृत्युपाशेन बद्धस्य शरणं नोपलक्ष्यते ॥ ९५ ॥

संक्रुद्धा इव ते[1] क्रूरा भविष्यन्ति समन्ततः ।
निरानन्दा दिशः सर्वा व्यालैश्च परिवारिता ॥ ९६ ॥

नरकं पातकस्यैव पतेयं धृतिभावतः ।
यच्च यच्चेहं पश्यामि जङ्गमं स्थावरं तथा ।
तत् सर्वं व्याकुलं चैव वह्निना परिदीपितम् ॥ ९७ ॥

नाधिगच्छामि शरणं निःसहायोऽस्मि सर्वतः ।
घोरे तमसि मज्जामि सागरे च हृतप्लवः ॥ ९८ ॥

गगनं नैव पश्यामि नक्षत्रग्रहतारकम् ।
विपरीतमिदं सर्वं तमसा परिवारितम् ॥ ९९ ॥

पञ्चेन्द्रियाणि सर्वाणि विरतानि हि सर्वतः ।
क्रकचैस्तु तदा सर्वं शरीरं परिपाटचते ॥ १०० ॥
नाधिगच्छामि शरणं कामं बन्धो भविष्यति ।
वर्धन्ते दुःखनिकरा सर्वतः परिवारतः ॥ १०१ ॥

मुहुर्मुहुश्च वर्धन्ते वेदनाश्चितदेहजाः ।
दुःखैश्च ( परिवर्धन्ते ) निस्सहायं च सर्वतः ॥ १०२ ॥

समीक्ष्य कर्मजं नित्यं ध्येयो हेतुः पुनः पुनः ।
कथयन्ति सुखं वृद्धाः स्वकर्मफलजैर्दृढम् ॥ १०३ ॥

यत् पूर्वं करणीयं ते तत्पश्चात् परिचिन्त्यसे ।
मोहेन वञ्चितः पूर्वं किमद्य परितप्यसे ।
किं पुनः पापकर्त्तुर्यः कटुकं परिपच्यते ॥ १०४ ॥

अनेकदुःखहेतूत्थं[2] तव[3] दुःखं भविष्यति ।
त्राणं नैव (च) यत्रास्ति विना कर्मपरिक्षयात् ॥ १०५ ॥

एवं सत्यस्य नाशेन[4] यमदूतैरनेकशः ।
नीयते नरकं घोरं कर्मपाशवशङ्गतः ॥ १०६ ॥

---

१. मा—क ।
२. भूतते—क, ख ।
३. तस्या—क, ख ।
४. सत्यनामानासौ—क, ख ।

चतुष्कोणश्चतुर्द्वारो विभक्तो भागशो मितः।
पच्यते यत्र विवशा नारकेया ह्यनेकशः॥ १०७॥

भेदप्रायेण बहुशो यस्त्वया कथितं बहु।
कल्मषं भूतधर्माणां तस्यैतत् फलमागतम्॥ १०८॥

**पैशुन्यसेविनो नरकं यान्ति**

भस्मीभवन्ति ते नित्यं मित्रस्वजनबान्धवैः।
एषामभिमतं दुष्टं पैशुन्यं सद्भिर्गर्हितम्॥ १०९॥

तस्मान्न चरितो धर्मः पैशुन्यं च न वर्जितम्।
पैशुन्यं सफलं भुक्त्वा किमद्य परितप्यसे॥ ११०॥

जिह्वाधनविनिर्मुक्तं तीक्ष्णं विषमुच्छ्रितम्।
पारुष्यमिति सन्दृष्टमहो! तत्फलमीदृशम्॥ १११॥

सत्त्वं पारुष्यपरमं घोरं नरकमागतम्।
जिह्वायातं तवाकृत्यै किमद्य परिदेवसे॥ ११२॥

सहस्रगुणपर्यन्तः स्वतो हृदयसम्भवः।
क्षुत्पिपासामयो वह्निः समादहति मारुतम्॥ ११३॥

**परुषवाचो नरकस्य चान्तरम्**

यदन्तरं हिमाग्न्योर्हि मेरुसर्षपयोश्च यत्।
तदन्तरं जिह्वयोक्त्या नरके ज्वलनस्य च॥ ११४॥

नरकप्रभवो वह्निर्न क्वाऽप्यन्यत्र प्राप्यते।
क्षुत्पिपासामयो वह्निर्देवेष्वप्युपलभ्यते॥ ११५॥

यो ह्यतः कारणात्तीक्ष्णो वह्निर्भवति[१] नारकः।
न तथा स प्रभवति यथा वह्निस्तदुद्भवः॥ ११६॥

पूर्वोत्तरा बद्धपदं निरर्थकमसङ्गतम्।
विस्रब्धं यत्त्वया प्रोक्तं तस्यैतत्फलमागतम्॥ ११७॥

परेषां सम्पदं दृष्ट्वा मम स्यादिति चिन्तितम्।
तमोऽभिध्यासमुत्थस्य विषस्य फलमागतम्॥ ११८॥

व्यापारानलदग्धोऽसि मानुष्यं पुरुषाधम!।
दहनाद् दहनं प्राप्तो[२] तप्यसे च विकत्थ्यसे॥ ११९॥

---

१. नरवेममः–क, ख। २. प्राप्त विकथाये च तप्यसे–क, ख।

व्यापारपरमोहे तु नरकायोपपत्तये ।
रज्ज्वैतयैव बद्धोऽसि पुरुषः परिक्रन्दसे ॥ १२० ॥

व्यापादेनाकृष्टोऽसि घोरं नरकमागतः ।
कर्मक्षयाद् भवेन्मोक्षो नरकाच्च विमोक्ष्यसे[1] ॥ १२१ ॥

## अधर्मकथनं दहत्येव

अधर्मो धर्मरूपेण साधुरूपेण पापकम् ।
यत् त्वया कथितं पूर्वं तत् त्वां दहति नानलः ॥ १२२ ॥

कथं तत्त्वविनष्टानां धर्माधर्मनिच्छताम् ।
देशितं विवरं पापं नियतं पापगामिकम् ॥ १२३ ॥

(यस)त्वया वर्जितो धर्मः साधवश्चापि निन्दिताः ।
यत्त्वयोपार्जितं कृष्टं तत्त्वयाऽद्य विपच्यते ॥ १२४ ॥

तृष्णाविषययुक्तेन मोहवेगेन सर्वदा ।
यतः सधर्मविनयैः किं तथा परिदेवसे ॥ १२५ ॥

स भवेत् पापकृन्नित्यं मोहपाशवशङ्गतः ।
किं तप्यसे रोदिषि च कर्म कृत्वा सुदारुणम् ॥ १२६ ॥

हेतुप्रत्ययमूढस्य धर्माधर्मेषु सर्वदा ।
प्राप्तोऽसि नरकं घोरं नारकाग्रं सुदारुणम् ॥ १२७ ॥

## कामवशानुगा नरकं यान्ति

कामैः क्रमति संयुक्तैर्यन्न भवति चेष्टितम् ।
सुकृतं कर्मविरसं फलमेतदुपस्थितम् ॥ १२८ ॥

क्षपयित्वा प्रमादेन सुखासक्तेन चेतसा ।
सुकृत नरकं यान्ति देवाः कामवशानुगाः ॥ १२९ ॥

## आर्यापवादका नरकं यान्ति

[1]आर्यापवादका ये च ये च कर्मफलद्विषः ।
ते मृत्वा नरकं यान्ति ये च मिथ्याविनीतकाः ॥ १३० ॥

---

1. आर्यस्तु कामवैराग्यं करोत्यनुशयानपि ।
चतुरः परिजानाति पर्यादत्तेऽपि च त्रयम् ॥

एवं प्रतिघकामरागमानाविद्याख्यानभावना हेयान् प्रतिघेर्ष्यामात्सर्यसंयोजनाख्यम् । आर्य इति वर्तते । रागमानाविद्याख्यानम् । एतदेव तस्यास्तदुपर्यभावात् । —अभिधर्मदीपे-९७ ।

---

१. विचेस्तनात्–क, ख ।

**धर्मवञ्चका एव नरकगामिनः**

जननीगृहपापीया ये चान्ये धर्मवञ्चकाः ।
तेषामिष्टकरा लोके नरकस्य च गामिनः ॥ १३१ ॥

**पापरता दुःखमनुभवन्ति**

ये चान्ये सुखसंसक्ता नित्यं पापरता नराः ।
दुःखाद् दुःखं तु ते यान्ति चित्तेन परिवञ्चिताः ॥ १३२ ॥

**अवद्यकार्याणि नरके पातयन्ति**

तस्मादवद्यकार्ये न मतिं (कुर्यात् कथञ्चन) ।
हीनान्यवद्यकार्याणि नरके पातयन्ति च ॥ १३३ ॥

**अतः कुशलकर्माणि कर्त्तव्यानि**

(कर्माणि) कुर्यात् कुशलानि नित्यं
परार्थबद्धेन मनोरथेन ।
(हितः सदैवं नरकस्य रोधी)
सेव्योऽपवर्गो[१] [1]दशधर्म एषः ॥ १३४ ॥

॥ इति नरकवर्गः षोडशः ॥

●

1. अस्य व्याख्यानं पूर्वं (६|१४५) प्रपञ्चितम् ।

१. सेव्योपर्गोस्य—क, ख ।

## (१७) प्रेतवर्गः

### अदानस्य कुतः सुखम् ?

अदान्तस्य कुतः शान्तिरनुप्तस्य कुतः फलम् ? ।
अदीपिका प्रभा नास्ति अदानस्य कुतः सुखम् ॥ १ ॥
हृच्छान्तिर्हि तथा नास्ति नयनार्थस्य देहिनः ।
दानेन विरहात् तद्वत् सुखं प्रेतैर्न लभ्यते ॥ २ ॥

### कुकर्मी प्रेतलोकं गच्छति

यं प्रेत्य प्रेतलोकस्य त्रिलोके च यथाऽधमाः ।
भ्रमेण[१] परमोद्विग्नास्तन्मात्सर्यकृतं फलम् ॥ ३ ॥
न दात्रा[२] लभ्यते किञ्चित् कृतनाशो न विद्यते ।
स्वकर्मफलभोक्तारः प्राणिनः कर्मभोगिनः ॥ ४ ॥
तव यत्कुकृतं दग्धाः प्रेत्यलोकेष्ववस्थिताः ।
क्षुत्पिपासामयेनेह वह्निना परिदीपिताः ॥ ५ ॥
कदा तु विषयोऽस्माकं भविष्यति सुखोदयः ।
परिदाहात् कदा चास्मात् परिमोक्षो भविष्यति ॥ ६ ॥

### मार्गामार्गविहीनो दुःखित एव जीवति

[1]मार्गामार्गविविक्तोऽहं न ज्ञातं कर्मणः फलम् ।
क्षुत्पिपासामयो वह्निरज्ञातः प्रकटोदयः ॥ ७ ॥

---

1. लौकिक-लोकोत्तर-दर्शन-भावना-ऽशैक्ष्य - प्रयोगाऽऽनन्तर्य-विमुक्ति-विशेषा - इति मार्गा हि उक्ताः। तत्र (४) प्रयोगमार्गो यस्यादानन्तर्यमार्गोत्पत्तिः। (३) आनन्तर्यमार्गः (क्षान्तिस्तत्राऽऽनन्तर्यमार्गः, ज्ञानं च विमुक्तिमार्गः। क्लेशविच्छेदेऽन्तरयितुमशक्यत्वात् आनन्तर्यमार्गः। विमुक्तौ मार्गः क्लेशविमुक्त्यवस्थामार्ग इति। यथा द्वाभ्यां, एकेन चौरो निष्कास्यते, द्वितीयेन तदप्रवेशाय कपाटः पिधीयते। एवम् आनन्तर्यमार्गेण क्लेश चौरो निष्कास्यते, तत्प्राप्तिच्छेदतः। विमुक्तिमार्गेण च विसंयोगप्राप्तिकपाटं पिधीयते वर्त्तमानीकरणतः।

एवं दुःख-धर्मज्ञान-क्षान्तित आरभ्य मार्गेऽन्वयज्ञानक्षान्तिपर्यन्तं पञ्चदशक्षणदर्शनमार्गः। यतोऽदृष्टस्य दर्शनम्, येन आवरणप्रहाणम्।

---

१. भ्रमति–ख।  २. दातु–क, ख।

क्लेशान्धकारवदना निराशास्त्यक्तजीविकाः ।
त्वक्स्नायुजालबद्धाः स्म जीवामो बत दुःखिताः ॥ ८ ॥

न त्राता सर्वतोऽस्माकं हन्त कृच्छ्रगता वयम्[१] ।
उत्पन्नेषु मनुष्येषु खण्डिताः स्वेन कर्मणा ॥ ९ ॥

कस्मान्न चरितो धर्मो रत्नदीपेषु सञ्चितः ।
यः करोति शुभं नित्यमशुभं न च सर्वदा ॥ १० ॥

समदृष्टिपथेनैति स्वर्गसोपानमाश्रितः ।
येषामर्थे कृतं पापं क्लेशयन् मानसं बहु ॥ ११ ॥

अनेन ते गताः सर्वे भवानां त्रासने स्थितः ।
बद्धोऽसि बन्धनैस्तीव्रैर्यमदत्तैरधिष्ठितः ॥ १२ ॥

**पापरज्ज्वाऽऽकृष्यमाणः स्वकृतं भुनक्ति**

प्राप्तोऽसि तमसो घोरं यमलोकं दुरासदम् ।
इहोपभोक्ष्यसे कर्म यत्त्वया कुकृतं कृतम् ॥ १३ ॥

स्वकृतं भुज्यते बाल ! परेषां[२] नैव भुज्यते ।
आकृष्यमाण एषोऽत्र पापरज्ज्वा सुघोरया ॥ १४ ॥

अनलः[३] प्रेतलोकस्य क्षुत्पिपासामयो महान् ।
नाग्निशस्त्रविषाणां हि निपातस्तादृशः कटुः ॥ १५ ॥

क्षुत्पिपासामयाग्नेश्च निपातो यादृशः ( कटुः ) ।
न क्षणो नापि हि लवो न मुहूर्तो न शर्वरी ॥ १६ ॥

**दुःखान्विता वयम्**

यत्र सौख्यं भवेन्मृत्युर्नित्यं दुःखावृता वयम् ।
दुःखाद् दुःखतरं प्राप्तो दुःखहेतुर्निषेवितः ॥ १७ ॥

---

आवरणनाशानन्तरं (२) विमुक्तिमार्गः । (१) सर्वतो भिन्नोत्कृष्टश्च विशेष-मार्गः । विमुक्तिविशेषमार्गः ताभ्यां निरुपाधिशेषे निर्वाणे प्रवेशः । मार्गः प्रति-पदप्युच्यते, तेन हि निर्वाणं प्रतिपद्यते, तत्र चत्वारो मार्गाः–सुखा प्रतिपद्, दुःखा प्रतिपद्, धंधाभिज्ञा, क्षिप्राभिज्ञा च ।

—अभिधर्मकोशः—६।६५ ।

---

१. कान्तारमग्रदेहानां दुःखितानाञ्च सर्वतः–ख ।

२. पारुष्यं–क, ख ।

३. आनिता–क, ख ।

दुःखात् कदाचिन्मोक्षः स्याद् भविष्यति सुखोदयः ।
नोत्सवे दृश्यते तोयं तडागेषु च शुष्यति ॥ १८ ॥

**कर्मफलस्वरूपनिरूपणम्**

सरितो नाशमायासुः कथं धावामहे वयम् ।
ते वयं शुष्कसलिलाः सशैलवनकाननाः ॥ १९ ॥

परिधावामहे भूमौ नित्यं सलिलकांक्षिणः ।
ते वयं दग्धतनवः क्षुत्पिपासाहता नराः ॥ २० ॥

शरणं नाधिगच्छामः कष्टं व्यसनमागताः ।
वज्रदंष्ट्रैर्महातीक्ष्णैः काकोलूकैश्च सम्मतः ॥ २१ ॥

अभिद्रुतो न पश्यामि शरणं सौख्यदायकम् ।[1]
प्रतिबिम्बमिदं तस्य कर्मणः समुपस्थितम् ॥ २२ ॥

कृतं कर्म यथाऽस्माभिस्तथेदं फलमागतम् ।
कर्मवागुरया बद्धाः कर्मसूत्रेण पाचिताः ॥ २३ ॥

**कर्मक्षयावृते न मुक्तिः**

पलायनं न पश्याम ऋते कर्मक्षयादिति ।
यस्य पापान्यनिष्टानि वह्निवत् तानि पश्यति ॥ २४ ॥

**कीदृशं प्रेतभवनम् ?**

स नैति प्रेतभवनं क्षुत्पिपासानलावृतम् ।
मुहुर्मुहुः प्रवर्धन्ते वेदना नरकोद्भवाः ॥ २५ ॥

ज्वालामालाकुलस्यैव शैलस्य सदृशा वयम् ।
ज्वलितः शाम्यते शैलः सलिलेनैव सर्वथा ॥ २६ ॥

स समुद्रोपमो वह्निरस्माकं नैव शाम्यति ।
कस्मिन् क्षणे समुद्भूतस्तृष्णावायुसहायवान् ॥ २७ ॥

कर्माग्निर्निर्दहत्यस्मान् परिवार्यसमन्ततः ।
ते वयं पापकर्माणः शुक्लधर्मविवर्जिताः ॥ २८ ॥

प्रेतलोकमिमं प्राप्ताः स्वर्गस्य फलमोहिताः ।
क्षुत्पिपासामयो वह्निर्द्वितीयश्चाग्निसम्भवः ॥ २९ ॥

---

१. सौख्यदर्पणं–क ।

## कुकर्मणैव मुद्गराशिमया जनाः प्रेतभवनं गच्छन्ति

मुद्गराशिमया (दाराः) न पुत्राः न च बान्धवाः[१] ।
वञ्चितोऽस्मि स्वचित्तेन कर्मणा परिवञ्चिता[२] ।। ३० ।।

प्राप्तोऽस्मि प्रेतभवनं मित्रज्ञातिनिराकृतः ।
न दाराः नापि मित्राणि न पुत्राः नापि बान्धवाः ।। ३१ ।।

## कुकृतफलनिरूपणम्

त्रायते कर्मपाशेन नीयमानं बलीयसा ।
नान्यस्त्राता यथा कर्म त्रिविधं भुज्यते मया ।। ३२ ।।

दानं शीलं श्रुतं चापि त्रिविधं परिकीर्तितम् ।
मोहजालवृतेनेह यन्मया कुकृतं कृतम् ।। ३३ ।।

## शुभकर्मणैव प्रेतलोकात् मुक्तिर्भवति

कर्मणो हेतुभूतस्य यत्कृतं फलमागतम् ।
यदि मुच्यामहे पापात् प्रेतलोकाद् दुरासदात् ।। ३४ ।।

## अशुभानि कुकर्माणि विवर्जयेत्

न भूयः पापकं कर्म करिष्यामि कथञ्चन ।
उष्णान्युष्णविपाकानि महापीडाकराणि च ।
कुकर्माण्यशुभानीह तस्मात्तानि विवर्जयेत् ।। ३५ ।।

।। इति प्रेतवर्गः सप्तदशः ।।

---

१. चापितृतीयं भुजते मया—क, ख ।

२. परिमोहिता—क ।

## (१८) तिर्यग्वर्गः

### परद्रोहं कदापि न कुर्यात्

भक्षणं भवदन्योन्यवधबन्धावरोधनम् ।
[1]तिर्यग्योनिं समासाद्य तस्माद् द्रोहं विवर्जयेत् ॥ १ ॥

मोहोपहतचित्ताश्च शीलदानविवर्जिताः ।
तिर्यग्योनौ व जायन्ते बालास्तृष्णाविडम्बिताः ॥ २ ॥

गम्यागम्यं न विन्दन्ति भक्ष्याभक्ष्यं तथैव च ।
कार्याकार्यबहिर्भूता धर्माधर्मतिरस्कृताः ॥ ३ ॥

पञ्चेन्द्रियजरामूढास्तृष्णापाशवशानुगाः ।
क्रोधेर्ष्यामतिसंग्रस्तास्तिर्यग्योन्युपगा नराः ॥ ४ ॥

पर्येष्ट्युपहता मर्त्याः प्रमादोपहताः सुराः ।
क्षुत्तर्षव्यसनाः प्रेताः कारणात्ते च नारकाः ॥ ५ ॥

---

1. चतुर्धा नरतिर्यञ्चः नारका उपपादुकाः ।
अन्तराभवदेवाश्च प्रेता अपि जरायुजाः ॥

एवं मनुष्याः तिर्यञ्चः चतुर्धा अपि जायन्ते । तद्यथा अण्डजौ शैलोप-शैलनामानौ क्रौञ्चाण्डतो जातौ, मृगारमातुः विशाखाया द्वात्रिंशत्पुत्राः पञ्चाल-राजस्य पञ्चशतपुत्राश्च श्रूयन्ते, जरायुजा इदानीं सर्व एव स्वेदजा मन्धातृ-चारू-पचारू-कपोतमालिन्या-ऽम्रपालीत्यादयः, उपपादुकाः कल्पारम्भे जाय-मानाः सत्वाः ।

तिर्यञ्चोऽपि चतुर्धा जायन्ते, यथा-अण्डजाः पक्षिसरीसृपादयः, जरा-युजाः पशवः, संस्वेदजा मत्कुणादयः उपपादुकाः वर्षारम्भे शलभादयः, नागा गरुडाश्चोपपादुका अपि । नरके जायमानाः सर्व एव सत्वा उपपादुका एव । नारकवत् अन्तराभवाः ( मृतशरीरं विहाय परिग्रहीष्यमाण शरीरग्रहीतुं मार्गे वर्तमाना विज्ञानसन्ततयः ) देवाश्च उपपादुका एव भवन्ति, न अण्डज-जरा-युज-संस्वेदजाः । प्रेता जरायुजाः, अपि शब्देन उपपादुका अपि भवन्ति । तत्र एतेषु उपपादुका योनिरेव अतिसाधारण ॥

—अभिधर्मकोशः–३।९ ।

**के तिर्यग्योनिपरायणाः ?**

परस्परबधात्युक्तास्तिर्यग्योनिपरायणाः ।
एवं बहुविधैस्तैस्तैर्व्यसनैराकुलं जगत् ॥ ६ ॥

**मात्सर्योपहतो दुष्कृतं न कुर्यात्**

न कुर्याद दुष्कृतं कर्म मात्सर्योपहतः परम् ।
मात्सर्योपहता यान्ति प्रेतास्तिर्यक्षु जन्तवः ॥ ७ ॥

**केषां सफलं जन्म ?**

तेषां हि सफलं जन्म तेषां बुद्धिरवञ्चिता ।
ते च पूज्याः सदा सद्भिर्येषां धर्मे सदा मतिः ॥ ८ ॥

**ज्ञानरथावरूढैर्मुक्तिर्भवति**

एवं त्रिदोषाकृतकर्मसारं
जगद् भ्रमत्येव दुरावगाधम् ।
करोति यस्तस्य च शुद्धसत्त्वोऽ-
वमाननां ज्ञानरथावरूढः ॥ ९ ॥

॥ इति तिर्यग्वर्गोऽष्टादशः ॥

◈

## (१९) क्षुधावर्गः

### क्षुधापीडिता नरा अशुभं कुर्वन्ति

संसारे प्रायशो दुःखं त्रैधातुकक्षुधामयम् ।
येनेमे पीडिताः सत्त्वाः कुर्वन्त्यशुभमात्मनः ॥ १ ॥

स्वदेहे युक्तितो वह्निर्बुभुक्षेत्यधीयते ।
शेषो दहति लोकान् वै कल्पानल इव द्रुमान् ॥ २ ॥

लोकोत्तरमिमं वह्निं गच्छन्तमनुगच्छति ।
नात्मनिर्वाणसन्दृष्टं कल्पान्तरशतैरपि ॥ ३ ॥

नाऽनलस्य हि तद्वीर्यं क्षुधाया यादृशं बलम् ।
त्रैधातुकमिदं कृत्स्नमाहारं प्रति वर्तते ॥ ४ ॥

मोहयेद् विविधा चिन्ता लोके मनुजसम्भवाः ।
ताः सर्वा भोजनार्थाय भवन्ति त्रिभवार्णवे ॥ ५ ॥

### दुःखमनिर्वचनीयम्

अन्तराभवसंस्थस्य कृष्यमाणस्य कर्मभिः ।
दीर्घागमस्य यद् दुःखं न तद् वर्णयितुं क्षमम् ॥ ६ ॥

अविद्येन्धनमग्नस्य दह्यमानस्य चोष्मणा ।
गर्भस्थस्य हि यद् दुःख न तद् वर्णयितुं क्षमम् ॥ ७ ॥

आहाररसगृद्धस्य नित्यं तद्गतचेतसः ।
यद् दुःखं परगृद्धस्य न च वर्णयितुं क्षमम् ॥ ८ ॥

दृढा विदग्धमनसः कामे वा तप्तचेतसः ।
यद् भवत्यधिकं दुःखं न तद् वर्णयितुं क्षमम्[१] ॥ ९ ॥

अप्रियैः सह संसर्गो विषयास्तस्य नित्यशः ।
प्रणष्टे हृदि यद् दुःखं न तद् वर्णयितुं क्षमम् ॥ १० ॥

तृष्णाविषविदग्धस्य नित्यं पर्येषणात्मकम् ।
आमृत्यु यद् भवे दुःखं न तद् वर्णयितुं क्षमम् ॥ ११ ॥

---

१. भ्रमं–क ।

अव्युच्छिन्नं बहुविधं यद् दुःखं पापमित्रजम् ।
अपायजनकं यस्य न तद् वर्णयितुं क्षमम् ।। १२ ।।

व्यसनं पुत्रदाराणां यद् दृष्ट्(वा) हृदि जायते ।
नरकाणां महामार्गो न तद् वर्णयितुं क्षमम् ।। १३ ।।

क्षुत्पिपासाविदग्धस्य दीप्यमानस्य वह्निना ।
यद् दुःखं नष्टमनसो न तद् वर्णयितुं क्षमम् ।। १४ ।।

अजस्रं परिभूतस्य मित्रज्ञातिसुहृज्जनैः ।
यद् भवेच्छोकजं दुःखं न तद् वर्णयितुं क्षमम् ।। १५ ।।

दारप्रलम्बनगतं[१] दुश्चलं प्रियचेतसः ।
यद् दुःख जीर्णकायस्य न तद् वर्णयितुं क्षमम् ।। १६ ।।

मृत्युना ह्रियमाणस्य तस्माल्लोकात्मनो रसात् ।
यद् दुःखं जायते वृत्तौ न तद् वर्णयितुं क्षमम् ।। १७ ।।

**दानैरशुभनाशः**

यत् कुर्वन्त्यशुभं बाला यच्च गच्छति दुर्गतिम् ।
तदाहरति दानेन कथयन्ति मनीषिणः ।। १८ ।।

**अतः सुकृतेषु मनः कार्यम्**

प्रतिदुष्कृतकर्माणि वर्जनीयानि सर्वदा ।
सुकृतेषु मनः कार्यं दानशीलविभूषितम् ।। १९ ।।

।। इति क्षुधावर्ग एकोनविंशः ।।

## (२०) कौसीद्यवर्गः

**कौसीद्येन ज्ञानहानिः**

[1]कौसीद्यमतिमाया च दम्भः पारुष्यमेव च।
नियातभूमयो दृष्टा ज्ञानस्य च विवर्जनम् ॥ १ ॥

संश्लेषश्चाप्यसाधूनां साधूनां वर्जनं तथा।
नाशस्य हेतवः शक्ता मिथ्यादर्शनमेव च ॥ २ ॥

अदेशकालसंरंभो वाच्यावाच्यमजानतः।
अनर्थभूमयो ह्येता विस्रम्भश्चापि तन्मयः ॥ ३ ॥

**अनर्थभूमयः**

येन तेन च सम्प्रीतिः यत्र तत्र च भोजनम्।
लाघवं जनयत्यन्तेऽप्रशंसा चात्मनस्तथा ॥ ४ ॥

धैर्यनाशः स्मृतिभ्रंशो विरोधः पार्थिवेन च।
अक्रान्तमृत्यवो ह्येते क्रूरता मनसि स्थिता[1] ॥ ५ ॥

अकर्मफलतत्त्वज्ञो धर्माधर्मबहिष्कृतः।
पुरुषः साधुनिर्मुक्तः प्रपातगमनाशयः ॥ ६ ॥

कौसीद्यमतिनिद्रा च रसना गृह्यते तथा।
पुंद्वेषयोनयः प्रोक्ताः पारुष्यवचनं तथा ॥ ७ ॥

**लोभोऽपमानस्य कारणम्**

अतिलोभोऽपमानश्च अतिमानश्च चापलम्।
धर्मवर्ज्या कामसेवा मोहस्य परिदीपिका: ॥ ८ ॥

---

1. कुशलेषु अनुत्साहः कौसीद्यम्। एवं मोहादयः क्लेशमहाभूमिकाः। मोहोऽज्ञानम्। कुशलधर्मेषु भावनाविरतिः प्रमादः। यथोक्तम् आचार्यबसुवन्धुना—

मोहः प्रमादः कौसीद्यं अश्राद्धचं स्त्यानमुद्धतिः।
सर्वदा क्लिष्टे अकुशले त्वाऽह्रीक्यमनत्रपा ॥

— अभिधर्मकोशः—२।२६।

---

१. मनसंभवा–क, ख।

## दोषाणां मूलं कौसीद्यम्

त्रयाणामिह दोषाणां कौसीद्यं मूलमुच्यते ।
वीर्यारम्भेण दुष्यन्ते दोषा मनसि सम्भवाः ॥ ९ ॥

वीर्यारम्भेण हि फलं ह्यवश्यमुपभुज्यते ।
न्यायेनारब्धतत्त्वस्य कर्मणो दृश्यते फलम् ॥ १० ॥

कर्मणस्त्रिविधस्यास्य फलं त्रिविधमुच्यते ।
त्रिराशिनियतं तच्च त्रिशूलं त्रिभवानुगम् ॥ ११ ॥

## कौसीद्यसेविनो दुर्गतिः

पापसेवी प्रचण्डो यः कौसीद्यमपि सेवते ।
धर्मविद्वेषकः क्रूरोऽनुत्पथानुपधावति ॥ १२ ॥

यस्य तस्य च सन्तुष्टो यस्य तस्य प्रकुप्यति ।
यत्र तत्र च संसक्तो स मूढ इति कथ्यते ॥ १३ ॥

कौसीद्यं (यत्) स्वमनसः प्रमादविषमूर्च्छितम् ।
प्रपातं तं च संरब्धमविसंवादकं परम् ॥ १४ ॥

वीर्यारम्भे महापापकौसीद्यमलवर्जिताः ।
विमुक्तेरुपभोक्तारस्ते[1] जनाः सुखभागिनः ॥ १५ ॥

कौसीद्यं सर्वधर्माणामजरामरकारकम् ।
तेन दोषेण महता नरा दुःखस्य भागिनः ॥ १६ ॥

सहायश्च सुखावेशी तस्मात् तत् परिवर्जयेत् ।
तेन विद्धो हि पुरुषः स्वधिस्तुत्यः समन्ततः ॥ १७ ॥

कुसीदस्याल्पभागस्य मोहापहृतचेतसः ।
कुत्सितः स्वजनैः सर्वैर्न गतिर्विद्यते शिवा ॥ १८ ॥

## कौसीद्यरतः पापीभवति

कौसीद्यपापसंसर्गोस्त्यानमिद्धं तथैव च ।
मोक्षद्वारविघाताय भवन्त्येते महाभयाः[2] ॥ १९ ॥

---

१. विमुक्तिः—क ।　　२. इहामेन्व—ख ।

### दुःखस्यैतानि हर्म्याणि

आह्लीक्यमनपत्राप्यमौद्धत्यं पापमित्रता ।
दुःखस्यैतानि हर्म्याणि तेभ्यो रक्षेन्नु पण्डितः ॥ २० ॥

कौसीद्येनाभिभूता ये निरारम्भा गतत्विषः ।
सोच्छ्वासमरणं तेषां जीवितं चापि निष्फलम् ॥ २१ ॥

जीवमाना न जीवन्ति कौसीद्योपहता नराः ।
मृत्योरत्यधिकं ह्येतत् कौसीद्यमिति मन्यते ॥ २२ ॥

### आरब्धवीर्या एव भवसागरं तरन्ति

कौसीद्यपङ्कमग्ना ये मग्नास्ते दुःखसंस्तरे[१] ।
आरब्धवीर्या ये पुंसस्ते तीर्णा भवसागरात् ॥ २३ ॥

कौसीद्यान्मन्दवीर्यो यः सदा पापरतश्च यः[२] ।
स जीवमानोऽपि मृतो मृतस्तु नरकाय सः ॥ २४ ॥

### मानवानां निर्धनत्वे कौसीद्यं कारणम्

निर्धनाः पशुभिस्तुल्यास्ते नरा दुःखभागिनः ।
परपिण्डाशिनो दीनाः कौसीद्यं तत्र कारणम् ॥ २५ ॥

प्रायशस्तु कुसीदानां परदारोपजीविनाम् ।
रताभिलाषोऽत्यधिको मैथुने च सदा रतिः ॥ २६ ॥

ते तत्त्वकारिका रिक्ताः केवलाहारतत्पराः ।
मृत्युकाले समुत्पन्ने दह्यन्ते स्वेन चेतसा ॥ २७ ॥

शीतोष्णं च सहन्त्येते क्षुत्पिपासे तथैव[३] च ।
गात्रान्ता च क्रिया कार्या यात्रा धर्माय सर्वदा ॥ २८ ॥

### अतः कौसीद्ये न मतिः कार्या

न कौसीद्ये मतिं कुर्यात् कुशीले शीलकामुकः[४] ।
संसारे सीदति नित्यं न च दुःखात् प्रमुच्यते ॥ २९ ॥

---

१. दुःखसागरे—क । २. सु—क ।
३. महन्तथा—क । ४. कामका—क ।

**कुसीदान्वितः लोकवञ्चितो भवति**

परिभूय सतां मध्ये कुसीदाल्लोकवञ्चितः ।
वञ्चितश्च भवत्यन्ते शर्मणो वा विमुच्यते ।। ३० ।।

**धर्मेण विमुक्तिर्भवति**

वीर्यवान् स्मृतिसंलब्ध एकान्तनिरतः सदा ।
विमुक्तपापकैर्धर्मैर्मोक्षं प्राप्नोति यत्नतः[१] ।। ३१ ।।

**कुकर्मेषु मतिः न कार्या**

एवंविधा दुःखपरम्परा हि,
सत्त्वः कुकर्मेषु ( मतिं ) न कुर्यात् ।
लोके त्रिदोषानलसम्प्रदीप्ते,
कुर्यात् परां शान्तिकृपा मृते न ।। ३२ ।।

।। इति कौसीद्यवर्गो विंशः ।।

चित्तञ्च वाक् तथा कर्म संयोजनन्तु पापकम् ।
नरक-प्रेत-तिर्यक्-क्षुत्-कौसीद्यानि विदुर्दश ।।

।। इति द्वितीयम् उदानम् ।।

●

१. पण्डित–क, ख ।

# अथ तृतीयम् उदानम्

( करुणा-दान-शीलानि क्षान्तिर्वीर्यमथापि च ।
ध्यानं प्रज्ञाऽथ निर्वाणो मनो भिक्षुश्च ते दश ॥ )

## (२१) करुणावर्गः

**करुणा मातेव हितकारिणी भवति**

कृपा सर्वेषु भूतेषु मातेव हितकारिणी ।
यां समाश्रित्य पुरुषाः प्रयान्ति सुखमुत्तमम् ॥ १ ॥

दयान्वेषीह पुरुषः सर्वसत्त्वहिते रतः ।
पूजनीयः सतां याति प्रेत्य स्वर्गे च मोदते ॥ २ ॥

दयावन्तः सदावर्तं सर्वभूतहिते रतम् ।
तमेवं पुरुषं नित्यं प्रणमन्ति दिवौकसः ॥ ३ ॥

**करुणान्वितो देवलोकं गच्छति**

प्रयाति देवलोकं च शीलवान् [1]करुणान्वितः ।
कृपान्वितः स पुरुषो चन्द्रमा इव शोभते ॥ ४ ॥

**सुखार्थिना करुणा सेवितव्या**

आश्रयन्ति च भूतानि गतशोका गतव्यथा ।
तस्माद् दयाप्रयत्नेन सेवितव्या सुखार्थिना ॥ ५ ॥

---

1. अप्रमाणानि चत्वारि व्यापादादि विपक्षतः ।
मैत्र्यद्वेषः करुणा च, मुदिता सुमनस्कता ॥

इत्थं मैत्री–करुणा–मुदिता–उपेक्षति चत्वारि अप्रमाणानि उच्यन्ते, अप्रमाण-भावना-विपाक-फल-प्रदत्वात् । तानि चत्वार्यप्रमाणानि यथाक्रमं व्यापाद-विहिंसाऽरति–काम–राग–व्यापादानां प्रतिपक्षभूतानि । मैत्री-करुणा अद्वेषः । सौमनस्यं मुदिता । लोभराहित्यम् उपेक्षा । मैत्रीभावनाया आकारः सुखितान् सत्त्वान् दृट्वा सुखिताः वत ! सत्त्वाः । करुणा भावनायाः दुःखिता वत ! सत्त्वाः । उपेक्षा माध्यस्थ्यस्वरूपा । मुदितायाः मुदिता वत ! सत्त्वाः ! इति । — अभिधर्मकोशः— ८।२९ ।

### कारुण्येन यशवृद्धिर्भवति

यस्य वाक् कायचित्ते (च) कारुण्येन विभूषिते ।
तस्य मित्रमया लोका भवन्ति यशसा वृताः ॥ ६ ॥

### कारुण्यार्द्रस्य विदुषो निर्वाणं याति

कारुण्यार्द्रस्य विदुषो नित्यं मृद्विन्द्रियस्य[१] च ।
सम्यग्दृष्टिप्रयत्नस्य निर्वाणं नाति दूरतः ॥ ७ ॥

### कारुण्यविभूषिता मनुष्यलोकं देववद् भूषयन्ति

मनुष्यलोके ते देवा ये कारुण्येन विभूषिताः ।
कारुण्येन दरिद्रा ये ते दरिद्राः सतां मताः ॥ ८ ॥

### मृद्वाशया मर्त्याः साधवः

मृद्वाशया हि ये मर्त्याः साधुवत् काञ्चनोपमाः ।
कारुण्यमक्षयं येषां सदा मनसि वर्तते ॥ ९ ॥

### के धर्मपरायणा भवन्ति ?

ते च सत्त्वाः सदोद्युक्ता नित्यं धर्मपरायणाः ।
येषां कारुण्यदीपेन हृदयं सम्प्रकाशितम् ॥ १० ॥

न रात्रौ न दिवा तेषां धर्मो हि विनिवर्तते ।
येषां[२] सर्वास्ववस्थासु करुणाभिरतं मतम् ॥ ११ ॥

### कारुण्यं शीतलं चित्तम्

कारुण्यशीतलं चित्तं सर्वसत्त्वहिते रतम् ।
भुक्त्वा सौख्यं निरुपमं पश्चाद् गच्छति निर्वृतिम् ॥ १२ ॥

### कारुण्यमविनाशि धनम्

कारुण्यं मुनिभिः शस्तं कारुण्यं निर्मलं सरः ।
कारुण्यं दोषनिर्घाति कारुण्यं धनमव्ययम् ॥ १३ ॥

गुणानां भूषणं चाग्रं सर्वदोषविघातकम् ।
कारुण्यार्द्रा हि परमं प्रयान्ति धनमच्युतम् ॥ १४ ॥

कारुण्यं (वै) धनं यस्मान्माधुर्यपयसा युतम् ।
न दाहः क्रोधजस्तस्य हृदये सम्प्रवर्तते ॥ १५ ॥

---

१. ह्यन्द्रियस्य–क । २. एषा–क ।

### कारुण्यनावमारुह्य जना भवसागरं तरन्ति

कारुण्यनावमारुह्य प्रीतिर्धैर्यपरायणः ।
त्रिदोषोर्मिमहावेगे भ्राम्यते[१] भवसागरे ।। १६ ।।

### करुणायाः परिभाषा

गुणानामद्वयं श्रेष्ठं विना चित्तेन भूषणम् ।
साधूनां दयितं नित्यं कारुण्यमिति कथ्यते ।। १७

मार्दवं यस्य हृदये विलीनमिव काञ्चनम् ।
स जनो हि तु कल्पान्ते दुःखादाशु विमुच्यते ।। १८ ।।

### दयालोःश्रेयांसि रोहन्ति

यस्य पात्रीकृतं चित्तं मार्दवेण समन्ततः ।
श्रेयांसि तस्य रोहन्ति केदार इव शालयः ।। १९ ।।

चेतोगृहे निधानं तदव्ययं (सर्वं) देहिनः ।
निर्वासयति दारिद्र्यं नृणामध्याशयं महत् ।। २० ।।

तीक्ष्णेन्द्रियस्याशान्तस्य निध्यानस्य[२] विचारिणः ।
विषयेषु प्रमत्तस्य दुःखं नैव प्रधावति ।। २१ ।।

मैत्रेण चेतसा नित्यमनुकम्पा-दया पराः ।
ते हेतुफलतत्त्वज्ञा दुःखपाशाद् विनिर्गताः ।। २२ ।।

न सङ्कल्पे मनो येषां रमते दोषवर्जितम् ।
ते दोषभयनिर्मुक्ताः पदं गच्छन्त्यनुत्तरम् ।। २३ ।।

क्षान्तिक्रियासमायुक्ते मित्रवानकुतोभयः ।
प्रियो भवति लोकेऽस्मिन् पश्चाद् देवेषु मोदते ।। २४ ।।

### दयारत्नं सदा सेव्यम्

मातृवत् पितृवच्चैव सर्वलोकस्य ते जनाः ।
दयारत्नं सदा येषां मनसि स्थितमुत्तमम् ।। २५ ।।

### कृपैव सुखस्य मूलमस्ति

सुखस्य च परं मूलं कृपैव परिकीर्तिता ।
(हृदि) यस्य कृपा नास्ति स दुःखी परिकीर्त्यते ।। २६ ।।

---

१. भ्रमति–क, ख । २. नित्यध्यानस्य–ख ।

**मैत्री एव सुखावहा**

एकसत्योत्तरं ब्रह्म एकस्यानुत्तरं शिवम् ।
एकविद्या परं माता मैत्री चैका सुखावहा ।। २७ ।।

**अहिंसका एव धन्याः**

अहिंसकाः सदा धन्याः सद्दृष्टिः परमा शुभा ।
एतद् ऋजु सदा सत्यं पापानां चापि वर्जनम् ।। २८ ।।

**करुणाया माहात्म्यम्**

कर्त्तव्यः पुरुषैस्तस्मात् कृपासंवेगमानसैः ।
दान-शील-क्षमा-मैत्री-ज्ञानाभ्यासश्च निर्मलः ।। २९ ।।

।। इति करुणावर्ग एकविंशः ।।

# (२२) दानवर्गः

**शुद्धाशुद्धदानपरिभाषा**

गुणद्वादशसंयुक्तं मलैर्द्वादशभिर्विना ।
[1]दानं भवति शुद्धं तद् विपरीतं सकल्मषम् ।। १ ।।

---

कृपा-पुरस्सरं सर्वेभ्यः सर्वं दत्त्वा बोधिसत्त्वेन दानपारमितापूरिता ।
उक्तञ्च आचार्यबसुवन्धुना—

1. धर्मदानं सूत्रादीनां सम्यगक्लिष्टदेशना ।
पुण्यनिर्वाणनिवंधभागीयं कुशल त्रिधा ।।

दानस्य पूरिः कृपया सर्वेभ्यः सर्वदानतः ।
क्षान्तिशीलस्याङ्गच्छेदे सरागस्याप्य कोपतः ।।

दानं स्वार्थाय भवति परार्थाय, उभयार्थाय (स्वपरार्थाय) न च स्वार्थाय न परार्थाय वा । अनन्योपयोगि चैत्यं स्वार्थाय करोति, वीतरागः परार्थाय दानं करोति, अवतीरागार्थः स्वपरार्थाय, वीतरागार्थ–चैत्यनिर्माणे चतुर्थकोटौ ।

दानपतिः वस्तु क्षेत्रमिति त्रयस्य विशेषेण दानस्याऽपि विशेषो भवति । दानपति=दायकः । दानवस्तु=देयम् । दानक्षेत्रं=प्रतिग्रहीता । श्रद्धा-शील-श्रुत-त्याग-प्रज्ञाऽल्पेक्षतादिसमन्वितो दाता समीचीनो भवति । सत्कारादिपूर्वकं हि अयं श्रद्धादिसम्पन्नो दाता ददाति, तेन तस्य दानमपि उत्तमम् ।

ततस्तेन दानेन दाता उच्छेत्तुमशक्यान् महत् सत्कारान् लाभांश्च लभते । उत्तमं दानमिति शेषः । तादृशदानस्य प्रतिफले दाता भवति सुरूप ···· ····ऋतुषु सुखस्पर्शशरीरः । क्षेत्रं=दानपात्रम् । तच्चतुर्भिः कारणै उत्कृष्टं भवति पात्रं यदि सुगतिविशिष्टमस्ति, दुःखविशिष्टं (रोगादिसमन्वितं) परोपकारनिरतं, शीलादिगुणसहितं वा । वीतरागेण वीतरागाय दत्तं सर्वोत्कृष्टम् ।

बोधिसत्त्वस्य दानमपि महादानं, वीतरागतया दानात् । एवम् अष्टमं दानं श्रेष्ठमस्ति—१. आसद्यदानम् २ भयेनदानम्, ३. अदान्मे दानमिति दानम्, ४. दास्यति मे दानमिति दानम् ५. दत्तपूर्वं मे पितृभिश्च पितामहैश्चेति दानम्, ६. स्वर्गार्थदानम्, ८. चित्तालङ्कारार्थदानमिति ।

**दानरहिता एव पुरुषाधमाः**

देवानामथ (वा) नृणां धनस्य बलमुत्तमम् ।
दानेन रहिता पादे पतन्ति पुरुषाधमाः ॥ २ ॥

लोभमात्सर्यमलिनाः पुत्रदारवशानुगाः ।
मनुजा निधनं यान्ति केवलाहारकांक्षिणः ॥ ३ ॥

लोभग्रन्थिविमोक्षाय याञ्चावृक्षक्षयाय च ।
तमोनिचयनाशाय प्रदानमिह दीयते ॥ ४ ॥

**दाता परलोकं गच्छति**

अघतां[1] चरते दानं दातापि तदनन्तरम् ।
मार्गसन्दर्शवद् दानं परलोकं समृच्छति[2] ॥ ५ ॥

दानाम्भसि नराः स्नात्वा शीलोर्मिपरिभाविते ।
ज्ञानविस्तीर्ण (विमलं) पारं दुःखस्य यान्ति वै ॥ ६ ॥

**दोषनाशकाः त्रयो दीपाः**

पुरुषेण त्रयो दीपाः प्रज्वाल्या हितमिच्छता ।
दानं शीलं तथा ज्ञानमेते दोषविनाशकाः ॥ ७ ॥

---

एवम् अक्लिष्टदेशना अक्लिष्टचित्तसमुत्थापिता देशना । क्लेश इह लाभ-सत्कार-कीर्ति-लिप्सा । सूत्रादीनां धर्मग्रन्थानां तादृशी देशना (उपदेशः) धर्मदानं शुद्धदानञ्च उच्यते ।

पुण्यभागीयं (इष्टविपाकजनकं) निर्वाण-भागीयं, निर्वेधभागीयमिति त्रिविधं कुशलम् । एतदरिक्तं कर्मपथवत् पुण्यं, क्रिया, वस्तु इति त्रयं भवति । कर्मपथः कर्म भवति कर्मपथश्च । दानं, शीलं, समाधिश्च प्रत्येकं स्वभावतः पुण्यं क्रिया, वस्तु (क्रियास्थानं) भवन्ति । कायिकं वाचिकं वा कर्मपुण्यक्रिया-वस्तु-इष्ट विपाकत्त्वात् तत्कर्म पुण्यं, तत्स्वभावकर्मभावात् पुण्यक्रिया, चेतना विषयाभ्यासस्थानत्त्वात् वस्तु । इति स्पष्टम् । तच्च दानं पूजाकाम्यया अनुग्रह-काम्यया वा दीयते । दानं च कुशलचित्तोत्थानसहितं कायिकं वाचिकं कर्म । तद्दानं पुण्यक्रियावस्तु महाभोगसम्पन्नं फलं प्रददाति ।

—अभिधर्मकोशस्य कर्मनिर्देशे ।

---

१. अग्रतं—ख । २. समिष्यते—क, ख ।

तृष्णाविवर्णा दुर्गन्धिवितर्कोर्मिझषाकुले।
दुःखार्णवे प्लुता[1] ह्येते ज्ञानशीलेषु रक्षिताः ॥ ८ ॥

**क्लेशस्य भेषजं दानं, शीलं, ज्ञानम्**

क्लेशव्याधिनिहन्तारस्त्रयो वै भेषजाः स्मृताः।
दानं शीलं तथा ज्ञानमेते नित्यं सुखावहाः ॥ ९ ॥

प्रमादविषमं[2] (चित्तं) संकल्पकुटिलं लघु।
बध्यते बन्धनैरेतैस्त्रिभिर्ज्ञानादिभिर्नृणाम् ॥ १० ॥

दोषाग्निभिः (सदा) प्लुष्टो[3] यैरिदं दह्यते तदा।
दानादिज्ञानयोगेन हत्वा गच्छति निर्वृतिम् ॥ ११ ॥

न दान-ज्ञान[4]शीलेषु येषां सम्मिश्रिता मतिः।
ते नित्यदुःखिताः सत्त्वाः सुखं तेषां न विद्यते ॥ १२ ॥

**दातारो मात्सर्यमलवर्जिता भवन्ति**

अदानक्रीडितसुखाश्चित्तदोषेण वञ्चिताः।
भवन्ति विबुधाः हित्वा तस्माद् दानपरो भवेत् ॥ १३ ॥

दानोत्कर्षक्रमैर्युक्ताः मात्सर्यमलवर्जिताः।
भवन्ति हृष्टमनसो देवाः क्रीडापरायणाः ॥ १४ ॥

क्षुत्पिपासामयो वह्निर्यं प्रधानं प्रधावति।
मात्सर्यं वै फलं सर्वं तदुक्तं तत्त्वबुद्धिभिः ॥ १५ ॥

**दानप्रशंसा**

यो ददाति सुखं तस्य नीयते जायते सुखम्।
सुखं भवति दानाद्धि तस्माद् दानं प्रशस्यते ॥ १६ ॥

लोकालोककरं दानं गच्छन्तमनुगच्छति।
गतं च मन्त्रदानेन युज्यते भद्रवत्सलैः ॥ १७ ॥

अविसंवादकं स्थानमेतदुक्तं तथागतैः।
अविसंवादकत्वाच्च नित्यं दानपरो भवेत् ॥ १८ ॥

---

१. पूर्वा—क। २. प्रमादविषमस्थितं—ख।
३. यत्रयोदृष्टा—क, ख। ४. त्राण—क, ख।

**दानी भवार्णवं तरति**

मात्सर्यारिं विनिर्जित्य कृत्वा चित्तं शुभान्वितम् ।
ये प्रयच्छन्ति दानानि ते तरन्ति भवार्णवम् ॥ १९ ॥

क्षयैस्तु [1]त्रिविधैर्दानं त्रिषुकारं त्रिधार्ऽजितम् ।
तस्य क्षतान्वितस्यैवं फलं दृष्टं त्रिचक्षुषा ॥ २० ॥

**कः मार्गः सुखावहः ?**

दानमादौ सदा देयं शीलं लभ्यं प्रयत्नतः ।
तृष्णा ज्ञानेन हन्तव्या मार्ग एष सुखावहः ॥ २१ ॥

अनित्या पापिका तृष्णा लोकस्याहितकारिका ।
न शक्यं तद्विना श्रेयः प्राप्तुं पदमनुत्तमम् ॥ २२ ॥

**अदानस्य परिणामः**

अदाने न मनः कार्यं नित्यं दानरतो भवेत् ।
अदानात् क्षुत्पिपासाभ्यां दह्यते प्रेतभूमिषु ॥ २३ ॥

**दानेन शीलरक्षा सदा कार्या**

राजा भवति दानेन चक्रवर्ती सुधार्मिकः ।
दानभूमिं समाश्रित्य शीलं रक्षन्ति पण्डिताः ॥ २४ ॥

शीलवानपि कालज्ञोऽज्ञानाद् (वै) परिमुच्यते ।
दुःखनैर्याणिको मार्गः शस्तोऽयं मुनिपुंगवैः ॥ २५ ॥

तं विदित्वा महावीरो नित्यं दानरतो भवेत् ।
अदा(ना)दपि देवेषु देवा हि न सुखा मताः ॥ २६ ॥

**दानी यत्र कुत्रापि वसन् सुखी भवति**

आजन्मविपिने मर्त्या भवन्ति सुखभागिनः ।
दानस्य तत्फलं सर्वचेतनाभावितस्य हि ॥ २७ ॥

तिर्यक्ष्वपि समुत्पन्ना भवन्ति सुखभागिनः ।
तत्सर्वं दानजं सौख्यं कथयन्ति मनीषिणः ॥ २८ ॥

---

1. दानं त्रिविधं भवति । तद्यथा—धर्मदानम्, आमिषदानम्, मैत्रीदानं चेति ।
—नागार्जुनविरचितः धर्मसङ्ग्रहात् ।

यत् प्रेताः प्रेतभवने भवत्याकारभोजिनः ।
स्वयं कृतस्य दानस्य फलं भवति तादृशम् ॥ २९ ॥

**दानविरहितस्य दुर्दशा भवति**

(न) दद्यात् क्षुत्पिपासे च दह्यन्ते येन देहिनः ।
सर्वदा न तपस्ताभ्यां फलं भवति शीतलम् ॥ ३० ॥

**प्रमादी मृत्युसमये दाहं प्राप्नोति**

पूर्वं प्रमादचारी यो न दानादिषु वर्तते ।
स पश्चान्मृत्युसमये दह्यते स्वेन चेतसा ॥ ३१ ॥

**दानस्य फलम्**

प्रियो भवति दानेन चेतसामपि तुष्यति ।
पश्चाद् भवति स श्रीमान् दानस्य फलमीदृशम् ॥ ३२ ॥

यत्र दानादि चित्तस्यास्त्युपभोगाय सर्वदा ।
तत्र[१] निर्धनतैषा वा दयया परिरक्षितम् ॥ ३३ ॥

यद् भुज्यते सदा वित्तं गुरुभ्यश्चापि दीयते ।
यद् वनं शोभनं दृष्टं विपरीतं यथा तृणम् ॥ ३४ ॥

दुर्बलानां सदार्तानां सत्त्वानां चक्षुरन्वितम् ।
दानं निःकल्पसंयन्त्रमस्मिंल्लोके परत्र च ॥ ३५ ॥

**मनुष्यभूमौ दानस्य फलम्**

मनुष्यभूमौ दानानि दत्त्वा यान्ति शुभां गतिम् ।
न देवा दानपतयः फलभूमिरसौ मता ॥ ३६ ॥

**कर्ममाहात्म्यम्**

कर्मभूमिर्मनुष्याणां फलभूमिः सुरालयः ।
कर्मायत्तं फलं सर्वं न फलं स्यादहेतुकम्[1] ॥ ३७ ॥

---

1. भावदृष्ट्या पद्यमिदं तुलनीयम्—
कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥
—श्रीमद्भगवद्गीता-२।४७ ।

---

१. इयं—क, ख ।

## को मृतैः समः ?

ध्यानाध्ययननिर्मुक्तो दानशीलविवर्जितः ।
सुवर्णकंकणैर्युक्तो[१] जीवन्नपि मृतैः समः ।। ३८ ।।

स जीवति हि लोकेऽस्मिन् यो धर्ममनुवर्तते ।
धर्ममूढः सदा मूढो जीवन्नपि मृतैः समः ।। ३९ ।।

## अज्ञानी तु बालिश एव

मनुष्यचर्मणा छन्नस्तिर्यग् भवति बालिशः ।
यस्य ज्ञानप्रदीपेन हृदयं[२] नावभासितम् ।। ४० ।।

भवत्येतावता पुरुषः यः शीलमनुवर्तते ।
शीलभ्रष्टः पुमान् सर्वैश्राभिस्तुत्योऽपराक्रमः ।। ४१ ।।

## दानहीनः प्रेतविग्रहवान्

दानहीनः प्रमादी[३] (च) पापचारी चलेन्द्रियः ।
नासौ मर्त्य इति ज्ञेयः प्रेतो विग्रहवानयम् ।। ४२ ।।

## ज्ञानेन हीनो मृत एव

ज्ञानशीलविनिर्मुक्तो दानरत्नविवर्जितः ।
जीवमानोऽपि पुरुषो मृत इत्यभिधीयते ।। ४३ ।।

## को देवः ?

दानशीलतपोध्यानाद् वीर्यस्मृतिसमाधिमान् ।
पुरुषः पुरुषैरेजे देवैरपि[४] स वन्द्यते ।। ४४ ।।

गुणवांस्तु नरो वन्द्यः निर्गुणः पशुभिः समः ।
गुणागुणविधिज्ञो यः स देव इति कथ्यते ।। ४५ ।।

## केषां सफलं जीवनम् ?

सुजीवितं भवेत्तस्य यस्य त्यागे स्थितं मनः ।
नहि त्यागविनिर्मुक्तं जीवितं जीवनं मतम् ।। ४६ ।।

---

१. द्रुर्द्वंतः ककनैर्मृतो—क ।
२. हृदं—क ।
३. प्रालब्ध—क ।
४. देवनैं—क, ख । देवैरित्यर्थः ।

### दानं नित्यं सुखावहम्

पञ्चगत्युपपन्नानां सत्त्वानां स्वेन कर्मणा ।
मातृवत् पितृवद् दृष्टं दानं नित्यं सुखावहम् ।। ४७ ।।

### दानरता भवसङ्कटान्मुच्यन्ते

एतां भूमिमवस्थाप्य सत्त्वो दानरतो भवेत् ।
दानशीलरता नित्यं मुच्यन्ते भवसङ्कटात् ।। ४८ ।।

।। इति दानवर्गो द्वाविंशः ।।

## (२३) शीलवर्गः

**शीलं सूर्य इव शोभते**

धनानामुत्तमं [1]शीलं सूर्यो ज्योतिष्मतामिव ।
विहाय गच्छति धनं शीलं स्थितमिवाग्रतः ।। १ ।।

शीलेन त्रिदशान् याति ध्यानगोचरमेव वा ।
नास्ति शीलसमं ज्योतिरस्मिंल्लोके परत्र च ।। २ ।।

अल्पेन हेतुना स्वर्गं प्राप्नोति स्वर्गकामिकः ।
तस्माद् दुश्चरितं हित्वा नित्यं सुचरितो भवेत्[1] ।। ३ ।।

चेतनाभावितं दानं शीलं च परिरक्षितम् ।
नीयते देवसन्दत्तं पञ्चकामगुणान्वितम् ।। ४ ।।

**सुरक्षितेन शीलेनैव सुखं प्राप्तुं शक्यते**

न माता न पिता नार्था दयिता नापि बान्धवाः ।
न सुखा(स्ते) तथा दृष्टा यथा शीलं सुरक्षितम् ।। ५ ।।

---

1. दौःशील्यं अशुभं रूपं शीलं तद्विरितिः द्विधा ।
बुद्धेन प्रतिषिद्धाच्च परिशुद्धं चतुर्गुणम् ।।

एवमशुभं रूपं दौःशील्यमित्युच्यते । दौःशील्यविरतिरेव शीलम् । विरतिरस्ति विज्ञप्तिः, येन कर्मणा हेतुभूतेन विरतो भवति । अविज्ञप्तिः स्वविरति कार्यम् । भगवता प्रतिषिद्धात्कर्मणो विरतिरपि शीलम् । यथा विकालभोजनादि विरतिः । शीलं परिशुद्धमस्ति, यत इदं चतुर्भिर्गुणैर्युक्तम् । तच्च चतुर्गुणं न दौःशील्यविप्लुतं, न दौःशील्यहेतु विप्लुतं, दौःशील्यविपक्षस्य सुशीलताया आश्रयभूतं शान्त्याश्रयः दौःशील्यहेतवः क्लेशा उपक्लेशाः ।

वस्तुतः भावना हि चित्तं वासयति । शीलस्य फलं प्रधानतः स्वर्गं प्रहाणमार्गार्था च भावना । उक्तञ्च आचार्यबसुवन्धुना—

दानस्य पूरिः कृपया सर्वेभ्यः सर्वदानतः ।
क्षान्तिशीलस्याङ्गच्छेदे सरागस्याप्य कोपतः ।।

एवं कृपापुरःसरं सर्वेभ्यः सर्वं दत्त्वा बोधिसत्त्वेन दानपारमिता पूरिता । सरागस्य ( अतीवरागस्य ) अपि बोधिसत्त्वस्य कोपं विनैव अङ्गच्छेदः क्षान्तिपारमिताः शीलपारमितायाश्च पूर्तयेऽभूत् ।

—अभिधर्मकोशः–४।१११ ।

---

1. सुरचितं चरेत–क ।

**शीलवान् पुरुषो सुखमवाप्नुते**

शीलं त्राणमिहामुत्र शीलं गतिरिहोत्तमम् ।
शीलवान् पुरुषो नित्यं सुखात् सुखमवाप्नुते ॥ ६ ॥

दानशीलसमाचारा ये नरा शुभचारिणः ।
ते यान्ति देवसदनं रचिताः स्वेन कर्मणा ॥ ७ ॥

निधानमव्ययं शीलं शीलसौख्यमतर्कितम् ।
शीलाधिका हि पुरुषा नित्यं सुखविहारिणः ॥ ८ ॥

शीलं रक्षतु मेधावी यथा यानं सुखत्रयम् ।
प्रशंसावृत्तलाभं च प्रेत्य स्वर्गे च मोदते ॥ ९ ॥

**शीलवान् निर्वाणं प्राप्नोति**

शीलवान् यो हि पुरुषः शीलमेवाति सेवते ।
ससुखो निर्वृत्तिं याति यत्र मृत्युर्न विद्यते ॥ १० ॥

अनादिमति संसारे तृष्णामोहादिभिर्वृते ।
ज्योतिर्भूत सदाशीलं तस्माच्छीलमनाविलम्[१] ॥ ११ ॥

शीलं धनमसंहार्यं राजचौरोदकादिभिः ।
तस्माच्छीलं सदा सेव्यं दौःशील्यं च विगर्हितम् ॥ १२ ॥

शीलाभिरतपुरुषः निर्वाणं ह्यन्तिके स्थितम् ।
शीलवान् पुरुषो धन्यः शीलवांश्चापि सेव्यते ॥ १३ ॥

रविवद् भ्राजते शीलं दौःशील्यं चैव गर्हितम् ।
निर्मलं वीतकान्तारं निर्ज्वरं वीतकाङ्क्षि च ॥ १४ ॥

शीलप्रशस्तसम्बुद्धं निर्वाणपुरगामिकम् ।
आयुर्याति ध्रुवं धीमान् नित्यं शीलेन बृंहितम् ॥ १५ ॥

**शीलरहिताः पशुभिः समाः**

न बिभेन्मृत्युकाले च शीलेन परिरक्षितः ।
शीलमाद्यन्तकल्याणं सर्वसौख्यप्रवर्तकम् ।
शीलवान् पुरुषो धन्यो दौःशील्याभिरतः पशुः ॥ १६ ॥

तीरं[२] नैव समायान्ति पुरुषाः शीलवर्जिताः ।
कार्याकार्यं न विन्दन्ति तस्माच्छीलं समाचरेत् ॥ १७ ॥

---

१. प्रशस्यं हि सदाशीलं शीलविदुमनाविलम्–ख ।   २. तीरञ्च–क, ख ।

शीलवस्त्रेण ये छन्नास्ते छन्नाः पुरुषा मताः ।
शीलेन वर्जिता ये तु नग्नास्ते पशुभिः समाः ॥ १८ ॥

## शीलवान् पुरुषः स्वर्गं गच्छति

शीलवान् पुरुषः स्वर्गमुद्यानमिव गच्छति ।
बन्धुवन्मन्यते तत्र शीलवान् (सु) प्रमागतः ॥ १९ ॥

शुचिशीलसमाचाराः शुभधर्मसमन्विताः ।
देवलोकोपगास्तेषु जनाः सुकृतकारिणः ॥ २० ॥

## शीलेन परिबृंहिता गुणा वर्धन्ते

यो न प्रार्थयते कामान् शीलवान् पुरुषः सदा ।
गुणास्तस्य प्रवर्धन्ते शीलेन परिबृंहिताः ॥ २१ ॥

## शीलं स्वर्गस्य सोपानम्

महार्घमुत्तमं शीलमस्मिंल्लोके परत्र च ।
तस्मात् प्रहाय त्रैगुण्यं शीलमेव सदा चरेत् ॥ २२ ॥

देवेभ्यो रोचते तद्धि त्राणं शीलं शुभान्वितम् ।
भावितं परमं धन्यं परलोकोपगामिकम् ॥ २३ ॥

शीलवान् यदि जानीयात् फलं शीलस्य यादृशम् ॥ २४ ॥

शस्त्रं सुतीक्ष्णमादाय वाणं छिन्द्यादिहात्मनः ।
अस्त्रोपमस्य निम्नस्य अभिसौख्यसमन्वितम् ॥ २५ ॥

## शीलस्य फलं सुगतेन प्रदर्शितम्

फलं शीलस्य विमलं सुगतेन प्रदर्शितम् ।
आदौ शस्तं तथा मध्ये निधने शस्तमेव तत् ॥ २६ ॥

फलं शीलस्य विपुलं सुखात् सुखमुत्तमम् ।
शीलचर्या परं सौख्यं धनचर्या न तादृशी ॥ २७ ॥

नरा धनेन हीयन्ते शीलेन न कथञ्चन ।
शोचते पुरुषस्तेन पृथक् वा तद्विराजते ॥ २८ ॥

शुभं तस्मान्मुनिवरैः प्रशस्तं सार्वगामिकम् ।

उद्यानमिव गच्छन्ति पुरुषाः शुभचारिणः ।
देवलोकसमं तेषां सौख्यानामाकरं (परम्) ॥ २९ ॥

**स्वर्गगमनार्थं शीलं समाचरेत्**

सुशीलितस्य शीलस्य भक्षितस्याप्यनेकशः ।
फलं विपच्यते स्वर्गस्तस्माच्छीलं समाचरेत् ।। ३० ।।
शीलं स्वर्गस्य सोपानमाकरं सुखनिर्वृते ।
शीलवर्जी हि पुरुषो न क्वचित् सुखमेधते ।। ३१ ।।

**शीलवान् असंख्यानि सौख्यानि लभते**

शीलाम्भसा प्रसन्नेन विप्रकीर्णेन सर्वदा ।
स्नात्वा गच्छन्ति पुरुषा देवलोके च निर्वृते ।
यद्दिव्यमाल्याभरणैर्दिव्यैः सौख्यैः समन्विताः ।। ३२ ।।
रमते देवभवने तत् सर्वं शुभहेतुकम् ।
असंख्यानि च सौख्यानि वर्धमानानि सर्वदा ।। ३३ ।।
लभते पुरुषः सर्वं यः शीलमनुवर्तते ।
शुभचारी सदा सत्यः पूज्यते सोऽपराजितः ।। ३४ ।।

**अनेकसौख्यदायकं शीलमाचरणीयम्**

शुभेन शोभते मर्त्यः पूज्यते राजभिः सदा ।
शुभेन शोभते मर्त्यस्तस्माच्छीलं समाचरेत् ।। ३५ ।।
अनेकसौख्यजनकं सर्वमाश्वासकारकम् ।
शीलं सुचरितं कार्यं दुष्कृतं च विवर्जयेत् ।। ३६ ।।
ये दानशीलकर्त्तारः स्वर्गतद्गतमानसाः ।
तेषां सकल्मषं शीलं विषमिश्रं यथौदनम् ।। ३७ ।।
नानाविधस्य शीलस्य रक्षितस्याप्यनेकशः ।
शुभकार्यविपाकाय देवेषु परिपच्यते ।। ३८ ।।
शीलाम्भसा प्रसन्नेषु सङ्कीर्णेषु च सर्वदा ।
स्नात्वा गच्छन्ति मनुजा देवांश्चात्यन्तिकं सुखम् ।। ३९ ।।
दानशीलाः सदा दान्ताः सर्वभूतहिते रताः ।
ज्ञानयुक्ता मैत्रचिता[१] गतास्ते देवसम्मितिम् ।। ४० ।।
हृतदोषाः क्रियावन्तः शीलरत्नेन भूषिताः ।
सर्वसत्त्वदयावन्तः सुरलोकेषु ते बुधाः ।। ४१ ।।

---

१. मैत्रचिताः =सौहार्द्रान्विता इत्यर्थः ।

विशुद्धकाञ्चनप्रख्या निर्ध्मातमलकल्मषाः ।
सम्यक् कर्म सुसंलग्ना देवलोकेषु ते बुधाः ॥ ४२ ॥

सर्वसत्त्वदयावन्तः[1] सर्वसत्त्वहितैषिणः ।
सर्वपापविरक्ता ये तेषां वासः सुरालये ॥ ४३ ॥

अहन्यहनि ये शीलं रक्षन्ति सुपरीक्षकाः ।
अहन्यहनि तेषां हि सुखं भवति नैकशः ॥ ४४ ॥

### शीलवाजिनमारूढा देवभवनं प्रयान्ति

शीलवाजिनमारूढाः पुरुषास्तत्त्वचिन्तकाः ।
प्रयान्ति देवभवनं क्रीडायुक्तमनेकशः ॥ ४५ ॥

या क्रीडा देवभवने यच्च सौख्यमनुत्तमम् ।
तत् समग्रस्य शीलस्य फलमुक्तं तथागतैः ॥ ४६ ॥

### देवसुखं शीलजमेव

यद्दिव्यमाल्याभरणा दिव्याम्बरविभूषिताः ।
क्रीडन्ति विबुधाः सर्वे तत्सर्वं शुभहेतुकम् ॥ ४७ ॥

पद्मोत्पलवने रम्ये वनोपवनभूषिते ।
स्वर्गे रमन्ति ये देवास्तत् सर्वं शुभजं फलम् ॥ ४८ ॥

यदाकाश इवातस्थुर्दिव्यरत्नविभूषिताः ।
विराजन्तेऽमला देवास्तच्छीलस्य महत् फलम् ॥ ४९ ॥

यत्काननेषु रम्येषु चित्रेषु पुष्पितेषु च ।
रमन्ति गिरिपृष्ठेषु सुरास्तच्छीलजं फलम् ॥ ५० ॥

स्वगृहं हि यथा मर्त्याः प्रविशन्ति गतव्यथाः ।
तथा शीलसमाचाराः प्रयान्ति त्रिदिवं नराः ॥ ५१ ॥

एतत् सुजीवितं श्रेष्ठं यच्छीलपरिरक्षणम् ।
मरणानां परं मृत्युः यच्छीलपरिवर्जनम् ॥ ५२ ॥

### शीलमनुपमं कार्यम्

एतान् गुणान् सदा मत्वा प्रियत्वमपि चात्मनः ।
शीलं सुरक्षितं कार्यं दौःशील्यं च विवर्जयेत् ॥ ५३ ॥

शीलचारी सदा दान्तः क्षमावांश्च सुदर्शनः ।
सोपानमिव चारूढं प्रयात्यानन्दसन्निधिम् ॥ ५४ ॥

---

१. व्यावजः–क, ख ।

### शीलेन प्लवभूतेन संसारोत्तरणम्

फलं शीलस्य तु सुखं देवलोकेषु पच्यते ।
शीलेन प्लवभूतेन संसारादुत्तरन्ति च ॥ ५५ ॥

शीलाम्भसा विशुद्धा ये स्वायत्ता धीरचेतसः ।
जाम्बूनदमयैः पुष्पैस्तेऽत्रार्चन्ति दिवौकसः ॥ ५६ ॥

ये नवादातमनसो नित्यं शीलेन भूषिताः ।
ते यान्ति देवसदनं यत्र सौख्यमनन्तकम् ॥ ५७ ॥

सौख्यात् सौख्यतरं यान्ति नराः सुकृतकारिणः ।
क्रीडन्ति देवसदने शीलेन परिबृंहिताः ॥ ५८ ॥

### शीलसोपानमारूढाः सुगतिं प्रयान्ति

शीलसोपानमारुह्य ज्ञानेन परिबृंहिताः ।
नराः प्रयान्ति सुगतिं ज्ञानेन च परायणा ॥ ५९ ॥

सुप्रसन्नेन मनसाशीलं यदभिरक्षितम् ।
तस्य शीलस्य शीतस्य सुखमेतदुपस्थितम् ॥ ६० ॥

### शीलस्य परिणामो सुखदायकः

सुरक्षितस्य शीलस्य भावितस्याप्यनेकशः ।
परिणामे सुखीभूत्वा निर्वाणं चाधिगच्छति ॥ ६१ ॥

शीलं रक्षत्युपायेन शीलं नयति सङ्गतिम् ।
तस्माच्छीलं सदा रक्ष्यं परिणामोऽस्य शीतलः ॥ ६२ ॥

मृत्युकाले समुत्पन्ने शीलवानकुतोभयः ।
न मे दुर्गतिना त्राणं शीलं हि त्राणमुत्तमम् ॥ ६३ ॥

### कुत्सितशीलस्य कुत्सितः परिणामः

काचाभ्रपटलं यस्य शीलं भवति कुत्सितम् ।
स कुत्सितेन शीलेन कुत्सितो जायते नरः ॥ ६४ ॥

### शीलविरहितः मूढो भवति स्वर्गमपि न याति

शीलमूलेन लब्ध्वेदं सुखं स्वर्गेषु देहिभिः ।
तृष्णाक्षयो न भवति स पश्चात् परितप्यते ॥ ६५ ॥

तस्माच्छीलवता नित्यं शीलमेव विशिष्यते ।
निःशीलः पुरुषो मूढो न स्वर्गमधिरोहति ॥ ६६ ॥

पञ्चकामोपमं दिव्यं यदिदं भुज्यते सुखम्।
तच्छीलस्य विशुद्धस्य प्राप्यते हि फलं महत् ॥ ६७ ॥

यत्तेजः काञ्चनस्यास्य मेरुपर्वतशालिनः।
तच्छीलतेजसस्तेजः कलां नार्हति षोडशीम् ॥ ६८ ॥

दीप्यमानैः सदा शीलैः निर्धातुकनकत्विषा।
संयुक्तास्त्रिदिवं यान्ति पण्डिता स्वेन कर्मणा ॥ ६९ ॥

**त्रिविधशीलस्य त्रिविधं फलम्**

हीनमध्यविशिष्टस्य [1]शीलस्य त्रिविधस्य वै।
फलं हि त्रिविधं दृष्टं हीनमध्योत्तमं तथा[2] ॥ ७० ॥

प्रमादरहितं शीलमप्रमादोपबृंहितम्।
नित्यं तत् सुखदं दृष्टं धर्मतेयं व्यवस्थिता ॥ ७१ ॥

**शीलप्रभया सूर्यसहस्रस्यादि पराभवः**

शीलोद्भवा या विमला प्रभा भवति देहिनाम्।
न सा सूर्यसहस्रस्य संयुक्तस्य भविष्यति ॥ ७२ ॥
शीलं सप्तविधं रम्यं यो रक्षति नरोत्तमः।
स कामं भुञ्जति फलं सुगतेन च देशितम् ॥ ७३ ॥

**शीलचर्यां विना स्वर्गं न यान्ति**

शीलचर्यां समाश्रित्य सम्यग्दर्शनतत्परः।
मर्त्यलोकाद् दिवं यान्ति न कष्टं तपचारिणः ॥ ७४ ॥
यच्छीलं शीलसंस्पर्शं परिणामेऽपि शीतलम्।
निषेवते सदामूढः स पश्चात् परितप्यते ॥ ७५ ॥

**सप्तविधेन शीलेन देवसान्निध्यं प्राप्यते**

शीलं सप्तविधं धन्यमविसंवादकं पदम्।
शीलेन रक्षितः पुरुषो[१] देवानामन्तिकं गतः ॥ ७६ ॥

---

1. शील त्रिविधम्—संभारशीलम्, कुशलसङ्ग्राहशीलम् सत्त्वार्थक्रियाशीलम् च इति।

—नागार्जुनस्य धर्मसङ्ग्रहात्।

2. भावदृष्ट्या पदमिदं तुलनीयम्—

शीलेन हि त्रयो लोकाः शक्या जेतुं न संशयः।
न हि किञ्चिदसाध्यं वै लोके शीलवतां भवेत् ॥

—महाभारतस्य शान्तिपर्वः—१२४/१५।

---

१. रक्षितोपुरुषः—क, ख।

**शीलेन शोभनं फलं मिलति**

यथा पक्षैर्दृढैः पक्षी स्वेदच्छत्रं निहन्ति (वै)।
तथा नरो दृढः शीलैर्देवलोकाय कल्प्यते ।। ७७ ।।

श्रुतिमात्रं च (तच्छीलं) रम्याद् रम्यतरं च तत्।
लभते पुरुषः कर्ता फलं शीलस्य शोभनम् ।। ७८ ।।

दान-शील-तपोरत्नं हृदयैश्च समाश्रितम्।
देवता वा मनुष्यो वा लभते परमं पदम् ।। ७९ ।।

अन्तर्बहिश्च निःसाराः पुरुषा धर्मवर्जिताः।
संसारात् फलकाङ्क्षिभ्यः सद्धर्मो न (च) रोचते ।। ८० ।।

अन्तर्बहिश्च ये सारास्ते नरा[१] वस्तुतो दृढाः।
ये धर्मचारिणः शान्ताः परसत्त्वहितैषिणः ।। ८१ ।।

**अनुत्तरः शीलवतां सुगन्धः**

न केतकी चम्पक-पुष्पगन्धा,
तमालके नागरुचश्च गन्धः।
प्रयान्ति गन्धा हि यथा सुरेण,
अनुत्तरः शीलवतां सुगन्धः ।। ८२ ।।

**दौःशील्यं सदा वर्ज्यम्**

तस्माच्छीलं सदा कार्यं दानज्ञानतपोधनैः।
दौःशील्यं च सदा वर्ज्यं विषशस्त्रानलोपनम् ।। ८३ ।।

**शीलेन एव सुखमवाप्नुते**

एवं सुरक्षितं शीलं नरान् नयति सद्गतिम्।
न हि शीलादृते कश्चित् पदं सुखमवाप्नुते ।। ८४ ।।

**देवगुणसदृशं शीलं सदाऽऽचरेत्**

तस्माद् देवगुणं मत्वा शीलमेव सदाऽऽचरेत्।
न शीलसदृशं किञ्चिदन्यत् त्राणमिहास्ति वै ।। ८५ ।।

।। इति शीलवर्गस्त्रयोविंशः ।।

---

१. पुरुषाः—क, ख।

## (२४) क्षान्तिवर्गः

**क्षमाभूषणेनैव भूषितो भवति पुमान्**

[1]क्षान्त्या विभूषितः जीव[1] भूषितो नेतरैर्धनैः।
धनं विना समायाति क्षान्ति नैव कथञ्चन ॥ १ ॥

क्षमावान् पुरुषः सर्वप्रियो भवति देहिनाम्।
पूज्यते दैवतैर्नित्यं तस्मात् क्षान्तिः परन्तप ! ॥ २ ॥

---

1. द्वयोर्धर्मणाकारणं अन्यैरपि वर्द्धनम्।
ततः क्षान्तिः द्वयं तद्वत् सर्वस्याधर्मवर्द्धनम् ॥

एवं क्षमते = रोचत इति क्षान्तिः। तत्र हि निरतिकशयं रोचमानता। क्षान्तिः' त्रिधा, मृदु-मध्या-ऽधिमात्र-भेदात्। तत्र मृदुक्षान्तिः मध्यक्षान्तिश्च भूध्नींमिवैव। धर्मस्मृत्युपस्थानेन सर्वस्या अस्या वर्द्धनम् अधिमात्ररूपेण न तु अन्यैः स्मृत्युपस्थानैः संभाव्यते।

क्षान्तिवत् अन्येऽपि लौकिका अग्रधर्माः कामधातु-दुःख-समन्वताः क्षणिकाश्च भवन्ति दर्शनमार्गोन्मुखीभावादग्रधर्माः। चतुः कुशलमूलोष्मगता (=धर्मक्षान्त्यग्रधर्मा) दयः स्वभावतः सन्ति स्मृत्युपस्थानं प्रज्ञा च तथापि स्कन्धपञ्चकसमन्विता एव भवन्ति।

कामधातुगत-दुःखमेव धर्मक्षान्तेरालम्बनम्। धर्मज्ञानेन जायमाना क्षान्तिः, धर्मज्ञानक्षान्तिः।

दुःखे धर्मज्ञानक्षान्तेरुत्पत्तेरनन्तरं धर्मज्ञानं कामावचरदुःखालम्बनं जायते। दुःखे धर्माज्ञानस्यानुपदम् एव दुःखेऽन्वयक्षान्ति-अन्वयज्ञानक्षान्तिश्च जायेते समस्ताऽऽलम्बने, रूपाऽऽरूपाधातुगतदुःखे। दुःखेन्वयज्ञानत उत्पत्ति-मत्त्वादियं क्षान्तिः दुःखेऽन्वयज्ञानक्षान्तिरुच्यते। अन्वयः = हेतुः = समुदयः।

दुःखसत्याद्यथा क्षान्तिद्वयं ज्ञानद्वयं च उत्पद्येते, तथैव शेषे सत्यत्रयेऽपि। दुःखेन्वयज्ञानानन्तरं कामावचरसमुदये धर्मज्ञानक्षान्तिरुत्पद्यते, तस्याश्च समुदये धर्मज्ञानं, ततः अन्वयज्ञानक्षान्तिः समुदयेऽन्वयज्ञानं च ततः। इत्थं निरोधसत्ये, मार्गसत्येऽपि योज्यम्। यथोक्तम् आचार्यबसुवन्धुना—

कामदुःखे ततोऽत्रैव धर्मज्ञानं तथा पुनः।
शेषदुःखेऽन्वयक्षान्तिज्ञाने सत्यत्रये तथा ॥

—अभिधर्मकोशः—६।२६।

---

१. पुरुषो—क, ख।

**क्षमावान् पुरुषः सर्वत्र पूज्यते**

क्षमावान् पुरुषः सर्वैः क्रोधदोषैर्विवर्जितः ।
यशसा पूज्यते नित्यमिह लोके परत्र च ।। ३ ।।

**क्षान्तिधनं सर्वोत्तमम्**

क्षान्तिर्धनं धनं शीलप्रज्ञावर्धनमेव च ।
धनान्यन्यानि[१] शस्तानि न हितस्य कथञ्चन ।। ४ ।।

**सद्भिः क्षमावानेव पूज्यते**

पूज्यते सततं सद्भिर्यशसा चैव पूज्यते ।
क्षमावान् पुरुषः सर्वस्तमात् क्षान्तिपरो भवेत् ।। ५ ।।

**क्रोधविषस्य क्षमैव भेषजम्**

क्षान्तिः क्रोधविषस्यास्य भेषजं परमं मतम् ।
क्षान्त्याऽविनाशितः[२] क्रोधोऽनर्थायोपजायते ।। ६ ।।

ज्ञानशीलाभिभूतानां बालिशानां विशेषतः ।
प्रतीपकार्यं कुरुते क्षान्तिर्मार्गनिर्दशिका ।। ७ ।।

**क्षमावन्त एव लोके धनिनः**

स धर्मधनहीनानां भ्रमतां गतिपञ्चके ।
येषां क्षान्तिमयं द्रव्यं ते लोके धनिनः स्मृताः ।। ८ ।।

तमोनिचयकान्तारे दृढक्रोधेन दुस्तरे ।
क्षान्त्या यथा स्मृताः सद्भिस्तरन्ति खुल मानवाः ।। ९ ।।

सद्धर्मपाठनष्टानां देशिका क्षान्तिरुत्तमा ।
अपायभयभीतानां न भयं क्षान्तिरुच्यते ।। १० ।।

**नृणां क्षान्तिः सुखावहा**

सुखावहा सदा नृणां दुःखस्य च विघातिका ।
क्षेमसम्प्रापिका नित्यं विश्वासगुणकारिका ।। ११ ।।

शुभास्ति नायिका धन्या ह्यशुभेभ्यो विवर्जिता ।
मोक्षसंदेशिका पुंसां संसारभयनाशिका ।। १२ ।।

---

१. धनानेतानि–ख ।   २. क्षांति–क, ख ।

**क्षान्तिः नरकाग्निविनाशिका स्वर्गसोपानभूता च**

स्वर्गसोपानभूता सा नरकाग्निविनाशिका ।
त्रायते प्रेतलोकात्सा तिर्यग्योनौ तथैव च ।। १३ ।।

**क्षान्तिः सन्मार्गामृतदीपिका**

सा गुणौघैः सदा पूर्णा शिवा भवति देहिनाम् ।
सा प्रशस्ते सुखे प्राप्ते [1]क्षान्तिः कार्या प्रयत्नतः ।
सर्वलोकस्य मातेव सन्मार्गामृतदीपिका ।। १४ ।।

।। इति क्षान्तिवर्गश्चतुर्विंशः ।।

---

1. क्षान्तिस्त्रिविधा । तद्यथा-धर्मनिध्यानक्षान्तिः, दुःखाधिवासनाक्षान्तिः, परोपकारधर्मक्षान्तिश्चेति ।

--नागार्जुनस्य धर्मसङ्ग्रहात् ।

# (२५) वीर्यवर्गः

**देशक्रियायुक्तानि कार्याणि सिद्धयन्ति**

देशकालोपपन्नस्य क्रियातिथ्योचितस्य च ।
न्यायेनारभ्यमाणस्य [1]वीर्यस्य सकलं फलम् ।। १ ।।

न्यायदेशक्रियाहीना अधर्मेण विवर्जिताः ।
सीदन्ति कार्यनिकरा वीर्येण परिवर्जिताः ।। २ ।।

**आरब्धवीर्या मोक्षं प्राप्नुवन्ति**

ध्यानेनारब्धवीर्येण मोक्षं गच्छन्ति पण्डिताः ।
भवक्षिप्त इवाकारो देवलोके प्रयान्ति च ।। ३ ।।

यान्यारब्धानि कार्याणि वीर्यवद् बलिना नृणां[1] ।
तानि तानि प्रसिद्धानि विपुलानि भवन्ति च[2] ।। ४ ।।

येऽर्था लोकोत्तरे सिद्धा ये च लोकेषु सम्मताः ।
ते वीर्येण प्रसाध्यन्ते वीर्यहीना न जातु वै ।। ५ ।।

मन्दवीर्यं चिरोत्साहं सद्धर्मेण विवर्जितम् ।
नरो विशति[3] लोकं(च) शशाङ्कमिव कलमषम् ।। ६ ।।

---

1. चेतसः समुत्साहो 'वीर्यम्" । पुष्य तिष्य) संबुद्धस्य एकपादे स्थित्वा सप्ताहोरात्रं स्तुतिः अस्य वीर्यपारमिता पूर्यते । स्तुतिश्च—

न दिवि भुवि वा नास्मि लोके न वैश्रवणालये ।
न मरुभवने दिव्ये स्थाने न दिक्षु विदिक्षु च ।।

चरतु वसुधां स्फीतां कृत्स्नां सपर्वतकाननाम् ।
पुरुष वृषभ ! त्वत्तुल्योऽन्यो महाश्रमणः कुतः ।।

— अभिधर्मकोशतः ।

—वीर्यं त्रिविधम् । तद्यथा —संनाहवीर्यम्, प्रयोगवीर्यम्. परिनिष्ठावीर्यम् च इति ।

—महायानसूत्रसङ्ग्रहात् ।

---

१. यान्यारभकार्याणि वीर्यवान् पुरुषो बली—क, ख ।

२. अयं श्लोकः 'क' पुस्तके नास्ति ।

३. करेणविशते—क, ख ।

**वीर्यवत्ता परमां गतिं प्रददाति**

[1]आर्याष्टाङ्गेन मार्गेण न ज्ञानपरिपालितः ।
वीर्यवत्तामहोत्साहो प्रयाति परमां गतिम् ॥ ७ ॥

**बोधिः वीर्येणावाप्यते**

वीर्येणावाप्यते बोधिः स्ववीर्येण तथा मही ।
अर्हत्त्वं वीर्यवद्भिश्च तस्मान्नाग्निसमा गतिः ॥ ८ ॥

**उत्तमस्थानप्राप्त्यर्थं वीर्यारम्भे मतिः कार्या**

तस्माद् देवान् गुणान् मत्वा वीर्यवान् नियतेन्द्रियः ।
वीर्यारम्भे मतिं कुर्यान्नास्ति वीर्यसमर्थनम् ॥ ९ ॥

वीर्यार्थी स्मृतिमान् यश्च नरो ज्ञानपरायणः ।
प्रयात्यनुत्तमं स्थानं जरामरणवर्जितम् ॥ १० ॥

॥ इति वीर्यवर्गः पञ्चविंशः ॥

---

1. सम्यग्दृष्टिः, सम्यक्सङ्कल्पः, सम्यग्वाक्, सम्यक्कर्मान्तः, सम्यगाजीवः सम्यग्व्यायाम, सम्यक्स्मृतिः, सम्यक्समाधिश्चेति आर्याष्टाङ्गिकमार्गाः विद्यन्ते—

मग्गानट्ठङ्गिको सेठो सच्चानं चतुरो पदा ।
विरागो सेट्ठो धम्मानं द्विपदानाञ्च चक्खुमो ॥

इत्येवं धम्मपदेऽपि ( २०१ ) आर्याष्टाङ्गिकमार्गस्य वैशिष्ट्यमुल्लिखितमस्ति ।

卐

# (२६) ध्यानवर्गः

**स्वस्थः कः ?**

> **असंसक्तमतेर्नित्यं नित्यं [1]ध्यानविहारिणः[१] ।**
> **विशुद्धमनसो नित्यमेकाग्रभिरतस्य च ।। १ ।।**
>
> **यस्यैकाग्रकरं चित्तं तस्य दोषा न बाधकाः ।**
> **स दोषभयनिर्मुक्तः स्वस्थ इत्यभिधीयते ।। २ ।।**

---

1. ध्यानज्ञानबले ध्यानलाभप्रसङ्गे च आचार्यबसुवन्धुना निगदितम्—

> ध्यानाऽऽध्यक्षाऽधिमोक्षेषु धातौ च प्रतिपत्सु वा ।
> दश द्वे संवृतिज्ञाने षड् वा दश वा क्षये ।।

एवं तथागतो ध्यान-विमोक्ष-समाधि-समापत्तीनां संक्लेश-व्यवदान-व्यवस्नानविशुद्धि यथाभूतं प्रजानाति । ············परपुद्गलानाम् इन्द्रियपरापरतां यथाभूतं प्रजानाति ··········। नानाधिमुक्तिकं लोकमनेकाधिमुक्तिकं यथाभूतं प्रजानाति ·····। नानाधातुकं लोकम् अनेकधातुकं······। निरोधज्ञानमन्तरेण नवज्ञानानि अत्र चतुर्षु इति ।

> सास्रवाः नृष्वकोप्यस्य सप्तसामन्तवर्जिताः ।
> आद्ये शुभसमाधेरभ्यासः सुखविहारये ।।
>
> अक्ष्यभिज्ञादृशे प्रज्ञा प्रभेदाय संस्कारजाः ।
> वज्रोपमं चतुर्थे ध्यान आस्रव प्रहाणये ।।

एवं सप्तसामन्तकवर्जिता एकादश भूमय एतासां भूमिकाः तद्यथा-कामधातु अनागम्यम् अष्टौ मौलध्यानानि (४ ध्यान +४ आरुप्य) ध्यानानन्तर चेति । यथा—

१. प्रथमेन शुद्धकध्यानेन दृष्टधर्मसुखविहारो लभ्यते ।
२. द्वितीयध्यानाभ्यासेन प्रज्ञा न दर्शन लाभः, स एव दिव्यचक्षुरभिज्ञा ।
३. तृतीयध्यानाभ्यासेन प्रज्ञाप्रभेदो जायते, सैव त्रैधातुकानाम् अनास्रवाणां गुणानां च समाधिभावना ।
४. चतुर्थे ध्याने वज्रोपमसमाधिर्जायते सर्वास्रवक्ष्यकृद् ।

—अभिधर्मकोशः—८/२७-२८ ।

---

१. पङ्क्तिरियं'क' पुस्तके नास्ति ।

एकाग्राभिरतञ्चेतो विवेकमनुधावति ।
सर्वतर्कविनिर्मुक्तः स्वस्थ इत्यभिधीयते ॥ ३ ॥

**चित्तस्यैकाग्रतां वर्णयति**

यस्य चित्तं ध्रुवं शान्तं निर्वाणाभिरतं सदा ।
न तस्येन्द्रियजा दोषा भवस्य शुभहेतवः ॥ ४ ॥

यच्च ध्यानकृतं सौख्यं यच्च (चित्तं) समाधिजम् ।
चित्तं तत्सर्वमेकाग्रमते भवति देहिनः ॥ ५ ॥

**यतिः अलौकिकं सुखं भुङ्क्ते**

एकारामस्य यतिनो यत् सुखं जायते हृदि ।
यत् सौख्यमतिविज्ञेयं न सौख्यं लौकिकं मतम् ॥ ६ ॥

**कीदृशं चित्तं शान्तिं समधिगच्छति ?**

एकाग्राभिरतं चित्तं विशुद्धाकृतमेव च ।
दोषजालविनिर्मुक्तं शान्तिं समधिगच्छति ॥ ७ ॥

**ज्ञानाम्भसा तृष्णाग्निं हन्ति**

एकान्तमनसा नित्यं [1]संक्षिप्तेन्द्रियपञ्चकैः ।
तृष्णाग्निनातिवृद्धं च हन्ति ज्ञानाम्भसा बुधः ॥ ८ ॥

तस्य तृष्णाविमुक्तस्य विशुद्धस्य सुखैषिणः ।
अक्षयं चाव्ययं चैव पदं हि स्थितमग्रतः ॥ ९ ॥

**निर्वाणपुरगामि वर्त्म**

वितर्ककुटिलं चेतो यत्र यत्रोपपद्यते ।
एकालम्बनयुक्तेन धार्यं तेन समाधिना ।
तस्मादेतत् परं वर्त्म निर्वाणपुरगामिकम् ॥ १० ॥

**मनोनिग्रहफलम्**

एतदग्रं मनः क्षुत्वा हन्यादरिसमूहकम् ।
मनो हीदं विनिर्गृह्य ( स ) वेत्ति ध्यानजैर्दृढैः ॥ ११ ॥

---

1. संक्षिप्तेन्द्रियाणां पञ्चकः येन सः 'संक्षिप्तेन्द्रियपञ्चकः' । अत्र इन्द्रियाणि पञ्चकर्मेन्द्रियाणि विवक्षितानि सन्ति ।

— विस्तारपूर्वकमस्य व्याख्यानं पूर्वं (६/६५) प्रपञ्चितम् ।

**निरुपमं ध्यानजं सुखम्**

(तत्र स्थिताः नराः श्रेष्ठाः श्रद्धावन्तो मनीषिणः)।
प्रयान्ति परमं स्थानमशोकं हतकिल्विषम् ॥ १२ ॥

निर्विषस्कस्य तुष्टस्य निरागस्यापि धीमतः।
यत् सुखं [1]ध्यानजं भाति कुतस्तस्योपमा परा[१] ॥ १३ ॥

**ध्यानैः परमं पदं प्राप्यते**

एतत्सारं सुधीराणां योगिनां पारगामिनाम्।
यदेवेदं मनः श्रुत्वा प्रयान्ति पदमच्युतम् ॥ १४ ॥

॥ इति ध्यानवर्गः षड्विंशः ॥

---

1. चत्वारि ध्यानानि सन्ति। तद्यथा—सवितर्कं सविचारं प्रीतिसुखमिति प्रथमं ध्यानम्। अध्यात्मप्रमोदनात्प्रीतिसुखमिति द्वितीयम्। उपेक्षास्मृतिसंप्रजन्य सुखमिति तृतीयम्। उपेक्षास्मृतिपरिशुद्धिरदुःखासुखा वेदनेति चतुर्थं ध्यानमिति।

-- ध्यानं त्रिविधम्। यथोक्तम् आचार्यनागार्जुनेन-सदोषापकर्षध्यानं, अशेषवैभूषित ध्यानं चेति।

—धर्मसंग्रहात्।

---

१. कुतः–क।

## (२७) प्रज्ञावर्गः

**प्रज्ञा मातेव हितकारिणी**

धर्मानुसारिणी [1]प्रज्ञा वीर्येण परिबृंहिता ।
समाधिबलसंयुक्ता मातेव हितकारिणी ।। १ ।।

**प्रज्ञा गतिपञ्चकात् त्रायते**

सा हि सन्त्रायते सर्वान् पुरुषान् गतिपञ्चकात् ।
न माता न पिता तत्र गच्छन्तमनुगच्छति ।। २ ।।

प्रज्ञाशिखरमारुह्य शीलकन्दरशोभनम् ।
भवदोषमिदं सर्वं पश्यति (ज्ञान) भूषणः ।। ३ ।।

**समाधिना भवार्णवं तरति**

इन्द्रियाणीन्द्रियार्थेभ्यो यदा विन्दन्ति तत्पदम् ।
तदा समाधिना ज्ञानं भवसागरमुत्तरेत् ।। ४ ।।

दान-शील-तपो-ध्यानै-र्ज्ञानमेवाग्रमुच्यते ।
अपवर्गाद् यदा ज्ञानं ज्ञानशीले सुखावहे ।। ५ ।।

**प्रज्ञा अष्टमो मार्गस्तथागतेनोपदिष्टः**

चक्षुषां च परा दृष्टा प्रज्ञोक्ता (या) सुनिर्मला ।
मार्गाणां चाष्टमो मार्गः शिवः प्रोक्तस्तथागतैः ।। ६ ।।

---

1. प्रज्ञाऽमला सानुचराऽभिधर्मः । एवं मलरहिता ( आस्रवरहिता ) स्कन्धादि-परिवारसहिता प्रज्ञा ( धर्माणां विनिश्चय एव प्रज्ञाऽपरपर्यायो मतिः ) अभिधर्म इत्युच्यते । अभिमुखो धर्मः प्रधानो धर्मः निर्वाणमिति । यथोक्तम् आचार्यबसुवन्धुना—

श्रद्धा-वीर्य-स्मृति-शान्तिः प्रज्ञा प्रीतिरुपेक्षणम् ।
प्रश्रब्धिः शीलसङ्कल्पौ प्रज्ञा हि स्मृत्युपस्थितिः ।।

—अभिधर्मकोशः-९/६८ ।

**प्रज्ञाबलं सर्वोत्तमम्**

चतुर्णां चैव सत्यानामग्रे द्वे तु प्रकीर्तिते।
बालानां च सदा दृष्टं प्रज्ञाबलमिहोत्तमम्[1]॥ ७॥

**जन्मपद्धतिर्ज्ञानशस्त्रेण छेत्तव्या**

ज्ञानशस्त्रेण तीक्ष्णेन लता छेद्या दुरासदा।
हन्तव्या दोषनिवहाश्छेत्तव्या जन्मपद्धतिः॥ ८॥

**न ज्ञानात्परो बन्धुः**

अमृतानां परं ज्ञानं श्रेयसां निधिरुत्तमम्।
न ज्ञानाच्च परं बन्धुर्न ज्ञानाद्धनमुत्तमम्॥ ९॥

**ज्ञानशीलयुता प्रज्ञा सेवितव्या**

ज्ञानशीलयुतावृद्धा वीतरागा[1] गतस्पृहाः।
सेवितव्याः सदा सन्तस्तत्त्वमार्गनिदर्शकाः॥ १०॥

**क्लेशादीन् प्रज्ञाशस्त्रेण विदारयेत्**

प्रज्ञावज्रेण तीक्ष्णेन महोदयवसेन[2] च।
महायोगरथारूढः क्लेशादीन् प्रविदारयेत्॥ ११॥

॥ इति प्रज्ञावर्गः सप्तविंशः॥

---

1. भावदृष्ट्या पद्यमिदं तुलनीयम्—

श्राद्धत्वाद्भजते धर्मं प्राज्ञत्वाद्वेत्ति तत्त्वतः।
प्रज्ञाप्रधानं त्वनयोः श्रद्धा पूर्वङ्गमास्य तु॥
—रत्नावली-१।५।

---

१. वीतकांक्षा—क, ख। २. वलेन—क।

# (२८) निर्वाणवर्गः

**क्लेशक्षय एव निर्वाणमार्गः**

क्लेशक्षयात् परं सौख्यं कथयन्ति मनीषिणः।
एष [1]निर्वाणगो मार्गः कथितस्तत्त्वदर्शकैः ॥ १ ॥

तत्पदं शाश्वतं जुष्टं कथयन्ति तथागताः।
यत्र जन्म न मृत्युर्न विद्यते दुःखसम्भवः ॥ २ ॥

विभूतस्याप्रमत्तस्य शान्तस्य वनचारिणः।
अलोलुपस्य वीरस्य निर्वाणस्य विभूतयः[१] ॥ ३ ॥

**विषयेष्वप्रमत्तो निर्वाणं नातिचिरं प्राप्नोति**

मित्रामित्रप्रहीणस्य[२] भवरागविवर्जिनः।
विषयेष्वप्रमत्तस्य निर्वाणं नातिदूरतः ॥ ४ ॥

**शुभकर्त्तृ निर्वाणं प्राप्नोति**

शुभकार्येषु सक्तस्य मैत्रीकारुण्यभाविनः।
संसारभयभीतस्य निर्वाणं नातिदूरतः[३] ॥ ५ ॥

---

1. अभिधर्मकोशे आचार्यवसुवन्धुना निर्वाणस्य स्वरूपं निर्धारयता निगदितम्—

धर्मदानं सूत्रादीनां सम्यग्क्लिष्टदेशना।
पुण्य-निर्वाण-निर्वेध-भागीयं कुशलं त्रिधा ॥
त्रिविधं ससमुत्थानं कर्मयोग प्रवर्त्तितम्।
लिपिर्मुद्रा सगणनं काव्यं संख्या यथाक्रमम् ॥
सावद्या निवृता हीनाः क्लिष्टा धर्माः शुभाऽमलाः।
प्रणीताः संस्कृताः शुभाः सेव्याः मोक्षस्त्वनुत्तरः ॥

एवम् अक्लिष्टदेशना=अक्लिष्टचित्तसमुत्थापिता देशना। क्लेश इह लाभ-सत्कार-कीर्ति-लिप्सा। सूत्रादीनां धर्मग्रन्थानां तादृशी देशना धर्मदानमित्युच्यते। पुण्यभागीयं निर्वाणभागीयं, निर्वेध भागीयमिति त्रिविधं कुशलम्। ··· ·· ··· ···कुशलधर्मा अमलाः प्रणीताश्चोच्यन्ते। संस्कृताः कुशलाश्च धर्मा सेवितकाः। मोक्षः=निर्वाणम्। तद्धि ध्रुवं, कुशलं च, अतः सर्वोत्कृष्टम्।"

---

१. जातिभूतयः—क, ख। २. हीनस्य—क।
३. श्लोकोऽयं 'क' पुस्तके नास्ति।

**कौसीद्यविरहितः त्वरितं निर्वाणं याति**

क्लेशक्षयविधिज्ञस्य नैरात्म्यस्यापि तस्य च ।
कौसीद्याच्चैव मुक्तस्य निर्वाणं नातिदूरतः ॥ ६ ॥

**वश्येन्द्रियस्य शान्तस्य निर्वाणं समीपतरम्**

[1]चतुःसत्यविधिज्ञस्य त्रिदोषवधसेविनः ।
वश्येन्द्रियस्य शान्तस्य निर्वाणं नातिदूरतः ॥ ७ ॥

**सुखदुःखपाशैर्मुक्तो मुनिः पारग उच्यते**

सुखदुःखमयैः पाशैर्यस्य चेतो न हन्यते ।
स दोषभयनिर्मुक्तः पारगो मुनिरुच्यते ॥ ८ ॥

**शुभान्वेषी निर्वाणमधिगच्छति**

पुरुषोऽपायभीरुश्च प्रमादबलवर्जकः ।
शुभकारी शुभान्वेषी निर्वाणमधिगच्छति ॥ ९ ॥

॥ इति निर्वाणवर्गोऽष्टाविंशः ॥

---

1. व्याख्यानमस्य पूर्वं ( ८/६८ ) प्रपञ्चितम् ।

## (२९) मार्गवर्गः

### आर्यचतुष्टयोपासकः पारं गच्छति

सत्यानि चत्वारि शिवानि तानि,
सुभावितान्येव समीक्ष्य विद्वान् ।
सुचिन्तको जाति-जरा-भयेभ्यः,
प्रमुच्यये पारमुपैति शान्तः ॥ १ ॥

### कामेषु सक्तः भवभोगबद्धः भवति

अचिन्तको यस्तु विभूतबुद्धिः[1]
कामेषु सक्तो भवभोगबद्धः ।
स बन्धनैः काममयैर्निबद्धो,
न मुच्यते जाति-जरा-भयेभ्यः ॥ २ ॥

### भवार्णवे सुखद्रष्टा अन्ते नरकं याति

विचिन्त्य यो दुःखमिदं विशालं,
न खेदमायाति भवार्णवेभ्यः ।
स कामवाणैर्निहतो हि मूढः,
कष्टामवस्थां नरकेऽपि याति[2] ॥ ३ ॥

आभ्यन्तरं क्षेमसुखं च हित्वा,
किं कामभोगाभिरता हि बालाः ।
नैते विजानन्ति भयं च तीव्र-
मभ्येति मृत्युर्ज्वलनप्रकाशः ॥ ४ ॥

### तत्त्वमार्गप्रदर्शकैः किमुक्तम् ?

अनित्यदुःखशून्योऽयमात्मा कारकवर्जितः ।
संसारः कथितो बुद्धैः तत्त्वमार्गप्रदर्शकैः ॥ ५ ॥

तेन सर्वमिदं तत्त्वज्ञानं ज्ञेयं समासतः ।
ज्ञानज्ञेयविनिर्मुक्तं तृतीयं नोपलभ्यते ॥ ६ ॥

---

१. विमूढबुद्धिः-ख । २. लभेत्-क, ख ।

**कः तत्त्वविधिज्ञः ?**

अन्तपारविधिज्ञो[१] यः षोडशाकारतत्त्ववित् ।
ऊर्ध्वगतिविधिज्ञो हि क्षान्तितत्त्वविचक्षणः ॥ ७ ॥

**तत्त्वविदेव धर्मतामनुविशति**

अग्रलोकैकधर्मज्ञः समनन्तरतत्त्ववित् ।
स धर्मतामनुविशेद् यथा (च) न विकम्पते ॥ ८ ॥

द्वयोपायविनिर्मुक्तो नष्टान् नाशयते मुहुः ।
नष्टपापगतिर्वीरः स्रोतापन्नो निरुच्यते ॥ ९ ॥

स्रोतांस्य कुशला धर्मा जीर्यन्ते पापगामिनः ।
मोक्षाग्निना प्रतप्यन्ते स्रोतापन्नो भवत्यतः ॥ १० ॥

प्रस्रब्धिजं महोदर्कमुक्तं संसारमोक्षकम् ।
तृष्णाक्षयसुखं दृष्टं सत्यतः सुखकारकम् ॥ ११ ॥

**कः सदैव सुखी भवति ?**

नावबध्नाति यं तृष्णा न वितर्कैर्विहस्यते ।
सम्प्राप्तभवपारस्तु सुखी भवति सर्वदा ॥ १२ ॥

**आर्य मार्गचतुष्टयम् अन्योन्यफलसम्भूतम्**

अन्योन्यफलसम्भूत सर्वतः सम्प्रवर्तते ।
तदेव कारणं [1]ज्ञेयमार्यमार्गचतुष्टयम् ॥ १३ ॥

आर्यसत्येषु विदितः पुरुषो विद्यते ध्रुवम् ।
विषयेषु हि संघुष्टं जगद् भ्रमति चक्रवत् ॥ १४ ॥

**कः श्रेष्ठो मार्गः ?**

स मार्गो देशकः श्रेष्ठो यो मार्गो भाषितः शिवः ।
येन मार्गेण प्राचीना (ध्रुवं) याता मनीषिणः ॥ १५ ॥

---

1. द्वाभ्यामशैक्षस्य चतुर्विधो मार्गः समासतः ।
सविशेष-विमुक्त्या-ऽऽनन्तर्य-प्रयोग-साह्वयः ॥
ध्यानेषु मार्गः प्रतिपद् सुखा दुःखाऽन्यभूमिषु ।
धंधाभिज्ञा मन्दबुद्धेः क्षिप्राभिज्ञेतरस्य तु ॥

—अभिधर्मकोशः–६/६५-६६ ।

---

१. पुष्पगत—क, ख ।

**त्रिशरणगत एव सुखं जीवति**

सुजीवितं भवेत् तस्य यस्य बुद्धौ स्थितं मनः।
नहि बुद्धिविनिर्मुक्तं जीवितं जीवितं भवेत् ॥ १६ ॥

सुजीवितं भवेत् तस्य यस्य धर्मे[१] स्थितं मनः।
नहि धर्मविनिर्मुक्तं जीवितं जीवितं भवेत् ॥ १७ ॥

सुजीवितं भवेत् तस्य यस्य सङ्घे स्थितं मनः।
नहि सङ्घविनिर्मुक्तं जीवितं जीवितं भवेत् ॥ १८ ॥

**केषां सुजीवितं जीवनम् ?**

सुजीवितं भवेत् तस्य यस्य सत्ये स्थितं मनः।
नहि सत्यविनिर्मुक्तं जीवितं जीवितं भवेत्[२] ॥ १९ ॥

सुजीवितं भवेत् तस्य यस्य मार्गे स्थितं मनः।
नहि मार्गविनिर्मुक्तं जीवितं जीवितं भवेत् ॥ २० ॥

निर्वाणगमने यस्य नित्यं बुद्धिरवस्थिता।
स दोषादेव निर्मुक्तो न देवः क्रीडति स्वयम्[३] ॥ २१ ॥

**कीदृशी क्रीडा सुखोद्भाविका ?**

या भवव्यापिनी क्रीडा नित्यमेकाग्रचेतसः।
सा सुखोद्भाविका क्रीडा न क्रीडा रागकारिका ॥ २२ ॥

**केन मार्गेण शिवं स्थानं मिलति ?**

सुखादीनिह सत्यानि यथा दान्तेन विन्दति।
तदा क्षेमं शिवं स्थानं प्राप्नोति पुरुषोत्तमः ॥ २३ ॥

॥ इति मार्गवर्ग एकोनत्रिंशः ॥

---

१. बुद्धः—ख।
२. श्लोकोऽयं 'क' पुस्तके नास्ति।
३. परः—क, ख।

# (३०) भिक्षुवर्गः

**आदर्शो भिक्षुः लोकमार्गदर्शकः**

यो हिनस्ति न भूतानि मित्रवेत्ता सदाऽक्षयः।
पितृवत् सर्वभूतानि लोकस्तमनुपश्यति ॥ १।

अदत्तादानविरतो नित्यं ज्ञानी जितेन्द्रियः।
प्रशान्तदेहकर्मा (च) तीर्णसम्भवसङ्क्रमः[1] ॥ २ ॥

नाप्यालेख्यगता नापि चक्षुषा सा[2] निरीक्ष्यते।
हतकामो दृष्टसत्यो मुक्तस्तादृश उच्यते ॥ ३ ॥

समलोष्टाश्मकनकः वीतशोकः समाहितः।
न क्लेशोरगसम्पृक्तः स सौख्यं ध्रुवमाप्नुयात् ॥ ४ ॥

**कः भिक्षुर्विद्यते ?**

अर्थानर्थसमो यस्य लाभालाभौ तथैव च।
सुखदुःखसमायुक्तः[3] भिक्षुः स खलु कथ्यते ॥ ५ ॥

मित्रामित्रप्रहीणो यः समचेता जितेन्द्रियः।
विभेति[4] यो न विषयैः विज्ञेयस्तादृशो यतिः ॥ ६ ॥

---

1. अष्टधा प्रातिमोक्षाख्यः वस्तु तस्तु चतुर्विधः।
   व्यञ्जनान्नाम सञ्चारात् पृथक् ते न विरोधिनः ॥

   एवं प्रातिमोक्षसंवरोऽष्टविधः–भिक्षु-भिक्षुणी-शिक्षमाण-श्रामणेरश्रामणेरिको-पासको-पासिको-पवासस्थ-सम्बन्धात्। प्रातिमोक्षसंवरः तत्त्वतस्तु चतुर्विध एव। भिक्षुणीप्रातिमोक्षः भिक्षुप्रातिमोक्षतो न विसदृशः, तथैव शिक्षमाण श्रामणेरिकयो अपि श्रामणेरप्रातिमोक्षसदृशः उपासिकाया अपि उपासकप्रातिमोक्षेऽन्तर्भावो भवितुमर्हति। इत्थं 'भिक्षु' श्रामणेरोपासको-पवासस्थ-भेदात् चतुर्विधः प्रातिमोक्षः। व्यंजनानां (स्त्रीपुरुषलिङ्गानां) भेदेन अयमत्र नामभेदः लिङ्गाग्रहणे चत्वार एव भेदा भवन्ति। इमे प्रातिमोक्षाः परस्परं पृथग्भूताः शिक्षापद-भेदात्। उपासकप्रातिमोक्षो नहि प्रातिमोक्षः,

---

१. भवसङ्कटात्–ख।
२. सति–क, ख।
३. समावितत–क, ख।
४. क्षुभ्यते–क, ख।

एवमन्यत्रापि। परं ते न परस्परं विरोधिनः। भिक्षु-प्रातिमोक्षं त्यक्त्वा श्रामणेर-प्रातिमोक्षे स्थातुं शक्नोति, ततोऽपि उपासकप्रातिमोक्षे।

ध्यानजो ध्यानभूम्यैव लभ्यते आर्यया तया।
निर्मलः प्रातिमोक्षाख्यः परविज्ञापनादिभिः॥

एवं ध्यानेनोत्पन्नः संवरःध्यानभूमिकचित्तेनैव लभ्यते ध्यानमत्रमूल-ध्यानं (प्रथमादिचतुष्टयं) सामन्तकं (चतुर्भ्यो ध्यानेभ्यः प्राग् प्रायोगिक-ध्यानम्) निर्मलः (अनास्रवः) प्रातिमोक्ष-आर्यभूम्यैव जायते। परस्य विज्ञापन, परस्मै वा विज्ञापनम्। परविज्ञापनादिभिः प्रातिमोक्षाख्यः संवरः सङ्गृहीतो भवति। तत्र भिक्षु-भिक्षुणी-शिक्षमाणानां प्रातिमोक्षादानार्थं सङ्घो विज्ञापनीयो भवति। तथा उपसम्पदा-लाभः, उपसम्पन्नस्य च प्रातिमोक्षलाभः। दशविधा हि उपसम्पदा। तथा हि—

१. स्वत उपसम्पदा, यथा प्रत्येकबुद्ध-बुद्धानाम्।
२. नियमावक्रान्तिः, यथा अज्ञातकौण्डिन्यादीनां पञ्चवर्गीयाणाम्।
३. एहि भिक्षो, यथाऽज्ञातकौण्डिन्यस्य।
४. शास्तुः अभ्युपगमात्, यथा महाकाश्यपस्य।
५. प्रश्नव्याकरणेन उपसम्पदा, यथा उदायिनः।
६. गुरुधर्माभ्युपगमेन, यथा महाप्रजापत्या।
७. शासनप्रेषणद्वारा, यथा धर्मदिन्नायाः।
८. पञ्चवर्गेण गणेन उपसम्पदा, यथा प्रत्यन्तजनपदेषु।
९. दशवर्गेण गणेन उपसम्पदा, यथा मध्यमण्डले।
१०. त्रिःशरणगमनोच्चारणेन, यथा त्रिंशभद्रवर्गीयाणाम्।

पतनीयेन चेत्ये के सद्धर्म ह्रानितोऽपरे।
धनार्णवत् तु काश्मीरैरापन्नस्येष्यते द्वयम्॥

एवं पतनीयाः=पाराजिकाः। मैथुनम् अदत्तादानं मनुष्यवधः, उत्तरि-मनुष्यधर्म ( दिव्यशक्ति ) मृषावादश्चेति चतस्रो भिक्षूणां पाराजिकाः। पुरुष-प्रतिषिद्धांगस्पर्शः, पाराजिकापन्नभिक्षुषीदोषाऽनाविष्करणं, समग्रसंघप्रतिक्षिप्त-भिक्ष्वनुवर्तनं, कामास्वादेन पुरुषस्य पाणिवस्त्रादि स्पर्शनञ्चेति चतस्रोऽन्या अपि सर्वा अष्टौ भिक्षुणीनां पाराजिकाः।

एकेषां सौत्रान्तिकानां मते पतनीयधर्मासेवनेन 'भिक्षु' श्रमण प्राति-मोक्षः त्यज्यते। धर्मगुप्तास्तु सद्धर्मलोपेन प्रातिमोक्षलोपं मन्यन्ते। पाराजिका-पन्नस्यापि यथा धनं ऋणं च तथा संवरासंवरौ। स्वपापस्वीकारेण ऋणप्रति-दानवत् स असंवरामुच्यत इति कश्मीरकाणाम्।

—अभिधर्मकोशः–४|१४,२६,३९।

**विषयद्वेषी निर्वाणमधिगच्छति**

विषमत्वाद्धि विषयान् द्वेष्टि धीरो गतव्यथः ।
न तस्य दूरे निर्वाणं सम्यक्सम्बुद्धदेशितम् ।। ७ ।।

उदय-व्ययतत्त्वज्ञः सम्यग्दृष्टिरलोलुपः ।
हिमवानिव निष्क्रम्य संसारान्मुक्तहेतुकः ।। ८ ।।

तृणचन्दनतुल्यो हि समतृष्णाम्बराशिनः ।
स कौशेयसङ्घटिततृष्णया नैव बाधते ।। ९ ।।

लाभसत्कारसन्तुष्टः सन्तुष्टस्तृणसंस्तरैः ।
वह्निवल्लाभसत्कारं यः पश्यति स पश्यति ।। १० ।।

**बुद्धदेशिताः भिक्षुधर्माः**

वाह्यते यो न विषयैस्तृणनद्या न वाह्यते ।
स्वकर्मफलतत्त्वज्ञः स भिक्षुर्बुद्धदेशितः ।। ११ ।।

नातीतं शोचते यो हि बुद्धचा (चैव) गतस्पृहः ।
प्रत्युत्पन्नक्रियायोगी न बुद्धिस्तस्य लिप्यते ।। १२ ।।

निर्वाणे (च) मतिर्यस्य धर्मे नित्यं स्थिता भवेत् ।
न वर्तते स संसारे शुक्लधर्मसमावृतः ।। १३ ।।

नाविलं क्रियते यस्य चित्तं विद्याग्निकल्पया ।
दारुवद्विषया यस्य तस्य दुःखं न विद्यते ।। १४ ।।

इन्द्रियाणि वशे यस्य चेन्द्रियेषु वशानुगः ।
ह्रियते यः पुमर्थैनो निकषस्तादृशो मुनिः ।। १५ ।।

साधुवद्धिमनो यस्य क्षमावान् प्रियदर्शनः ।
प्रह्लादयति चेतांसि स नृणां शशिवन्मुनिः ।। १६ ।।

अरुणाभिरतो यस्तु हर्म्याग्रेषु न रज्यति[१] ।
सन्तुष्टः पांशुकूलेन भिक्षुर्भिक्षारतो भवेत् ।। १७ ।।

शान्तो दान्तः सुधीरर्थात् तत्त्ववित् सुखदुःखयोः ।
स यात्युत्तममध्वानं यत्र गत्वा न शोचति[२] ।। १८ ।।

---

१. रज्यते–क, ख । २. शोचती–क, शोचते–ख ।

ऋजुमत्पातकान्यस्य नित्यं ध्यानपरायणः ।
प्राकृतैश्च मलै(र्हीनः) स योगी सत्यवर्त्मनि ।। १९ ।।

सर्वेन्द्रियविघाती यः सर्वभूतहिते रतः ।
शान्तो दान्तेन्द्रियः स्वस्थो भिक्षुर्भवति तादृशः ।। २० ।।

षडिन्द्रियरथारूढो रागशत्रुनिवारकः ।
प्रज्ञाधीरः क्रियावान् यः स शान्तिपदमश्नुते ।। २१ ।।

अरण्यवासी सन्तुष्टो भूमिवासी समाहितः ।
धुनाति पापको धर्मश्चायुर्मेघानिवाम्बरः ।। २२ ।।

शुभं वा देहकर्मान्तः शुभचर्यासु संरतः ।
तत्त्वदृष्टिः क्रियादक्षो नाशयन्मारसाधनम् ।। २३ ।।

**दयालुर्भिक्षुर्निर्वाणमार्गे स्थितो भवति**

रागात्यये न बाधेत शुभचित्तं गतालयम् ।
मैत्र्या कारुण्यबहुलो भिक्षुर्नैर्याणिके स्थितः ।। २४ ।।

यस्य रूपादयो नेष्टा विषया बन्धहेतवे ।
स याति परमां शान्तिं यत्र गत्वा न शोच्यते ।। २५ ।।

हेतुप्रत्ययतत्त्वज्ञः सूक्ष्मार्थे कृतनिश्चयः ।
मोक्षस्रोतस्यभिरतस्तृष्णया नैव रज्यते[1] ।। २६ ।।

यो नादत्तेऽशुभं कर्म शुभकर्मरतः सदा ।
चन्द्रांशुनिर्मलगतिर्योगी भवति तादृशः ।। २७ ।।

प्रदहन् पापकान् धर्मान् शुष्केन्धनमिवानलः ।
विभ्राजते त्रिभुवने मुक्तपापो गतव्यथः ।। २८ ।।

मोक्षेऽस्ति यस्य तु मनो न संसारे कथञ्चन ।
नासौ बध्नाति संसारे मुक्तः पक्षी यथाम्बरे ।। २९ ।।

वेदनोदयतत्त्वज्ञो वेदनाफलनिश्चयः ।
स मुक्त इति विज्ञेयस्तत्त्वविद् ऋतवांश्च सः ।। ३० ।।

तथाप्येते सुखदुःखे मृष्टामृष्टैर्न लिप्यते ।
दीप्तं पश्यति संसारं यः स योगी सतां मतः ।। ३१ ।।

---

१. राजते–क,ख ।

**भिक्षुर्भवति कीदृशः ?**

अथामूढमतिर्नित्यं नित्यं धर्मपरायणः ।
भिक्षुवृत्तावभिरतो भिक्षुर्भवति तादृशः ॥ ३२ ॥

न तृप्तिर्दर्शनारामैः साधूनां दर्शने रतिः[१] ।
निष्क्रान्तगृहकल्माषो भक्षुर्भवति तादृशः ॥ ३३ ॥

न नृत्यगीतसन्दर्शी ( सत्यं ) च पुनरीक्षते ।
संरक्षितो श्मशानेषु भिक्षुर्भवति तादृशः ॥ ३४ ॥

एकाहं परमं पिण्डमादत्तेऽन्यत्र काङ्क्षति ।
त्रिभागकुक्षिसन्तुष्टो भिक्षुर्भवति तादृशः ॥ ३५ ॥

वस्त्रोत्तमविवर्जी यः पांसुकूलेषु[२] रज्यते ।
मुक्ताहारविहारो यो भिक्षुर्भवति तादृशः ॥ ३६ ॥

कर्माण्यारभते यो न निराशः स च कर्मसु ।
निरुद्धको नोपरतो भिक्षुर्भवति तादृशः ॥ ३७ ॥

कायकोटिविनिर्मुक्तो मोहध्वान्तविवर्जितः ।
अलिप्तः पापकैर्धर्मैर्भिक्षुर्भवति तादृशः ॥ ३८ ॥

सर्वाशयजनानीतः सर्वाशयविवर्जितः ।
सर्वाशयविनिर्मुक्तो भिक्षुर्भवति तादृशः[३] ॥ ३९ ॥

[1]आर्याष्टाङ्गेन मार्गेण निर्वाणपुरतः स्थितः ।
सर्वार्थिधर्मता ह्येषा[४] भिक्षुर्भवति तादृशः ॥ ४० ॥

शान्तेन्द्रियो दृढमतिः कामपाकविवर्जितः ।
एकाग्रसंस्थितमना भिक्षुर्भवति तादृशः ॥ ४१ ॥

भूमिसङ्क्रमणज्ञो यो भूमितत्त्वनिदर्शकः ।
भूमेः परापरज्ञो यो भिक्षुर्भवति तादृशः ॥ ४२ ॥

---

1. अस्य व्याख्यानं पूर्वं ( १।२३ ) प्रपञ्चितम् ।

---

१. रामैः—क,
२. पांशुक, ख ।
३. श्लोकोऽयं 'क' पुस्तके नास्ति ।
४. क्लेशा—ख ।

सम्भवासम्भवान् धर्मान् हेतुप्रत्ययसम्भवान् ।
जानीते विधिवत् सर्वान् भिक्षुर्भवति तादृशः ॥ ४३ ॥

ब्रह्मचारी ऋतुज्ञानी स्त्यानमिद्धविवर्जितः ।
कल्पोदग्रोऽवनौ दक्षो भिक्षुर्भवति तादृशः ॥ ४४ ॥

शमस्थोविपश्यनाश्च चतुर्ध्यानरतश्च यः ।
आलये मुदितारामो भिक्षुर्भवति तादृशः ॥ ४५ ॥

पक्षिणो गगनस्थस्य छायेवानुगतः सदा ।
सद्धर्मस्यानुजीवी स भिक्षुर्भवति तादृशः ॥ ४६ ॥

क्लेशोपक्लेशबधकः समदर्शी शुभान्वितः[१] ।
अनापानविधिज्ञो यो भिक्षुर्भवति तादृशः ॥ ४७ ॥

अनुक्रमविधिज्ञो यो योगवित् तत्त्वदर्शकः ।
पारापारविधिज्ञो[२] यो भिक्षुर्भवति तादृशः ॥ ४८ ॥

यो न हृष्यति हर्षेषु भयेषु न बिभेति च ।
मुक्तो[३] हर्षभयोद्वेगैर्भिक्षुर्भवति तादृशः[1] ॥ ४९ ॥

जन्ममरणतत्त्वज्ञः सुरासुरनमस्कृतः ।
परावरज्ञः सत्त्वानां भिक्षुर्भवति तादृशः ॥ ५० ॥

सङ्घाटिमात्रसंहृष्टः सञ्चयेषु न रज्यते ।
अल्पेच्छो ब्रह्मचारी यो भिक्षुर्भवति तादृशः ॥ ५१ ॥

एकाशी वृक्षमूले यः सदा ध्यानं समीहते ।
लाभसत्कारविरतो भिक्षुर्भवति तादृशः ॥ ५२ ॥

उपेक्षाकरुणारागो मोक्षदोषविवर्जितः ।
निर्दग्धदोषसर्वस्वो भिक्षुर्भवति तादृशः ॥ ५३ ॥

---

1. भावदृष्ट्या पद्यमिदं तुलनीयम्—
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥
—श्रीमद्भगवद्गीता–१२/१५ ।

---

१. शुभभवति–क, शुभमति–ख । २. नागपार–क, मार्गपार–ख ।

३. सदा–क, ख ।

मन्दवीर्यकुसीदानां भिक्षूणां दर्शनाय च ।
नान्ययोगाभिरक्तो यो भिक्षुर्भवति तादृशः ।। ५४ ।।

**कौसीद्याभिरतो भिक्षुः नहि कल्याणमर्हति**

न शय्यासनसम्भोगी भिक्षुर्बुद्धेन भाषितः ।
कौसीद्यभिरतो यस्तु नासौ कल्याणमर्हति ।। ५५ ।।

क्लेशानां मूलपाकं हि कौसीद्यं यस्य विद्यते ।
तस्य दुःखं महाघोरं[१] संसारे सम्प्रवर्तते ।। ५६ ।।

कौसीद्यमेव यस्यास्ति तस्य धर्मो न विद्यते ।
केवलं वस्त्रमात्रेण 'भिक्षुः' स इति कथ्यते ।। ५७ ।।

**भिक्षुर्भवति न तादृशः**

नाध्यापने रतिर्यस्य न ध्यानेनाशु रक्षति ।
केवलं वस्तुमात्रेण भिक्षुर्भवति तादृशः ।। ५८ ।।

विहाराभिरतो यस्तु न रतो धर्मगोचरे ।
स्त्री-मद्यलोलुपमतिर्भिक्षुरस्ति न तादृशः ।। ५९ ।।

(भवेन्मतिर्यस्य नित्यं विविधे) पापकर्मणि ।
स भिक्षुर्देशितो बुद्धैः न भोक्ता स्वकगोचरे ।। ६० ।।

वरमाशीविषविषं कथितं ताम्रमेव च ।
भुक्तस्यात्यन्तदुःशीलैरधिकं पापभोजनम् ।। ६१ ।।

यो हि नार्हति पिण्डाय नासौ पिण्डाय कल्पते ।
यस्य पिण्डीकृताः क्लेशाः सर्पा इव विलेशयाः [1]।। ६२ ।।

स भिक्षुः पिण्डभोजी स्यान्न स्त्रीदर्शनतत्परः ।
बन्धकं यदि चात्मानं कृत्वा परशुभक्षतिम् ।। ६३ ।।

---

1. श्लोकोऽयं 'ख' पुस्तके एवं विद्यते—

यस्य पिण्डिकृता क्लेशा नरकायसकल्पते ।
ये नरान्ता हृताक्लेशाः सर्पा इव विलेशया ।।

—धर्मसमुच्चयः ।

---

१. मनश्चा–क, ख ।

## भिक्षोर्दुर्गुणानां स्वरूपम्

कथं स भिक्षुर्विज्ञेयः सङ्घरत्नप्रदूषकः।
यस्येष्टा लाभसत्कारा विषया यस्य सम्मताः ॥ ६४ ॥

नारिदर्शनसाकाङ्क्षी न भिक्षुर्न गृहीव सः।
राजसेविषु सृष्टाशो मद्यपः क्रोधनस्तथा ॥ ६५ ॥

सदा भिक्षुर्वञ्चयते दायकान्ननु चेतसा।
उपायनान्युपादाय राजद्वाराश्रिता हि ये।
संरब्धा गृहिभिः सार्धं यथा नागा वनाश्रिताः ॥ ६६ ॥

तस्मात् तानेव पुष्णन्ति वातेर्ष्यास्ते समागताः।
पुत्रदारान् परित्यज्य ये शान्ता रत्नमाश्रिताः ॥ ६७ ॥

## भिक्षोर्गुणानां माहात्म्यम्

प्रहाय दोषान् यो भिक्षुरस्ति दर्शनतत्त्ववित्।
रूपादिस्कन्धतत्त्वज्ञो मोक्षाय यतते सदा ॥ ६८ ॥

धर्मावबोधाभिरतो ध्यानारामविहारवान्।
तत्त्वलक्षणसम्बोधात् प्राप्नुयात् पदमव्ययम् ॥ ६९ ॥

मैत्र्यारामो हि सततमुद्युक्तो धर्मगोचरे।
तत्त्वलक्षणतत्त्वज्ञो भिक्षुर्भवति तादृशः ॥ ७० ॥

योनिशस्तु मतिर्यस्य कामक्रोधैर्न हन्यते।
स भिक्षुरिति विज्ञेयो विपरीतस्ततोऽन्यथा ॥ ७१ ॥

सर्वभूतदृढः शान्तः सर्वसङ्गतिवर्जितः।
सर्वबन्धननिर्मुक्तो भिक्षुर्भवति तत्त्ववित् ॥ ७२ ॥

कर्मणि यस्य विज्ञानविषयैर्यो न हन्यते।
निर्मलः स्यात् कनकवत् सन्तुष्टो भिक्षुरुच्यते ॥ ७३ ॥

प्रियाप्रिये मनो यस्य न लेपमनुगच्छति।
सङ्कल्पानां विधिज्ञो यः सर्वपापविवर्जितः ॥ ७४ ॥

अन्यसंदुष्टचरितो[1] धर्मशीलो जितेन्द्रियः।
अहीनसत्वो मतिमान् भिक्षुर्भवति तादृशः ॥ ७५ ॥

शास्त्रे शास्त्रार्थविज्ञाने मतिर्यस्य सदा रता।
न पानभोजनरतः स भिक्षुः शान्तमानसः ॥ ७६ ॥

---

१. संक्रुष्टचरितो–क, ख।

**भिक्षोः स्वरूपनिरूपणम्**

वनारण्यविहारेषु श्मशाने तृणसंस्तरे।
रमते यस्य तु मनो भिक्षुर्भवति तादृशः ॥ ७७ ॥

दोषाणां कर्मतत्त्वज्ञः फलवित् परिशेषतः।
हेतुप्रत्ययतत्त्वज्ञो भिक्षुः स्याद् वीतकल्मषः ॥ ७८ ॥

(हत)किल्विषकान्तारो हतदोषो जितेन्द्रियः।
पुनर्भवविधिज्ञो यो भिक्षुः शान्तमनाः (स्मृत) ॥ ७९ ॥

नोत्कर्षो हृष्टहृदये निन्दया नैव रूष्यति[1]।
समुद्रतुल्यगाम्भीर्यो योगवान् भिक्षुरुच्यते ॥ ८० ॥

आवेणिको दृढमतिः सूक्ष्मवादी न लोलुपः।
कामवादी[2] समो दक्षः स भिक्षुः शान्त उच्यते ॥ ८१ ॥

कामधातूपगान् हेतून् रूपधातौ तथैव च।
आरूप्येषु च तत्त्वज्ञः शास्त्रा भिक्षुः स उच्यते ॥ ८२ ॥

न लौकिककथासक्तः शत्रुदोषबधे सदा।
विषवद् यस्य विषयाः स भिक्षुर्देशितो बुधैः ॥ ८३ ॥

शुद्धा यस्य (हि) कामेषु मतिर्भवति नित्यशः।
स निर्मुक्तमतिर्भिक्षुर्मुक्तः संसारबन्धनात्[3] ॥ ८४ ॥

ध्यानाध्ययनकर्मण्यः कौसीद्यं यस्य दूरतः।
हितकारी च सत्त्वानाम् आरण्यो भिक्षुरुच्यते ॥ ८५ ॥

प्रश्नोत्तरमतिर्यस्य प्रतिभावान् जितेन्द्रियः।
स धर्मः कथितो ज्ञेयो विपरीतस्तृणैः समः ॥ ८६ ॥

**बुद्धशासने कीदृग् भिक्षुः शस्तः ?**

कायमानसभीर्यस्य[4] सर्वदा नैव खिद्यते।
सर्वकृत्यकरो ज्ञेयो यः सङ्घाय च तत्परः ॥ ८७ ॥

न परार्थं न लोभार्थं यशोऽर्थं कुरुते न तु।
सङ्घकार्ये मतिर्यस्य स मुक्तः सर्वबन्धनैः ॥ ८८ ॥

---

१. रूष्यते–क, ख। २. कालवादी–क।
३. वन्धनैः–क। ४. कार्यक्षमस–क,ख।

न स्वर्गार्थं मतिर्यस्य लाभार्थं यशसे न वा।
निर्वाणार्थं क्रिया सर्वा स भिक्षुः स्रोत उच्यते ।। ८९ ।।

पापेभ्यो नित्यविरतः सत्कृत्येषु रतः सदा।
न पापमित्रसंसर्गी भिक्षुः स्याद् बुद्धशासने ।। ९० ।।

मैत्र्या भावितचित्तस्य दक्षस्य ऋजुचेतसः।
शिक्षापदेषु रक्तस्य[१] निर्वाणं नातिदूरतः ।। ९१ ।।

जरामरणशीलस्य[२] संसारविमुखस्य च।
ध्यानेऽपि न प्रमत्तस्य निर्वाणं नातिदूरतः ।। ९२ ।।

[1]अनित्यताविधिज्ञस्य शून्यतावत्क्रियावतः[३]।
ध्यानोत्कर्षविधिज्ञस्य निर्वाणं नातिदूरतः ।। ९३ ।।

धीरोऽयमग्रचोरोऽयं योऽयं भिक्षुरसंवृतः।
अन्तःपुरीवरस्रावी बहिश्चीवरसंवृतः ।। ९४ ।।

## धर्मविनयाद् रिक्तो भिक्षुर्दुःखभागी भवेदेव

यथा यत्नमयो राशिः सर्वोऽसारश्च दुर्बलः।
एवं सञ्चरति रिक्तो वितथो भिक्षुवादिकः ।। ९५ ।।

स नारकेयो दुःशीलः सङ्घरत्नबहिष्कृतः।
कायस्य भेदान्नरकं नीयते चित्तवञ्चितः ।। ९६ ।।

वञ्चितो धर्मविनयाद् याति तत् स्वेन कर्मणा।
मलिनस्तमसा बद्धो दुःखभागी भविष्यति ।। ९७ ।।

अप्रावृतः शुभ्रधर्मान्नग्नः साधुजुगुप्सितः।
नयते नरकं घोरं यथा धर्मबहिष्कृतः ।। ९८ ।।

अशोभनस्य निचयो दुःखद्वारमनावृतम्।
संसारबन्धनं तीव्रं दौःशील्यमिति कथ्यते ।। ९९ ।।

असंवरेण यो दग्धः स दग्धो वह्निना भृशम्।
तस्य संवरक्षीणस्य विनिपातो ध्रुवं स्थितः ।। १०० ।।

---

1. अस्य व्याख्यानं पूर्वं (५/२६) प्रपञ्चितम्।

---

१. कण्डस्य—क। २. भीतस्य—क, ख।

३. क्रियाश्रयः—क, ख।

### कुकर्तृभिक्षुरपि नरकं याति

मनसा संवरस्थेन स्वाचारैः संवरायते।
समूढचर्यामारुह्य नरकायोपकल्पते॥ १०१॥

अशुभं वर्धते तस्य दिवारात्रौ च सर्वतः।
यस्य शीलमयं रत्नं दौःशील्येन निवारितम्॥ १०२॥

धर्मशून्यस्य रिक्तस्य तमसा संवृतस्य च।
विद्यतेऽसंवरस्तस्य यो न शौचाय कल्पते॥ १०३॥

असंवरमयः पाशो मलिनः साधुवर्जितः।
आकर्षति स दुःशीलान् पापिष्ठान् शीलवर्जितान्॥ १०४॥

असंवरैश्च दौःशील्यैः पापैश्च सह सङ्गतिः।
दूतका नरकस्यैते कामानामपि सेवकाः॥ १०५॥

असंवृतप्रसूतस्य चपलस्य विशेषतः।
पापकर्माभियुक्तस्य नरकं नातिदूरतः॥ १०६॥

किमेते नावगच्छन्ति कर्मणां सदृशं फलम्।
अक्षिपाताय मूढाय दुर्मतौ (ये) विमोहिताः॥ १०७॥

अहन्यहनि वर्धन्ते पापनद्यो दुरासदाः।
दुःखोर्मिमालाश्चपलाः पापिष्ठजनहारिणः॥ १०८॥

न तेषां सुकरं जन्म न तेषां सुकरं मनः।
अशीलाः[१] पुरुषा ये वा शुक्लधर्मविवर्जिताः॥ १०९॥

### धर्मोऽत्युच्चः शुभो मार्गः

अत्युच्चश्च शुभो मार्गः स 'धर्म' इति कथ्यते[२]।
तं प्राप्यमनुजः शीघ्रं प्रयाति पदमच्युतम्॥ ११०॥

ततोऽपवादाः साध्यन्ते शक्तिमन्तः सुखास्तु ये।
संवरस्य सदा दासास्तेषां दुःखं न विद्यते।
दौःशील्यपरमो ह्येष मलिनीकुरुते नृणाम्॥ १११॥

ये शैक्ष्यपदविभ्रष्टा भागिनो नरकस्य ते।
एवं ज्ञात्वा नरः सर्वं संवरं प्रतिपद्यते॥ ११२॥

---

१. शीलवर्जिता–क, ख। २. पदमात्मनः–ख।

**शुभधर्मो भिक्षुर्निर्वाणं नातिचिरं प्राप्नोति**

भवार्णवस्य सर्वस्य सेतुभूतो हि संवरः ।
शुद्धाजीवविशुद्धस्य शान्तवक्त्रस्य कर्मणः ॥ ११३ ॥

ध्यायिनो विप्रमुक्तस्य निर्वाणं नातिदूरतः ।
धूर्धरस्याप्रमत्तस्य श्मशानवनसेविनः ॥ ११४ ॥

शायिनो भूतले नित्यं निर्वाणं नातिदूरतः ।
पांशुशय्यावलम्बांसपातमेकं सजर्जरम् ॥ ११५ ॥

सन्तोषः फलमूलैश्च स सुखी बुद्धसम्भवः[1] ।
विप्रमुक्तस्य कामेभ्यः सन्तोषो हीतरस्य च ॥ ११६ ॥

सविमुक्तकचित्तस्य निर्वाणं नातिदूरतः ।
कुहकामलमुक्तस्य रजो वा तस्य तायिनः ॥ ११७ ॥

आकाशसमचित्तस्य निर्वाणं नातिदूरतः ।
बहुबद्धपदैर्युक्ता विज्ञेया(भव)चारिका ॥ ११८ ॥

नाशिका ब्रह्मचर्यस्य निर्वाणगतिदुःखिका ।
सेव्यते या जनैर्नित्यं प्राकृतैः शीलवर्जितैः ॥ ११९ ॥

अजस्रं परिवर्ज्या सा ध्यायिभिस्तत्त्वदर्शिभिः ।
दौर्बल्यमूलमेका सा मनस्कारप्रणाशिका ॥ १२० ॥

नाशिनी ब्रह्मचर्यस्य नरकस्य प्रदर्शिका ।
भ्रंशिका स्वर्गमार्गस्य दुःखसागरशोषिका ॥ १२१ ॥

दूतिका प्रेतलोकस्य तिर्यग्योनिनिपातिका ।
नाम्ना सङ्गणिका सेवा संसारे बन्धमातृका ॥ १२२ ॥

ध्यानाध्ययनशक्तैव वर्ज्या नित्यं हि भिक्षुभिः ।
ध्यानाध्ययननिर्मुक्तो निमित्ताभिरतः सदा ॥ १२३ ॥

**परधर्मो भयावहः**

विवर्जितः शुभैर्धर्मैरपापगमनाय सः ।
स्वधर्मं यः परित्यज्य परधर्मेषु रज्यते[1]॥ १२४ ॥

1. भावदृष्टचा पद्यमिदं तुलनीयम्—
श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥
—श्रीमद्भगवद्गीता-३।३५।

१. संमतः-क, ख ।

धर्मद्वयपरिभ्रष्टो विनिपाताय कल्पते ।
स्वगृहं यः परित्यज्य परवेश्यानि तिष्ठति[1] ॥ १२५ ॥

सदाऽयं लाघवं याति निधनं चाशु गच्छति ।
तथा यो विमतिर्भूतो विद्वन्मानी जनेच्छया ॥ १२६ ॥

स्वधर्मविरतिं कृत्वा परधर्मेषु वर्तते ।
अधर्मे चाशयस्तस्य परलिङ्गोपजीविनः ॥ १२७ ॥

तृणविद्याभिलिप्तोऽयं प्रेतः पापेषु पच्यते ।
यशोऽन्तं पदमास्थाय पापकर्मणि वर्तते ॥ १२८ ॥

## नासौ भिक्षुरिहोच्यते

शश्वत् स पतितो दृष्टः शासनान्तात् प्रवर्तते ।
निस्पृहः कामचर्यासु निरामोदः प्रवर्जितः ॥
आरब्धवीर्यः सन्तुष्टो ध्यायी भिक्षुरिहोच्यते ॥ १२९ ॥

न च कामेषु संसक्तो नित्याहारविहारवान् ।
काषायसंवृतः क्षौरो नासौ भिक्षुरिहोच्यते ॥ १३० ॥

निमित्तबोधको ( यस्तु ) नक्षत्रगतिचिन्तकः ।
राजसेवाप्रमत्तश्च न स भिक्षुरिहोच्यते ॥ १३१ ॥

वैद्यकर्माणि कुर्वंश्च श्रुति सङ्ग्रथनं तथा ।
सङ्कीर्णां दिनचर्यां च कुर्वन् भिक्षुः प्रणश्यति ॥ १३२ ॥

ध्यानाध्ययनविद्वेषी रतः सङ्गणिकासु च ।
लोभसत्कारलाभं च कुर्वन् भिक्षुः प्रणश्यति ॥ १३३ ॥

सुवर्णधातुसंसक्तो बहुमित्ररतिश्च यः ।
अन्यलाभाभिलाषितो भिक्षुः पतति शासनात् ॥ १३४ ॥

तपसः सङ्गनिर्मुक्तो न पापगणसेवकः ।
सक्तूदकेन सन्तुष्टः स भिक्षुर्निष्ठुरः स्मृतः ॥ १३५ ॥

## कः शुद्धो भिक्षुः ?

आगतान् विषयान् सर्वान् त्यजति ज्वलनोपमान् ।
विशुद्धदोषो मणिवच्छुद्धो भिक्षुरिहोच्यते ॥ १३६ ॥

---

१. रक्षति--क, ख ।

अन्तर्बहिर्विशुद्धात्मा ज्ञानादिभिरलङ्कृतः ।
श्रद्धया शीलवस्त्रेण क्रियावान् भिक्षुरुच्यते ।। १३७ ।।

लोभधर्मव्यतीतो यः स्थितो मेरुरिवाचलः ।
सर्वलोकप्रियः शान्तः पारगो भिक्षुरुच्यते ।। १३८ ।।

त्रिरात्रिवासी कुत्रापि कुशासनविधारकः ।
गिरिगह्वरसेवी च विमुक्तो भिक्षुरुच्यते ।। १३९ ।।

पापभीरुरसंस्पर्शी संवृतः च सुसंवृतः ।
ज्ञानसेवी स्थिरः शान्त एकाकी भिक्षुरुच्यते ।। १४० ।।

अचलः प्रियवादी च पापमित्रविवर्जितः ।
अशक्तः सर्वकृत्येषु मुक्तो भिक्षुरिहोच्यते ।। १४१ ।।

## राजसेवा कुकषायोक्तिसेवा

राजसेवा विगर्ह्यास्ति भिक्षोश्चारण्यवासिनः ।
कुकषायोक्तिसेवाऽसौ मृत्युतस्करजीविका ।। १४२ ।।

न हि राजसेवको भिक्षुर्यः सेव्यो देवतैरपि ।
न हिंसासवसंसृष्टो नहतेऽशुचिसेवकः ।। १४३ ।।

## भिक्षोः राजसेवा न शोभते

निर्मलस्य निरामस्य निस्पृहस्य च देहिनः ।
संसारभयभीतस्य राजसेवा न शोभते ।। १४४ ।।

वनारण्यश्मशानेषु पल्वलो गिरिभूमिषु ।
प्रान्तभूमिषु ग्रामस्य स्थितः भिक्षुः प्रशोभते ।। १४५ ।।

वनारण्यश्मशानेषु भिक्षुर्न राजसेवया[1] ।
ध्यानाध्ययननिर्मुक्तः कवलाहारभोजिता[2] ।
न भिक्षुरिति विज्ञेयः पिशाचसममानसः ।। १४६ ।।

ध्यानाद्धि विमलं सौख्यं प्रवदन्ति मनीषिणः ।
न तत्सुखात्सुखं चान्यदस्ति लोके कथञ्चन ।। १४७ ।।

तदुत्तमध्यानसुखं मुक्त्वा यः पुरुषाधमः ।
रसेषु रमते बालस्तेन मूढो विहन्यते ।। १४८ ।।

---

१. प्रशोभते—क । २. ग्रहिता—क, ख ।

विषयैर्भ्रामितस्यास्य नित्यं तद्गतचेतसः[१] ।
वर्धन्तेऽकुशला धर्माः परलोकापकर्षकाः ॥ १४९ ॥

## आत्मज्ञो भिक्षुर्निर्वाणमधिगच्छति

आत्मनो यानहीनश्च गुरुपृच्छनकस्तथा ।
भिक्षुरुद्युक्तवीर्यश्च निर्वाणमधिगच्छति ॥ १५० ॥

श्रुतं यावद् भवत्येव तावदेव प्रभाषते ।
आत्मज्ञो मानहीनश्च भिक्षुर्भवति तत्त्वविद् ॥ १५१ ॥

मानापमानहीनो यो मार्गामार्गविचक्षणः ।
स्वपरार्थविधिज्ञो यः स तुष्टो भिक्षुरुच्यते ॥ १५२ ॥

## मानिनः कुतः शान्तिः ?

मानिनः क्रूरमनसश्चपलस्याल्पमेधसः ।
लाभसत्कारयातस्य कुतः शान्तिर्भविष्यति ? ॥ १५३ ॥

प्रसन्नाचारयुक्तस्य ज्ञानगोचरसेविनः ।
संसारदोषभीतस्य प्रव्रज्या सफला मता ॥ १५४ ॥

स्वभावपरभावेषु यस्य बुद्धिर्नमुञ्चति[२] ।
न कर्मण्यविपाके च मार्गामार्गे तथैव च ॥ १५५ ॥

## निवासोपहतो भिक्षुः सुखं न विन्दति

सदाचारवियुक्तस्य[३] सुखदुःखाभयस्य च ।
निवासोपहतो भिक्षुर्बालवद् दृश्यते परैः ॥ १५६ ॥

तृणवल्लघुतां याति स्वार्थाच्च परिहीयते ।
निवासोपहतो भिक्षुः परिहीणवने स्थितः ॥ १५७ ॥

ध्यानाध्ययनकृत्येषु मनो नैव प्रवर्तते ।
निवासोपहतो भिक्षुर्जनसञ्चयतत्परः ॥ १५८ ॥

सञ्चयव्यग्रमनसा जीवितं परिहीयते ।
क्षिणोति रेतसं[४] स्वस्य जीवितं नैव गच्छति[५] ॥ १५९ ॥

---

१. मनसः–क, ख ।
२. मुच्यते–क, ख ।
३. आचरणावि–ख ।
४. रतसं–ख ।
५. विन्दति–क, ख ।

**कः दुर्गतिं याति ?**

न च विन्दति यत् कृत्वा सुखमन्यत्र भुज्यते ।
निवासोपहतो भिक्षुर्जनसञ्चयतत्परः ।
पापानि याति[1] नित्यं स तेन गच्छति दुर्गतिम् ।। १६० ।।

**श्रामण्यधर्मस्य महत्त्वम्**

अनभिप्रेतमनसो[2] निराशस्य च देहिनः ।
सर्वसङ्गविमुक्तस्य श्रामण्यं सफलं मतम् ।। १६१ ।।
गिरिगह्वरवृक्षेषु नित्यं ध्यानविहारिणः ।
प्रसीदति शुभं ज्ञानं दौःशील्यपरिवर्जितम् ।। १६२ ।।

**केषां सफलं जीवनम् ?**

सर्वसङ्गविनिर्मुक्तो विषयैर्न च वञ्चितः ।
(स) भिक्षु निष्फलो ज्ञेयः शुष्केन्धनमिवानलः ।। १६३ ।।

**निर्वाणाभिरतस्य भिक्षोः प्रशंसा**

निर्वाणाभिरतो यो हि भीतस्य विभवार्णवात् ।
भिक्षुर्भवति शुद्धात्मा न निवासेन कर्हिचित्[3] ।। १६४ ।।

**तृष्णा एव अनर्थकरी**

लोभमोहेषु[4] ये शक्तास्ते शक्ता तृष्णया सदा ।
तृष्णाबन्धनबद्धानां नायं लोको न चापरः ।। १६५ ।।

**धर्मज्ञो दुर्गतिं न लभते**

असंशक्ता मतिर्यस्य मिथ्याकर्मसु सर्वदा[5] ।
अपक्षपाती धर्मज्ञो न स गच्छति दुर्गतिम्[6] ।। १६६ ।।

**कः मुनिरुच्यते ?**

दोषपङ्के मनो यस्य न लिम्पति कथञ्चन ।
एकारामविहारीयो निराशो मुनिरुच्यते ।। १६७ ।।
निर्मुक्तो विमलाचारो निवृत्तमलकल्मषः ।
मुक्तो यो विषयैः सर्वैरारण्यो मुनिरुच्यते ।। १६८ ।।

---

१. पापेनगच्छेत–क, ख ।
२. अनभियुक्तस्य–क, ख ।
३. वञ्चितः–ख ।
४. निवासेन तु–ख ।
५. नित्यसः–क ।
६. रुच्यते–क, ख ।

लोकधर्मैर्न निर्वेदं समायाति कथञ्चन ।
सुखदुःखसमप्रज्ञो निर्मलो मुनिरुच्यते ॥ १६९ ॥

सन्तोषः परमो ( धर्मो ) नित्यं कामविवर्जितः ।
निरामयः कृच्छ्रजीवी शुचिर्मुनिरिहोच्यते ॥ १७० ॥

नयेन्न तेन संश्लेषं यत्र यत्रानुगच्छति ।
एकचारी दृढमतिः क्रियावान् मुनिरुच्यते[1] ॥ १७१ ॥

शुभाशुभानां सर्वेषां कर्मणां फलतत्त्ववित् ।
शुभाशुभपरित्यागी लोकेऽसौ मुनिरुच्यते ॥ १७२ ॥

उद्युक्तो दोषनाशाय नित्यकामगतिः स्मृतः ।
उदयव्ययतत्त्वज्ञो बुद्धिमान् मुनिरुच्यते ॥ १७३ ॥

देशकालविदां श्रेष्ठोऽद्वयवादी जितेन्द्रियः ।
संसारभयभीतोऽयं प्रशान्तो मुनिरुच्यते ॥ १७४ ॥

**कः भिक्षुः निर्वाणमधिगच्छति ?**

एकारामगतो भिक्षुः संक्षिप्तेन्द्रियपञ्चकः ।
देहलक्षणतत्त्वज्ञो निर्वाणमधिगच्छति ॥ १७५ ॥

वीर्यवान् (सत्यवाक्) भिक्षुर्नित्यं दोषविवर्जितः ।
उद्यानमिव क्रीडाया निर्वाणमधिगच्छति ॥ १७६ ॥

**कल्याणधर्मो भव**

दग्धे क्लेशे वयं दग्धा[2] वनं दग्धं यथाग्निना ।
कल्याणधर्मे संरक्ता न रक्ता कामभोजने ॥ १७७ ॥

**मायया जनाः वञ्चकाः भवन्ति**

नित्यं प्राप्त्युत्सुका ये (हि) नित्यं स्वजनसंरताः ।
मायया वञ्चका (ये तु) मूढास्ते धर्मवर्त्मनि ॥ १७८ ॥

**शुभकर्मणि मनः कार्यः**

रमणीयान्यरण्यानि तत्रैव रमते मनः ।
रमन्ते वीतरागास्ते न तु कामगवेषिणः ॥ १७९ ॥

स कथाभिरतो यस्तु रतो विषयतृष्णयोः ।
न यास्यति पुरं शान्तं यो च मृत्युं न विन्दति ॥ १८० ॥

---

१. गच्छते—क, ख । २. वह्निनं – क, ख ।

**अद्वयवादी भव**

योऽत्यन्तशान्तमनसा नित्यं ध्यानपरायणः ।
आदिमध्यान्तकल्याणो नित्यमद्वयगोचरः[1] ॥ १८१ ॥

॥ इति भिक्षुवर्गस्त्रिंशः ॥

करुणा-दान-शीलानि-क्षान्तिर्वीर्यमथापि च ।
ध्यानं प्रज्ञाऽथ निर्वाणो मनो भिक्षुश्च ते दश ॥

॥ इति तृतीयम् उदानम् ॥

●

१. पङ्क्तिरियं मूलग्रन्थे एवमस्ति–
—ते छिन्नस्ते च कल्पाना कल्याणयषगोचरा–क, ख ।

# अथ चतुर्थम् उदानम्

**(पुण्य-देव-सुखैर्मित्र-राज-स्तुतिभिरन्विताः ।**
**सद्धर्मस्मृतिवैपुल्यै गृहीतोऽयं समुच्चयः ।।)**

## (३१) पुण्यवर्गः

**पुण्यप्रशंसा**

**रमणीयानि [1]पुण्यानि फलं तेषां परं शुभम् ।**
**तस्मात् कुरुत पुण्यानि नास्ति पुण्यसमं धनम् ।। १ ।।**

---

1. पुण्यं कर्म हि सुखवेदनीयम्, अपुण्यं दुःखवेदनीयम्, आनिञ्ज्यम् अदुःखासुखवेदनीयम् । आनिञ्ज्यं=आनेञ्ज्यं (एजते): आनिञ्ज्य इङ्गतेः गत्यर्थात् ।

कर्मपथवद् पुण्यं क्रिया, वस्तु इति त्रयं भवति । कर्मपथः कर्म भवति कर्मपथश्चा । दानं, शीलं, समाधिश्च प्रत्येकं स्वभावतः पुण्यं क्रिया, वस्तु (क्रियास्थानं) भवन्ति । कायिकं वाचिकं वा कर्म पुण्यक्रिया वस्तु—इष्टविपाकत्त्वात् तत्कर्म 'पुण्य' तत्स्वभाव-कर्मभावात् पुण्यक्रिया, चेतना—विषयाभ्यासस्थानत्त्वात् वस्तु ।

चत्वारः पुद्गला ब्राह्मं पुण्यं प्रसवन्ति । अप्रतिष्ठिते पृथिवी प्रदेशे तथागतस्य शरीरं स्तूपं प्रतिष्ठापयति । अथ प्रथमः पुद्गलः ब्राह्मं पुण्यं प्रसवति । चातुर्दिशे भिक्षुसंघे आरामं निर्यातयति । अयं द्वितीयः ·· ···। भिन्नं तथागतस्य श्रावकसंघं प्रतिसंदधाति । अयं तृतीयः··· ·· ··· । मैत्रीसहगतेन चित्तेनाऽवैरेण असपत्नेन अव्याबाधेन विपुलेन महद्गतेन अप्रमाणेन सुभावितेन एकं दिशमधिमुच्य स्फरित्वोपसम्पद्य विहरति····अयं चतुर्थः । भिन्नं पन भन्ते ! संघं समग्गं कत्वा किं सो पसवतीति ? ब्रह्मं आनन्दपुञ्जं पसवतीति । किं पन भन्ते ! ब्रह्मं पुञ्ञन्ति ? कप्पं आनन्द ! सग्गम्हि मोदतीति । संघं समग्गं कत्वान कप्पं सग्गम्हि मोदति ।

अक्लिष्टदेशना क्लेश इह लाभ-सत्कार-कीर्ति-लिप्सा । सूत्रादीनां धर्मग्रन्थानां तादृशी देशना (उपदेशः) धर्मदानमित्युच्यते ।

पुण्यभागीयं निर्वाणभागीयं निर्वेधभागीयमिति त्रिविधं कुशलम् ।
—अभिधर्मकोशस्य कर्मनिर्देशः ।

पुण्यं निधानमक्षय्यं पुण्यं रत्नमनुत्तमम् ।
प्रदीपसदृशं पुण्यं मातृवत् पितृवत् सदा ।। २ ।।

पुण्यं कृत्वा गता देवाः पुण्यं नयति सद्गतिम् ।
पुण्यं कृत्वा नरा लोके मोदन्ते त्रिदिवे हि (ते) ।। ३ ।।

## पुण्यं परं सुखम्

पुण्याधिका हि पुरुषा भवन्ति सुखिनः सदा ।
तस्मात् कुरुत पुण्यानि नास्ति पुण्यसमं सुखम् ।। ४ ।।

पुण्यं कृत्वा गता देवाः पुण्यप्रियधनस्य च ।
हेतुभूतं सदा दृष्टं तस्मात् पुण्यं परं सुखम् ।। ५ ।।

## पुण्यादृते सुखमसंभवम्

पुण्यं नित्योत्तमं दृष्टं छायावदनुगामिकम्[१] ।
तस्मात् सुखं परं पुण्यं नास्ति पुण्यादृते सुखम् ।। ६ ।।

## पुण्यापुण्यफलयोरन्तरम्

पुण्योत्तीर्णाः पुनर्देवा पतन्ति सुकृतानुगाः ।
पुण्यापुण्यफलो लोकस्तस्मात् पुण्यं समाचरेत् ।। ७ ।।

## अपुण्यनिन्दा

ये पुण्यहीना दुर्दान्ता नित्यं कुगतिगामिनः ।
कुतस्तेषां सुखं दृष्टं सिकतासु यथा घृतम् ।। ८ ।।

वित्तेन वञ्चिता मूढाः पुण्येन परिवञ्चिताः ।
न तेषां विद्यते शर्म दुःखं तेषामनुत्तरम् ।। ९ ।।

## पुण्यवशाद् देवलोकं गच्छति

मानुष्यं सुकृतं ह्येतत् कृते भवति देहिनः ।
तेन कर्मविपाकेन स्वर्गलोकेषु जायते ।। १० ।।

प्रियो भवति यस्यात्मा यस्य सौख्ये स्थिता मतिः ।
स करोतु महत्पुण्यं देवलोकोपपत्तये ।। ११ ।।

---

१. पङ्क्तिरियं 'क' पुस्तके नास्ति ।

### धर्मचारी पुरुष एव सुखमवाप्नुते

धर्मचारी हि पुरुषः सुखात् सुखमवाप्नुते ।
निर्मलश्च परां शान्ति क्षिप्रमेवाधिगच्छति ।
तस्मात् कुरुत पुण्यानि (यन्नित्यं)सांप्रचायिकम् ।। १२ ।।

### पुण्यकर्तृ अव्ययं सुखमश्नुते

पुण्यकारी सदा दान्तो पदं गच्छति चाव्ययम् ।
रमणीयानि पुण्यानि करणीयान्यनेकशः ।। १३ ।।

### पुण्यस्य वैचित्र्यं धर्मस्य उपादेयता च

विचित्रं हि कृतं पुण्यं विचित्रं परिपच्यते ।
धर्माधर्मप्रधानस्य जीवलोकस्य सर्वतः ।
शमत्राणो यथा धर्मस्तस्माद् धर्मरतो भवेत् ।। १४ ।।

### अधर्मो दुःखं प्राप्नोति

यो (हि) धर्मं परित्यज्य रमते कुकृते नरः ।
तस्य दुष्कृतदग्धस्य दुःखं भवति नित्यशः ।। १५ ।।

### धर्मे एव मनः कार्यम्

यावन्नाभ्येति मरणं यावत् सकलचिन्तनम् ।
तावद् धर्मे मनः कार्यमुपशान्तिर्भविष्यति ।। १६ ।।

### परोपकर्तृ निर्वाणपुरं याति

यो हि देशयते धर्मं परेषां हितकाङ्क्षया ।
स माता स पिता चैव निर्वाणपुरदेशकः ।। १७ ।।

### शास्तुः सुभाषितममूल्यम्

शुभाधिकपरश्चैकः यो देशयति देशिकः ।
स गत्यन्तरमार्गज्ञो नाथो भवति देहिनाम् ।
न मूल्यं विद्यते शास्तुः[1] सुभाषितपदस्य वै ।। १८ ।।

### साधारणद्रव्याद् धर्मद्रव्यस्य वैलक्षण्यम्

न पदं लभते शान्तं यद् धनैरुपलभ्यते ।
द्रव्यं साधारणं दृष्टं न धर्मो बुद्धिबन्धनम् ।। १९ ।।

---
१ सातु–क ।

### धर्मद्रव्यमक्षुण्णमस्ति

द्रव्यं विनश्यति नृणां धर्मद्रव्यं न जातु वै[१]।
आभ्यन्तरसहस्राणि धर्म एकोऽनुगच्छति ।। २० ।।

न धनं पदमप्येकं गच्छन्तमनुगच्छति ।
हीयते द्रविणं तेषां[२] राजचौरोकाग्निभिः ।
धर्मवित्तं न तच्छक्यमपहर्तुं कथञ्चन ।। २१ ।।

### अतो धर्मपरो भवेत्

अचिरेणापि कालेन भुक्त्वा सौख्यमनेकशः ।
भवत्यवश्यं पतनं तस्माद् धर्मपरो भवेत् ।। २२ ।।

धर्म एकः परं त्राणं धर्म एकः परा गतिः ।
धर्मेण पूर्ववर्त्येष मरणं चाप्यधर्मतः ।। २३ ।।

### धर्मचारिणः प्रशंसा

वरं धर्मो धर्मचारी धर्ममेव निषेवते ।
स सुखात् सुखमाप्नोति न दुःखमनुपश्यति ।। २४ ।।

### अधर्मचारिणो निन्दा

अधर्मचारी पुरुषो यदाऽधर्मं निषेवते ।
स तदा[३] दुःखमाप्नोति नरकेषु पुनः पुनः ।। २५ ।।

### निर्वाणमहत्त्वम्

[1]रत्नत्रयप्रसादस्य भावितस्याप्यनेकशः ।
फलं भवति निर्वाणं पूर्वस्वर्गोपजीविनः ।। २६ ।।

---

1. त्रयाणाम् असंख्येयकल्पानां साधनसञ्चयेन (पारमितापूर्त्या) बुद्धत्वं भवति । असंख्यसंख्या च दशोत्तरवृद्धचाषष्ठिस्थानं यावत् दश-शत-सहस्रप्रभेद (१०,०००) लक्षाऽतिलक्ष-कोटि-मध्याऽयुत-महायुत-नयुत-महानयुत-प्रयुत-महा-प्रयुत-कंकर-महाकंकर, बिम्वर-महाबिम्वरा-ऽक्षोभ्य-महाक्षोभ्य-विवाह-म०-उत्संग-म०-वाहन-म० टिटिभ-म०-हेतु-म०-करभ-म०-इन्द्र-म०-सम्पात म०-गति-म०-निम्बरजो-म०-मुद्रा-म०-बल-म०-संज्ञा-म०-विभूत-म०-बलाक्ष-म०-असंख्येति ।

---

१. पङ्क्तिरियं 'क' पुस्तके नास्ति ।  २. नृणां—क, ख ।
३. सदा—ख ।

**आत्मनैव पुण्यमाचरणीयम्**

आत्मना क्रियते पुण्यमात्मना प्रतिपद्यते।
सुखं वा यदि वा दुःखमात्मनैवोपभुज्यते ॥ २७ ॥

**शीलवतः पुण्यप्रभावो विपुलः**

नदीस्रोत इवाजस्रं पुरुषस्य प्रवर्तते।
पुण्यप्रभावो विपुलो यस्य शीले रतं मनः ॥ २८ ॥

भवजन्यं फलं यस्य (यस्मै) धर्मो न रोचते।
धर्मो हि नयति स्वर्गं धर्मचारी सुखान्वितः ॥ २९ ॥

**धर्मादृते पुरुषः नरकं याति**

एतदेव हि पर्याप्तं यद् धर्मपरिपालनम्।
धर्मादृते हि पुरुषो नरकानुपधावति ॥ ३० ॥

**धर्मविगर्हणान्मरणं श्रेयः**

श्रेयो भवेद्धि मरणं न तु धर्मविगर्हणम्।
धर्मेण वर्जितो लोकः संसारे सर्वदा भ्रमेत् ॥ ३१ ॥

**धर्मविरहितस्य दुःखमयं जीवनम्**

धर्मचक्षुर्विमुक्तस्य मोहेनाक्रान्तचेतसः।
वृथा सौख्यमिदं दृष्टं दृष्ट्वा यातो यथाऽपरः ॥ ३२ ॥

धर्माङ्कुरो मनः क्षेत्रे नैव रोहत्यचेतसः।
यस्य शीलप्रदा बुद्धिः धर्माचरणतत्परा ॥ ३३ ॥

शुभेन सविशुद्धेन भावितेन प्रयत्नतः।
प्रयान्ति तत् पदं शान्तं यत्र दुःखं न विद्यते ॥ ३४ ॥

---

अत्र मध्येऽष्टौ स्थानानि पुरा विवृतानि। सर्वे षष्ठिः बिन्दवोऽपेक्ष्यन्ते।

आयुषोऽपकर्षे ह्रासे यावत् मनुष्या शतायुषो भवन्ति, तावद् बुद्धानामुत्पादः। विंशतिसहस्रतः शतपर्यन्ते आयुः प्रमाणे बुद्धा उत्पद्यन्ते। न ततोऽधिके न्यूने वा। प्रत्येकबुद्धानां तु आयुषोऽपकर्षे उत्कर्षेऽपि उत्पादो भवति। खड्गविषाणकल्पबुद्धः कल्पशतपुण्यादिसाधनसञ्चयेन जायते।

अन्ते गौतमबुद्धो जातः। तत्र प्रथमा संख्येयो रत्नशिखिसम्बुद्धकाले, द्वितीयो दीपङ्करकाले, तृतीयो विपश्चिकाले समाप्तः। यथा—

चक्रवर्ति समुत्पत्तिर्नाऽधोऽशीति सहस्रकात्।
सुवर्णरूप्यताम्राऽयश्चक्रिणः तेऽधरक्रमात् ॥

—अभिधर्मकोशः—३/९५।

**इन्द्रियवशी मारं नातिवर्तते**

इन्द्रियाणां वशे यस्तु विषयेषु तथैव च ।
स सर्वबन्धनैर्बद्धः स मारं नातिवर्तते ॥ ३५ ॥

**पापकैर्धर्मैरलिप्त एव स्वस्थः**

अलिप्तपापकैर्धर्मैः निर्धनात् कनकद्युतिः ।
स मुक्तभवकान्तारः स्वस्थो भवति सर्वतः ॥ ३६ ॥

**बुद्धादीनां पूजया निर्वाणलाभः**

बुद्धो येषां बहुमतो नित्यं धर्मश्च गोचरः ।
शुश्रूषाऽऽचार्यपादानां श्रद्दधानश्च कर्मणाम् ॥ ३७ ॥

त्रिरत्नपूजया नित्यं सद्बुद्धिश्च (सु) निर्मला ।
मातापितॄणां पूजातः निर्वाणपुरगामिनाम् ॥ ३८ ॥

प्रव्रज्याभावधर्माश्च समेषां सम्प्रकीर्तिताः ।
ब्रह्मचर्यात्तचर्याणां सर्वसौख्याग्रकारकाः ॥ ३९ ॥

**धर्मदानं सर्वोत्तमम्**

दानानामुत्तमं दानं धर्मदानं प्रकथ्यते ।
उद्योगानां सदा ध्यानं येन गच्छति निर्वृतिम् ॥ ४० ॥

**अग्र्यस्तथागतः प्रोक्तः**

ऊर्ध्वाधस्तिर्यगुक्तस्य लोकस्यानेककर्मणः ।
अग्र्यस्तथागतः प्रोक्तो धर्माणां तत्त्वदर्शकः ॥ ४१ ॥

वर्गाणां चार्थसङ्घोरे प्रवरः शान्त उच्यते ।
क्षेत्राणां त्रिविधं पुण्यं गुणदुःखोभयं ततः ॥ ४२ ॥

माता पितृसमः पूज्य उपाध्यायः सदा भवेत् ।
स उन्मीलयते चक्षुर्वशगोचरतां प्रति ॥ ४३ ॥

**निःसुखा विषया मताः**

अग्राह्या वा सदा दृष्टा मुनिना तत्त्वदर्शिना ।
सुखस्य भूमयो ह्येता निःसुखा विषया मताः[१] ॥ ४४ ॥

---

१. सरसा–क ।

यद्येवं कुरुते धर्मं निर्मलं मार्गदर्शिनम् ।
सौख्यं तस्य भवेन्नित्यं न सौख्यं देवभूमिषु ॥ ४५ ॥

भवान्तरेषु सुकृतं पृष्ठतो देहिनां स्थितम् ।
स आहूय प्रयत्नेन सेवितव्यः सदा नरैः ॥ ४६ ॥

अनागते भयं यो हि पश्यति बुद्धचक्षुषा ।
स पण्डितः सदा धीरो मूर्खत्वादतिभीरुकः ॥ ४७ ॥

विपत्तिजं भयं दृष्ट्वा (मार्गं) पश्यति बुद्धिमान् ।
स हि विघ्ने तु सम्प्राप्ते न विषादेन बाध्यते ॥ ४८ ॥

अथ मूढमतिर्नित्यं विषयानेव सेवते ।
विमोहितः स विषयैः पश्चात्तापेन दह्यते ॥ ४९ ॥

**समग्रं जन्म पुण्यानि करणीयानि**

यावत् समग्रं जन्मेदं ज्ञानं याति विनाविलम् ।
तावत् कुरुत पुण्यानि दुःखं ह्यकृतपुण्यता ॥ ५० ॥

क्षयं प्रयान्ति पुण्यानि त्वरितं याति जीवितम् ।
धर्मसङ्ग्रहणे यत्नः कर्त्तव्यस्तुषिते सुरैः ॥ ५१ ॥

यो हि धर्मं परित्यज्य प्रमादोपहतो नरः[1] ।
न सञ्चिनोति पुण्यानि स पश्चादपि तप्यते ॥ ५२ ॥

न यावदायाति जरा न व्याधिः सह मृत्युना ।
तावत् कार्याणि पुण्यानि मा पश्चात् परितप्यथ ॥ ५३ ॥

असङ्गृहीतपुण्यस्य प्रमादोपहतस्य च ।
नरके कारणं दुःखं प्रमादस्त्वां हनिष्यति ॥ ५४ ॥

किं तस्य जीवितेनार्थैः किं भाग्यैः किं च बान्धवैः ।
सबलेन्द्रियतां प्राप्य यो न धर्मरतः सदा ॥ ५५ ॥

अहन्यहनि कर्त्तव्यं धर्मसङ्ग्रहणे मनः ।
विरतिश्चापि पापेभ्यः साधूनां दर्शने न च ॥ ५६ ॥

शीलेन यः सुरो जन्म लब्ध्वेदं काममोहितः ।
न सञ्चिनोति पुण्यानि स भवं नातिवर्तते ॥ ५७ ॥

---

1. सुरः – क, ख ।

**धर्मरताः सदा वन्द्याः**

ज्ञानारम्भाभिरतयः शीलरत्नविभूषिताः ।
कामरागाद्धि[1] ये भीता देवानां देवसम्मताः[2] ॥ ५८ ॥

देवास्ते हि सदा वन्द्या ये धर्मे निरताः सदा ।
ये तु नित्यं[3] भवासक्तास्ते सर्वे निधनं गताः ॥ ५९ ॥

धर्मसेतुमिमं प्राप्य पारावारगतं महत् ।
न सञ्चरति यस्तूर्णं भवान्नैव प्रमुच्यते ॥ ६० ॥

**शुभं नैव प्रणश्यति**

शुभानुचारिधर्मैश्च शुभं भवति सर्वदा ।
कल्पकोटिसहस्रेण शुभं नैव प्रणश्यति ॥ ६१ ॥

**पुण्यप्राप्त्यर्थे करणीयानि कर्त्तव्यानि**

सङ्गृहीतं सदा शीलं ज्ञानं च परिवर्तितम् ।
दानं चाभिक्षया दत्तं भवति स्वरसात्मकम् ॥ ६२ ॥

**सदैव गुणाः सेव्याः**

दोषास्त्रयः प्रणश्यन्ति त्रिभिर्दानादिभिर्नृणाम् ।
तस्माद् दोषान् परित्यज्य गुणाःसेव्याः प्रयत्नतः ॥ ६३ ॥

**ज्ञानेन लौकिकं दुःखं नश्यति**

संसर्गो धर्मशीलानां ज्ञानारम्भः प्रयत्नतः ।
नश्यति भवजं दुःखमर्कपादैर्यथा तमः ॥ ६४ ॥

अभ्युपेयो देवरतो देवताभिश्च वन्द्यते ।
प्राप्य जन्मान्तरं चापि निर्वृतिं चाशु गच्छति ॥ ६५ ॥

॥ इति पुण्यवर्ग एकत्रिंशः ॥

---

१. कामैरागस्य – क, ख ।
२. देवसम्मताभूषिता – क ।
३. तस्माविषयरतास्ते – क, ख ।

## (३२) देववर्गः

**सौगतमार्गे चरन्तः पुरुषा देवतुल्याः**

पन्थानो मुनिना शास्त्रे उक्ता ये तत्त्वदर्शिना ।
तैस्तु सम्प्रस्थितास्ते (हि) पुरुषा देवसम्मताः ॥ १ ॥

**सुगतोक्तो मार्गः**

सत्यं हि दानं च तथैव मैत्री
सत्त्वेषु रक्षा प्रियवादिता च ।
सम्यक्त्वदृष्टिर्विमलं मनश्च
पन्थानमाहुस्त्रिदिवस्य बुद्धाः ॥ २ ॥

शुक्लधर्मसमायुक्तः शुक्लचित्तसमन्वितः ।
सुखात् सुखतरं याति ज्योतिर्ज्योतिःपरायणः ॥ ३ ॥

ज्योति(र्हि)ज्योतिषा पूर्णं[1] दीपो दीपान्तराद् यथा ।
तस्माद्धि परमांल्लोकान् प्रयाता सम्प्रपद्यते ॥ ४ ॥

**आचारवान् देवानामन्तिकं व्रजेत्**

यस्य शुद्धं सदा चित्तं निर्मलं मणिवत् सदा ।
स शान्तो निर्ममो धीमान् देवानामन्तिकं व्रजेत् ॥ ५ ॥

ध्यानशीलसमाधिभ्यो यस्य चित्तं शुभान्वितम् ।
स धीमान् काञ्चनप्रख्यो देवानामन्तिकं व्रजेत् ॥ ६ ॥

प्राणातिपाताद् विरतः सर्वसत्त्वदयापरः ।
ऋतुस्रोतोऽनुकम्पाश्च देवानामन्तिकं व्रजेत् ॥ ७ ॥

श्रुतवान् सर्वलोकस्य क्रूरकर्मविवर्जितः ।
अलिप्तः पापकैर्धर्मैर्देवानामन्तिकं व्रजेत् ॥ ८ ॥

तृणवत् काञ्चनं यस्य कामा यस्य विषोपमाः ।
स कामवर्जको धीमान् देवानामन्तिकं व्रजेत् ॥ ९ ॥

---

१. पूर्णानि–क, ख ।

नाकृष्यते मनः कामैर्विषयै रागहेतुभिः ।
समन्तात्भवकान्तारैर्देवानामन्तिकं[१] व्रजेत् ॥ १० ॥

भिन्नाः परम्परा आदौ मित्रवान् धनबान्धवः ।
यः करोति सुसंश्लिष्टा देवानामन्तिकं व्रजेत् ॥ ११ ॥

यस्य बुद्धिस्थितं वेश्म न बुद्धिः क्वापि रागिणी ।
स जितारिर्विशुद्धात्मा देवानामन्तिकं व्रजेत् ॥ १२ ॥

प्रशस्तकायकर्मान्तो यः पापविरतः सुखी ।
स कामविरतो ध्यायी देवानामन्तिकं व्रजेत् ॥ १३ ॥

पापमित्रविनिर्मुक्तस्तृष्णाविषविवर्जितः ।
न बद्धः स्त्रीमयैः पाशैर्देवानामन्तिकं व्रजेत् ॥ १४ ॥

प्रयत्नवादी यो धर्मे दानशीलसमाधिमान् ।
नित्योद्युक्तो दृढमतिर्देवानामन्तिकं व्रजेत् ॥ १५ ॥

सम्यग्बन्धनो येन पाशश्छिन्नो यथाऽसिना ।
सच्छिन्नपाशः स्ववशी देवानामन्तिकं व्रजेत् ॥ १६ ॥

## शुभकर्मविपाकेन देवलोके उद्भवः

मनुष्यभूता ये सत्त्वाश्चरन्ति सुकृतावहाः ।
तेन कर्मविपाकेन सुरलोके प्रसूयते ॥ १७ ॥

## धर्मपथाश्रिता एव बलिनः

मनुष्याणां बलाद् देवा देवानां बलिनो नराः ।
अन्योन्यबलिनो ते ये सद्धर्मपथमास्थिताः ॥ १८ ॥

## तिस्रोऽपायभूमयः

देवानां सुगतिर्मर्त्याः मर्त्यानां सुगतिः सुराः ।
अपायभूमयस्तिस्रः शुभकर्मविवर्जिताः ॥ १९ ॥

## सर्वं सुखं धर्माधीनम्

धर्माधीनं सुखं सर्वं धर्माधीना हि निर्वृतिः ।
धर्मः सुप्तेषु जागर्ति धर्मो हि परमा गतिः ॥ २० ॥

---

१. समुक्तमयं – ख ।

**देवैरसुरा जिताः**

धर्मेण निर्जितोऽधर्मः सत्येनानृतिको जितः ।
ज्ञानेन वर्जितो मोहो देवैस्तु ह्यसुरा जिताः ॥ २१ ॥

**देवलोकं सुखोदयम्**

सोपानभूता ये तानि कर्माणि त्रिदिवस्य हि ।
योनिं त्यक्त्वा नरा यान्ति [1]देवलोकं सुखोदयम् ॥ २२ ॥

**वाक्संयमेन बुधास्त्रिदिवं सुखं भुञ्जन्ति**

चतुर्विधो वाङ्नियमः कोऽपि त्रिविधपञ्चधा ।
सप्तसोपानमारूह्यं गच्छन्ति त्रिदिवं बुधाः ॥ २३ ॥

प्रभया ते च दिव्यन्तः स्वशरीरेण जातया ।
रमन्ते स्वर्गभुवने रञ्जिताः स्वेन कर्मणा ॥ २४ ॥

**शीलमेव शुभस्य कारणम्**

नित्यामोदविहारा (ये) नित्यं सौख्यविहारिणः ।
यद् देवा देवभवने शीलं तत्र हि कारणम् ॥ २५ ॥

यदप्सरः परिवृता यत् सूर्यशशिसन्निभाः ।
देवाः समन्ताद् देवेषु तत्सर्वशुभहेतुकम् ॥ २६ ॥

यदीप्सितं सम्भवति सम्भूतं च न हीयते ।
वर्तते च शुभं नित्यं तत् सर्वं शुभहेतुकम् ॥ २७ ॥

**शुभचारी देवानां समतां व्रजेत्**

शुभचारी सदा दानी[१] सर्वभूतदयारतः ।
दानमैत्र्या सदा युक्तो देवानां समतां व्रजेत् ॥ २८ ॥

प्राणातिपाताद् विरतः सर्वसत्त्वदयापरः ।
सम्यगाजीवकर्मान्तो[२] देवानां सङ्गतिं व्रजेत् ॥ २९ ॥

अदत्ते न रतिः किञ्चिद् दाने चास्य सदामतिः ।
शान्तेन्द्रियमतिर्धीमान् देवसङ्गतिमश्नुते ॥ ३० ॥

मिथ्याकामैर्विमुक्तो यः सत्पथाभिरतः सदा ।
निर्वाणकांक्षी विमलो देवानामन्तिकं व्रजेत् ॥ ३१ ॥

---

1. षड्देवलोकाः ( चातुर्महाराजिक-त्रयस्त्रिंश-याम-तुषित-निर्माणरति-परनिर्मित-वशवर्तिन इति देवाः ) इमे दशलोकाः कामधातुशब्देन गृह्यन्ते ।

---

१. दान्तः – क, ख ।   २. प्रयुक्तकर्मान्ते – क, ख ।

विमनस्कं हि यत् प्रीते पुरुषे कुरुते लघु ।
मद्यवर्जी परं धीरो देवानामन्तिकं व्रजेत् ।। ३२ ।।

**प्रमादविरहितः सुखमाप्नोति**

सुख ( प्राणो ) हि यो देवः प्रमादं नानुसेवते ।
सुखात् सुखमवाप्नोति निर्वृतिं चाधिगच्छति ।। ३३ ।।

क्षयावसानं तत् सौख्यं निर्वाणमिति शाश्वतम् ।
तत् संप्राप्यविमानेषु राजन्ते पुरुषोत्तमाः ।। ३४ ।।

उच्चादुच्चतरो मेरुस्तस्मादुच्चं सदा सुखम् ।
शुभेन नियतो जन्तुरकनिष्ठान् सुरान्[1] (जयेत्) ।। ३५ ।।

निरवद्ये[2] कुतस्तृप्तिर्देवलोके विशेषतः ।
अतीव सौख्यं लभते कस्माद् देवेषु सर्वदा ।। ३६ ।।

**कः सौख्यमुपलभ्यते ?**

तृष्णाग्निपरिदग्धेन न सौख्यमुपलभ्यते ।
एवं सुकृतदग्धेन न सौख्यमुपलभ्यते ।। ३७ ।।

त्रिविधं सुकृतं कृत्वा त्रिप्रकारं त्रिहेतुकम् ।
एतदग्र्यं त्रिभूमिष्ठं (त्रिगुणं च) फलं महत् ।। ३८ ।।

अहिंसादानपरमा ये सद्धर्मपरायणाः ।
सत्यक्षान्तिदमैर्युक्ताः त्रिदिवं (ते) समागताः ।। ३९ ।।

दिव्याभरणसम्पन्ना दिव्यमाल्यविभूषिताः ।
यद् देवा दिव्यमतयः (कुर्वन्ति) शुभमेव तत् ।। ४० ।।

देवानां यन्महत्सौख्यं(न)न्यूनाधिक्यमास्थितम् ।
न्यून-मध्यं तु यस्यैतत् फलं पुण्यस्य दृश्यते ।। ४१ ।।

**पुण्यकर्ता देवलोकं गच्छति**

येन यावद्धि यत् पुण्यं कृतं भवति देहिना ।
तस्य तावद्धि तत् सौख्यं देवलोकेषु पच्यते ।। ४२ ।।

**शीलसंरक्षणमावश्यकम्**

स्वागतं तव भो भद्र ! सुकृतं कृतवानसि ।
सप्तधा रक्षितं शीलं तस्यैतत् फलमागतम् ।। ४३ ।।

---

१. सुरोजमान्—क, ख । २. विषयेषु—ख ।

**रमस्व सह दैवतैः**

वनोपवनशैलेषु पद्माकरवनेषु च ।
हर्म्याग्रेषु रमस्व (त्वं काञ्चनेषु) सदैवतः ॥ ४४ ॥

वनोपवनशैलेषु[1] वैदूर्यशिखरेषु च ।
वनाद्रिषु च नैकेषु रमस्व सह दैवतैः ॥ ४५ ॥

कल्पवृक्षेषु रम्येषु नदीप्रस्रवणेषु च ।
सरित्सु च विशालासु (रमस्व) सह दैवतैः ॥ ४६ ॥

स्रोतस्विन्यादियुक्तेषु पर्वतेषु नदीषु च ।
नगरेषु[2] महार्थेषु रमस्व सह दैवतैः ॥ ४७ ॥

मदगन्धिप्ररोहेषु नीलोत्पलवनेषु च ।
यक्षसद्मसु[3] रम्येषु रमस्व सह दैवतैः ॥ ४८ ॥

भूमिभागेषु चान्येषु रत्नाकरवनेषु च ।
विमानेषु च रम्येषु रमस्व सह दैवतैः ॥ ४९ ॥

पञ्चाङ्गिकेन तूर्येण मनःप्रह्लादकारिणा ।
नृत्यमानः सुखी नित्यं रमस्व सह दैवतैः ॥ ५० ॥

शीलबीजं शोधयित्वा शीलेषु विविधेषु च ।
क्रीड त्वं विविधैर्दिव्यैर्यथार्थमनुसेवसे[4] ॥ ५१ ॥

यत्प्रभामालिनो देवा रमन्ते विविधैः सुखैः ।
तच्छुभस्य फलं दृष्टं निर्मलस्य विशेषतः ॥ ५२ ॥

यदेतैर्विविधैः सौख्यैर्देवाः क्रीडन्त्यनेकशः ।
न वयं हेतवस्तत्र (तत्र हेतुः) पुराकृतम् ॥ ५३ ॥

कूटागाराणि सर्वाणि कर्मचित्राणि सर्वदा ।
भुनक्ति देवो देवेषु सत्कृतेनोपबृंहितः ॥ ५४ ॥

पाशत्रयविमुक्तस्य पञ्चभिः पालितस्य वै ।
एकधर्मव्यतीतस्य देवलोको महीयते ॥ ५५ ॥

प्रमुद्यच्चेतसां पुंसां स्पष्टचेष्टा समाहिता ।
आगता देवसदनं स्वकर्मफलसाक्षिणी ॥ ५६ ॥

---

१. कांचनेषुवशैलेषु – क, ख ।
२. प्रस्थेषु – क, ।
३. सद्भोति – क, ख ।
४. भोक्ष्यसे–क ।

## सुकृतफलम्

उपर्युपरि सौख्यानि ( तथा च ) सुकृतस्य वै ।
भुञ्जन्ति विबुधाः स्वर्गं यद्धि पूर्वकृतानुगम् ॥ ५७ ॥

साक्षिभूता इमे सर्वकर्मणां विविधा द्रुमाः ।
निरन्तरं सुसदृशं कथयन्ति मनीषिणः ॥ ५८ ॥

## भाग्यं फलति सर्वत्र

येन येन विपाकेन यत्र यत्रोपपद्यते ।
पुरुषो लभते स्वस्य प्रारब्धस्य शुभाशुभम् ॥ ५९ ॥

## शुभकर्मणा प्राणी नित्यं देवेषु जायते

शुभेन कर्मणा जन्तुर्नित्यं देवेषु जायते ।
तथाऽशुभेन नरके पतन्ति पुरुषाधमाः ॥ ६० ॥

## कामिनो मरणं नावगच्छन्ति

शुभाशुभाभ्यां संरक्ताः कामिनः काममोहिताः ।
नावगच्छन्ति मरणं यदवश्यं भविष्यति ॥ ६१ ॥

शुभाशुभविपाकोऽयं यो वृक्षेषूपलभ्यते ।
न सौख्याद् विरमन्त्येते मनः सौख्येन मोहिताः ॥ ६२ ॥

## सुकृतं कृत्वा मानवाः देवेषु यान्ति

त्रिविधं सुकृतं कृत्वा भावयित्वा च सप्तधा ।
त्रिसंख्याकान् रिपून् हत्वा यान्ति देवेषु मानवाः ॥ ६३ ॥

## कः देवानामन्तिकं व्रजेत् ?

नासूयति क्रियाक्लेशान् न च नन्दीमसूयति ।
स नन्द्यसूयकः शुद्धो देवानामन्तिकं गतः ॥ ६४ ॥

विनिन्द्य मात्सर्यमिदं दुःखस्यायतनं महत् ।
समं च त्रिविधं दत्त्वा देवानामन्तिकं गतः ॥ ६५ ॥

प्राणिनां प्रणयं नित्यं रक्षयित्वाऽनुकम्पया ।
मैत्रचित्तः सदा दान्तो देवानामन्तिकं गतः ॥ ६६ ॥

अदत्तं च धनं दत्त्वा दत्त्वाऽऽनन्दं च सर्वतः ।
चेतनाभावितमतिर्देवानामन्तिकं व्रजेत् ॥ ६७ ॥

मातृवत् परदारांश्च दृष्ट्वा तत्त्वार्थचिन्तकः ।
अलिप्तो पापकैर्धर्मैर्देवानामन्तिकं व्रजेत्[1] ॥ ६८ ॥

( कृतः ) स्वचित्तप्रीत्यर्थं जिह्वारणिसमुद्भवः ।
कथ्यते स मृषावादस्तं हित्वा सुगतिं व्रजेत् ॥ ६९ ॥

पैशून्यं च सदा हित्वा मैत्र्यनर्थकरं पदम् ।
श्लक्ष्णप्रभः श्लक्ष्णमतिः देवानामन्तिकं व्रजेत् ॥ ७० ॥

पारुष्यं शत्रुवद्धीरो वर्जयत्येव सर्वदा ।
श्लक्ष्णप्रभामतिर्नित्यं सर्वेषु गतिगामिकः ॥ ७१ ॥

अधर्मो यस्य जिह्वाग्रे न भूतो न भविष्यति ।
सदा दुष्कालतत्त्वज्ञो देवानामन्तिकं व्रजेत् ॥ ७२ ॥

येनेदं रक्षितं शीलं सप्तधा बुद्धदेशितम् ।
स धीरः शीलतत्त्वज्ञो देवानामन्तिकं व्रजेत् ॥ ७३ ॥

**कः सफलः धर्मज्ञः ?**

विविधकर्मवशगं जन्मेदं लभते सुरैः ।
तत्प्राप्य यो न धर्मज्ञः स पश्चात् परितप्यते ॥ ७४ ॥

**सुकर्मणा शुभजं फलम्**

वनोपवनरम्योऽयं लतावेदिकमण्डपः ।
यद्विचित्रमयो लोकस्तत् सर्वं शुभजं फलम् ॥ ७५ ॥

येन येन यथा कर्म कृतं भवति शोभनम् ।
तस्य तस्य तथा दृष्टं फलं तदनुगामिकम् ॥ ७६ ॥

प्रत्यक्षं दृश्यते देवैर्हीनमध्योत्तमं सुखम् ।
येन येन यथा चीर्णं तस्य तस्य तथा फलम् ॥ ७७ ॥

**कुकर्मणा दुःखजं फलम्**

विचित्रवेषाः संमूढा देवा मोहवशानुगाः ।
तन्नाशान्मनसा मूढा न पश्यन्ति महद्भयम् ॥ ७८ ॥

विचित्रकामरतयो विचित्रफलकाङ्क्षिणः ।
न वा कुर्वन्ति कर्माणि तेऽसुरा मूढचेतसः ॥ ७९ ॥

---

1. पद्यमिदं भावदृष्ट्या तुलनीयम्—
मातृवत् परदारेषु परद्रव्येषु लोष्ठवत् ।
आत्मवत् सर्वभूतेषु यः पश्यति स पण्डितः ॥ इति ।

**के प्रेमपरायणाः ?**

फलं येषां प्रियं चित्तं न च शीले रता मतिः ।
ते प्रदीपं परित्यज्य प्रेमालोकपरायणाः ॥ ८० ॥

**हेतुफलतत्त्वज्ञाः सुखिनो भवन्ति**

ये हेतुफलसादृश्येनेच्छन्ति सुरसत्तमान् ।
ते हेतुफलतत्त्वज्ञा भवन्ति सुखभागिनः ॥ ८१ ॥

**ज्ञानादेव मुक्तिः**

विना बीजं फलं नास्ति विना दीपं कुतः प्रभा ? ।
विना शीलैः कुतः स्वर्गो मुक्तिर्ज्ञानं विना कुतः ? ॥ ८२ ॥

**कः धीमतः ?**

तत्सुखं यद्विमुक्तस्य गतकाङ्क्षस्य तायिनः ।
विमुक्तकामतृष्णस्य निर्ममस्य च धीमतः ॥ ८३ ॥

**सुकर्मैः सुखं भवत्येव**

यदिदं कर्मजं सौख्यं सर्वं (तज्ज्ञेय) कल्मषम् ।
यं नेष्टकं भवत्येव तत् सर्वममलं स्मृतम् ॥ ८४ ॥

**देवलोकस्य वर्णनम्**

यो मनोरथकृत्स्नस्य बहिरन्तश्च ( सर्वतः ) ।
सर्वालोकः सदालोको देवतागणसेवितः ॥ ८५ ॥

विराजते गिरिवरो रत्नमाणिक्यसन्निभः ।
प्रभूतसलिलो यश्च पद्मिनीभिः समावृतः ॥ ८६ ॥

वनोपवनरम्योऽयं मृगपक्षिनिषेवितः ।
कन्दरोदरसंरम्भो भित्वा गगनमुत्थितः ॥ ८७ ॥

**कुत्र देवतैः सेव्यते ?**

सेव्यते देवतैर्नित्यं दिव्यमाल्यविभूषितैः ।
नृत्यगीतप्रकृष्टाभिर्देवताभिश्च सर्वतः ॥ ८८ ॥

पञ्चाङ्गिकेन तूर्येण प्रेरित इव लक्ष्यते ।
शिरोभूतो महारम्यः प्रभामाली समन्ततः ॥ ८९ ॥

सुकृतेन शुभेनायं कर्मणाधिगुणेन वै ।
यं समाश्रित्य क्रीडन्ति देववृन्दानि सर्वतः ॥ ९० ॥

**के स्वर्गं गच्छन्ति ?**

दानशीलयुता वृद्धा नित्यं तद्गतमानसाः ।
ये भवन्ति सदा दान्तास्ते जनाःस्वर्गगामिनः ॥ ९१ ॥

संक्षिप्तमनसः शान्तास्ते जनाः स्वर्गगामिनः ।
वैरिणां विषयो नित्यं प्रशान्तमनसस्तु ये ॥ ९२ ॥

(वीतरागा वीतमोहास्ते जनाः) स्वर्गगामिनः ।
भवाभवेन तीव्रेण बाधते (यत्र) साधनम् ।
सुदान्तमानसां धीरास्ते जनाः स्वर्गगामिनः ॥ ९३ ॥

सत्यमार्गविलम्बेन हृष्यतीव सुखभागिनः ।
सारासारविधिज्ञाश्च ते जनाः स्वर्गगामिनः ॥ ९४ ॥

संसारे ये न रक्षन्ति स्वमनो (ननु) देहिनः ।
निर्वाणाभिरता नित्यं ते जनाः स्वर्गगामिनः ॥ ९५ ॥

वृक्षमूले श्मशाने वा तथा च गिरिकन्दरे ।
ध्यायिनः सत्त्वमनसस्ते जनाः स्वर्गगामिनः ॥ ९६ ॥

मात्रज्ञा देशकालज्ञाः पापमित्र(वि)वर्जिताः ।
मैत्रेण चेतसा ये तु ते जनाः स्वर्गगामिनः ॥ ९७ ॥

न स्नानदर्शनरता नराः मन्मथवारिणा ।
एकान्तगामिनः शान्तास्ते जनाः स्वर्गगामिनः ॥ ९८ ॥

क्षणे क्षणे सदा कायं पश्यन्त्यशुचिसम्भवम् ।
कार्याकार्यविधिज्ञा ये ते जनाः स्वर्गगामिनः ॥ ९९ ॥

धर्माणां धर्मतां ये च पश्यन्ति विविधा समाः ।
न च रक्षन्ति संसारे ते जनाः स्वर्गगामिनः ॥ १०० ॥

वेदना मध्यतत्त्वान्तमनेकविधसम्भवम् ।
पश्यन्ति च न रक्षन्ति ते जनाः स्वर्गगामिनः ॥ १०१ ॥

मायोपमं च क्षणिकं गन्धर्वनगरोपमम् ।
ये जानन्ति (सदा) चित्ताः ते जनाः स्वर्गगामिनः ॥ १०२ ॥

एकलक्षणतत्त्वज्ञा विलक्षणविदः स्वयम् ।
निर्वाणरागमनसस्ते जनाः स्वर्गगामिनः ॥ १०३ ॥

मातृवत् परदारान् ये पितृवत् सर्वदेहिनः ।
पश्यन्ति ये भयं लोके ते जनाः स्वर्गगामिनः ॥ १०४ ॥

शून्यवर्गगतो नित्यं सत्त्वानां प्रियवादिनः ।
अक्रूरा ऋद्धिमनसस्ते जनाः स्वर्गगामिनः ॥ १०५ ॥

काष्ठवल्लोष्ठवत् सर्वं परवित्तसमीक्षकाः ।
संतुष्टाः स्वेन चित्तेन ते जनाः स्वर्गगामिनः ॥ १०६ ॥

न रात्रौ न दिवा येषां कौसीद्यद्युतिरिष्यते ।
नित्योद्युक्तविहारा ये ते जनाः स्वर्गगामिनः ॥ १०७ ॥

कौकृत्यं स्त्यानमिद्धं च कौसीद्यं च विशेषतः ।
वर्जयन्ति सदा धन्यास्ते जनाः स्वर्गगामिनः ॥ १०८ ॥

दौःशील्यं पञ्चरन्ध्रेभ्यः परिशुद्धमनेकधा ।
संक्षिपन्ति सदा दुःखं ते जनाः स्वर्गगामिनः ॥ १०९ ॥

उपादानचतुष्टयज्ञाः सत्यानि च तथैव च ।
ये पश्यन्ति बुधाः प्रज्ञां ते जनाः स्वर्गगामिनः ॥ ११० ॥

दुःखं दुःखविपाकश्च दुःखेषु च मनश्च यत् ।
पश्यन्ति ये सदा तत्त्वं ते जनाः स्वर्गगामिनः ॥ १११ ॥

तीव्रव्यसनमापन्ना ये (च) धर्मविमुञ्चकाः ।
शान्ताश्च धर्ममतयस्ते जनाः स्वर्गगामिनः ॥ ११२ ॥

शुक्लावदातं ये वस्त्रं पांसुकूलं तथैव च ।
पिण्डपातरता नित्यं ते जनाः स्वर्गगामिनः ॥ ११३ ॥

अदण्डाः शान्तमनसो नित्यं ध्यानविहारिणः ।
नैष्कर्म्यनिरताः सर्वे ते जनाः स्वर्गगामिनः ॥ ११४ ॥

मृष्टं च यदि वाङ्मृष्टं यथेच्छाविधिमागतम् ।
सन्तुष्यन्ति न कुप्यन्ति ते जनाः स्वर्गगामिनः ॥ ११५ ॥

शुक्लावदातं ये वस्त्रं पांसुकूलं तथैव च ।
संवृतौ चैव संतुष्टास्ते जनाः स्वर्गगामिनः ॥ ११६ ॥

शय्यातले यथा भूमौ हर्म्याग्रे वा तथाऽपरे ।
न दुष्यन्ति (न हृष्यन्ति) ते जनाः स्वर्गगामिनः ॥ ११७ ॥

चक्षुर्विषयमापन्नं यत्कर्म साम्परायिकम् ।
तत्त्वतो ये प्रपश्यन्ति ते जनाः स्वर्गगामिनः ॥ ११८ ॥

अप्रियं वा प्रियं वापि ये श्रुत्वा तीव्रसम्भ्रमात् ।
अक्षुब्धमतयो मुक्तास्ते जनाः स्वर्गगामिनः ॥ ११९ ॥

षडिन्द्रियाणि सर्वाणि विषयाँस्तु तथैव च ।
संक्षिपन्ति न रक्षन्ति ते जनाः स्वर्गगामिनः ॥ १२० ॥

यथा कर्म कृतं सर्वमविशेषेण तत्त्वतः ।
पश्यन्त्यमनसो[1] धन्यास्ते जनाः स्वर्गगामिनः ॥ १२१ ॥

कर्मणां च विपाकं च कृतं (ये धीरचेतसा) ।
बिभ्यतीह[2] सदा दुःखे ते जनाः स्वर्गगामिनः ॥ १२२ ॥

इत्येतानि महार्थानि नित्यं दुःखकराणि च ।
कुर्वन्ति विधिवत् सर्वं ते जनाः स्वर्गगामिनः ॥ १२३ ॥

॥ इति देववर्गो द्वात्रिंशः ॥

१. विमना—क, ख । २. बिभेति—क, ख ।

## (३३) सुखवर्गः

### सुखस्वरूपनिरूपणम्

अनुत्तरेषु सौख्येषु[१] ध्यानोपात्तेषु ये रताः ।
तेषां [1]सुखं यथावत् स्यात् निर्वाणपुरदर्शकम् ।। १ ।।

नवेन सुखदुःखेन पुराणमभिहन्यते ।
देवस्यैतन्नवेनैव पुराणमभिहन्यते ।। २ ।।

धू(म)मिश्रं यथा काष्ठं वि(षा)मिश्रं यथोदनम् ।
तथा सुखमिदं सर्वमस्वत्वं नावगम्यते ।। ३ ।।

### निर्वाणपुरगामिनां सुखम्

तत् सुखं यद् वितृष्णानामेकान्तसुखचारिणाम् ।
निर्मोहिणामरागाणां निर्वाणपुरगामिनाम् ।। ४ ।।

तेषां विमलमाद्यन्तं सौख्यानामपि तत् सुखम् ।
येषां तृष्णानुगा चाशा सर्वथा नैव[२] चेतसि ।। ५ ।।

सङ्गृहीतस्य चित्तस्य निरात्मस्य च सर्वतः ।
कार्याकार्येषु मूढस्य सुखं नित्यमुपस्थितम् ।। ६ ।।

### कः श्रेष्ठः सुखी ?

सा बर्हिनिहता येन नन्दिसंसारहेतुकी ।
स धीरः पारगः श्रेष्ठः सुखी निर्वाणमाश्रितः ।। ७ ।।

नैतत् सुखेन तृष्णानां यद् रागद्वेषसंयुतम् ।
यत्र रागादिनिर्मुक्तं तत् सुखं निर्मलं मतम् ।। ८ ।।

---

1. आद्यपञ्चतर्कः तत्र प्रीति-सुख-समाधयः ।
प्रीत्यादयः प्रसादश्च द्वितीयेऽङ्गचतुष्टयम् ।।
तृतीये पञ्च तूपेक्षा स्मृतिर्ज्ञानं सुखं स्थितिः ।
चत्वार्यन्त्येस्मृत्युपेक्षाऽसुखाऽदुःखसमाधयः ।।
—अभिधर्मकोशस्य ध्यानवर्गः-७-८।

---

१. सौम्येषु–ख ।  २, सर्वानैवास्ति–ख ।

**कुत्र तृष्णा न बाधते ?**

देवलोके समासाद्य यः सुरो नावमन्यते ।
स सुखात् सुखतां याति यत्र तृष्णा न बाधते ।। ९ ।।

तदन्त्यसुखि श्रेयो यत्र मृत्युर्न विद्यते ।
मृत्युपाशैर्न बद्धस्य न सुखं विद्यते क्वचित्[१] ।
यत् सुखं कामजनकं न तत् सौख्यं सतां मतम् ।। १० ।।

यत्र कामविनिर्मुक्तस्तत्सुखात् सुखमुत्तमम् ।
यत् सुखं जनयेत् श्रेयः (पयोमिश्रं) यथोदनम् ।। ११ ।।

यत्र तृष्णाविनिर्मुक्तिः पयोमिश्रं यथोदनम् ।
यथा पद्मवने गृद्धा यान्ति (ते) क्रव्यभक्षिणः ।। १२ ।।

एवं शान्तेष्वरण्येषु न भान्त्यशुभचारिणः ।
क्वचिच्छान्तं वनं रम्यं क्वचिद् देवाः प्रमादिनः ।। १३ ।।

**कः परमं सुखं प्राप्नोति ?**

विपरीतं न सदृशं भानोः शीता यथा प्रभा ।
गततृष्णस्य यत् सौख्यं मुक्तदुःखस्य तायिनः ।। १४ ।।

तस्यान्तरेण सौख्यस्य सुखमेतन्न गण्यते ।
ध्यायिनस्त्वप्रमत्तस्य मुक्तपापस्य सर्वदा ।। १५ ।।

तत् सुखं तत् परं सौख्यं नेदं तृष्णाविदां मतम् ।
मुनिसेव्यं वनमिदं सेवितं च सुभाषितैः ।। १६ ।।

नार्हा (यूयं) रागगणं सेवितुं भो सुरोत्तमाः ।
यदेतद् भवतां सौख्यमेतन्न खलु शाश्वतम् ।। १७ ।।

तत् सुखं परमं शान्तं वीततृष्णै[२] निषेव्यते ।
निःसेवितं वनमिदं ये गताः परमं पदम् ।। १८ ।।

यत् प्राप्य सर्वदुःखस्यच्छेदो भवति सर्वथा ।
ब्रह्मचर्यादनिर्मृष्टाः शीलालापेन वञ्चिताः ।। १९ ।।

---

१. पङ्क्तिरियं 'क' पुस्तके नास्ति । २. गत–क, ख ।

**भिक्षूणां वने वास एव सुखावहः**

नार्हन्ति सेवितुं रम्यं वनं शान्तं सुभाषितम् ।
शान्तं च भावितं (चैव) रमते शुभगोचरे ।। २० ।।

न रागचारिणां चित्तं रमते वनगोचरे ।
न रागव्याकुलं चित्तं वनेषु लभते धृतिम् ।। २१ ।।

**कः पुरुषोत्तमः ?**

अव्याऽमूढा मतिर्यस्य नित्यं त्रिभुवनं करे ।
स रतिं लभते शान्तिं वने पुरुषसत्तमः ।। २२ ।।

**सुखाय वनं सेव्यम्**

स कल्परागकुटिलो नित्यं रागादिभिर्वृतः ।
स शान्तिं नैव लभते[1] वने शान्ते सुखावहे ।। २३ ।।

येषां तु मनसा नित्यं वने ध्याननियोगिनाम् ।
वनं तेषां सदारम्यं न तु रागगवेषिणाम् ।। २४ ।।

वनेषु भावितं चित्तं नगरेषु न कुप्यते ।
तस्माद् वनं सदा सेव्यं नगरं नैव शस्यते ।। २५ ।।

विक्षिप्यते हि नगरे नृणां रागादिभिर्वृतः ।
विक्षिप्तं मोहकुटिलं वनं भूयः प्रसीदति ।। २६ ।।

तस्माद् वनं परं शान्तं योगिनामालयं महत् ।
संसेव्यं वीतमनसा यस्य तद् वीतकल्मषम् ।। २७ ।।

**रतिं मा कृथा**

प्रशान्तेन्द्रियचित्तस्य या रतिर्योगिनो हृदि ।
नासौ शक्तिः सहस्रस्य (मानवानां) भविष्यति ।। २८ ।।

या ध्यानिनो रतिर्दृष्टा व्यवधानाय सर्वदा ।
न यामेष्वपि सा दृष्टा नित्यं रागानुरागिणी ।। २९ ।।

रतिर्या कामवशगा सा नित्यं दुःखसम्भवा ।
या तु क्लेशवशात् प्रीतिः (सा प्रीतिः)शाश्वता नहि ।। ३० ।।

---

१. भवने–क ।

**कः श्रेयस्पदं प्राप्नोति ?**

श्रेयो वनेषु चरितं तत्तदुच्चरितं नृभिः ।
यस्मात् तत् प्रतिबद्धं हि श्रेयसां पदमुच्यते ।। ३१ ।।

सुसम्भृतेन धर्मेण रक्षितेनेव चेतसा ।
सुदृष्टं लभते स्थानं यत्र दोषो न विद्यते ।। ३२ ।।

यः क्षिप्तमनसा नित्यं न च धर्मपरायणः ।
तेषां वृथा सुखमिदं गच्छति न निवर्तते ।। ३३ ।।

**तत्त्वज्ञा दुःखं न पश्यन्ति**

ये तु तत्त्वविदो धीराः पश्यन्ति जगतः स्थितिम् ।
अनित्यदुःखशून्यानां तेषां दुःखं न विद्यते ।। ३४ ।।

सुखधर्मस्य चरणं ज्ञानस्य च निषेवणम् ।
अहिंसा सत्यवचनं तदप्येकान्ततः स्थितम् ।. ३५ ।।

**कः स्वर्गं याति ?**

एकधर्मव्यतीता ये येऽधर्मपरिवञ्चकाः ।
त्रिस्थानलक्षणाविष्टास्ते जनाः स्वर्गगामिनः ।। ३६ ।।

**सुखस्य स्वरूपम्**

उदयव्ययधर्माणामनित्यं कर्मजं हि तत् ।
तत् सुखं सास्रवं नित्यं न भूतं न भविष्यति ।। ३७ ।।

तत् सुखं तद्वितृष्णस्य नीरागस्य हि देहिनः ।
मुक्तिर्भवति दोषस्य पारस्थस्य हि तापिनः ।। ३८ ।।

तत् किञ्चित् सास्रवं सौख्यं तत् सर्वं क्षणिकं मतम् ।
रागबन्धाद्[1] विनिर्मुक्तं तत् सर्वं निश्चलं सुखम् ।। ३९ ।।

ये न क्षिपन्ति दुःखेन सुखे येषां न सङ्गतिः ।
ते दुःखसुखनिर्मुक्ता निर्वाणसुखगामिनः ।। ४० ।

अनुपायेन ये मूढाः प्रार्थयन्ति सुखं सदा ।
बालुकाभिर्यथा[2] तैलं यल्लभ्यं नित्यमेव तत् ।। ४१ ।।

न चेतसा नरः प्राज्ञो मनोरथशतैरपि ।
शक्रोऽपि तत् सुखं कर्तुं यथा कर्म कृतं महत् ।। ४२ ।।

---

१. विनिर्मुक्तं–क, ख ।   २. धातुकाभि–क, ख ।

**सुखाय धर्ममाचरेत्**

ससुखं यस्य तु मनः सद्धर्मानुचरो भवेत् ।
दुःखैर्मुक्त्यभिलाषोऽयं स धर्मे कुरुते मतिम् ॥ ४३ ॥

नाहेतुकं सुखं दृष्टं दुःखं वा त्रिविधात्मकम् ।
सुखे दुःखे पृथग्भावे तस्मान्नु सुकृतं चरेत् ॥ ४४ ॥

नेदं सौख्यं सदा शस्तमध्रुवं विप्रलोपि च ।
तृष्णाविषेण सम्मिश्रं विषमिश्रं यथोदनम् ॥ ४५ ॥

तत् सौख्यं (हि) सतां शस्तं यत्र मृत्युर्न विद्यते ।
न च प्रियेण विश्लेषो नाप्रियेण[1] समागमः ॥ ४६ ॥

**कीदृशं सुखं दुःखजनकम् ?**

यदेतत् स्त्रीमयं सौख्यमेतद् दुःखाय कल्प्यते ।
तद्बीजवर्तका दृष्टा नरकेषूपपत्तये ॥ ४७ ॥

यत् सुखं दुःखजनकं कथं तत् सुखमिष्यते ? ।
दुःखाद् दुःखतरं ज्ञेयं परिणामवशेन तत् ॥ ४८ ॥

यदेतद् भुज्यते सौख्यमेतत् कालेन नश्यति ।
सूर्यस्यास्तङ्गतस्यैवं रश्मयः सह चारिणः ॥ ४९ ॥

विकृतिं यस्य ( च ) मनः सुखदुःखैर्न गच्छति ।
स धीमान् सुरलोके च गत्वान्यल्लभते सुखम् ॥ ५० ॥

भुक्तं सुखं पुराणं तु हीनकर्म करोति च ।
पुराणं सुकृतं शीर्णं मृत्युकाले न बुध्यते ॥ ५१ ॥

**सर्वं सुखमनित्यं भवति**

यदिदं दृश्यते सौख्यं मनोवाक्कामजंभृशम् ।
अनित्यं तद् विनाशत्वमचिरेण भविष्यति ॥ ५२ ॥

फेनबुद्बुदसङ्काशं मरीच्युदकसन्निभम् ।
चञ्चलोर्मि सुखं सर्वं विनिपातो भवार्णवे ॥ ५३ ॥

---

1. न तीक्ष्णेन च संभवः—क, ख ।

निष्प्रतीकारविषमः सर्वभूतभयावहः ।
चक्रवातप्रवेगो (वै) मृत्युराजैष धावति ।। ५४ ।।

नाशयित्वा सुखं सर्वं नाशयित्वा च जीवितम् ।
कर्मसङ्कल्पवाह्येषु लोकमन्यत्र नेष्यति ।। ५५ ।।

यदतीव सुखं नृणां तद्धि सौख्याय कल्प्यते ।
यन्नैष्यति सुखं किञ्चित् तद्धि नैव विगण्यते ।। ५६ ।।

वर्तमानं तु यत् सौख्यं तृष्णाविषविवर्जितम् ।
सर्वं ह्यनात्मजं दुःखमनित्यं संस्कृतं बलम् ।। ५७ ।।

## लौकिकं सुखं न सुखम्

यद् सुखं त्रिषु लोकेषु न शस्तं तत्त्वदर्शिभिः ।
तेन मत्वा कथं देवा भवन्ति विगतज्वराः ? ।। ५८ ।।

अविष्टोवतकालोऽयं भैरवो याति[१] सत्त्वरम् ।
यो भोक्ष्यते सुरान् सर्वान् शुष्केन्धनमिवानलः ।। ५९ ।।

अतियाति सुखं सर्वं क्रियतां श्रेयसं मनः ।
मा पश्चात् संभवो योगे मृत्युकालो भविष्यति ।। ६० ।।

## सुखमस्थिरं भवति

जन्मान्तरसहस्रेषु यद् मुक्तं कर्मजं सुखम् ।
तरङ्गसन्निभः क्वायं(जानीयाद्)बालिशोऽस्थिरम् ।।६१।।

## कः सुखेन प्रसीदति ?

न सुखैस्तृप्यते बालस्तथा काष्ठैर्यथाऽनलः ।
तस्मान्न(सुख)सक्तस्य सुखं भवति नैष्ठिकम् ।। ६२ ।।

विषस्य दोषमुक्तस्य कामदोषानुदर्शिनः ।
ध्यायिनश्चाप्रमत्तस्य तत् सुखं यदनाविलम् ।। ६३ ।।

सुखी भवति तत् प्राप्य न सुखं भवजन्मनः ।
बन्धमिश्रं विषं यद्वद् धर्मसौख्योदयस्तथा ।। ६४ ।।

---

१. धावति–क, ख ।

**कामविरहितः सुखमश्नुवते**

तस्मात् तत्सुखसक्तानां नित्यं कामगवेषिणाम् ।
भवन्त्यनेकसौख्या(नि)तस्मात् कामो न जायते ॥ ६५ ॥

**ज्ञानेनैवेन्द्रियाणि स्वगोचरे निवर्तन्ते**

नेन्द्रियाणां जयः शक्यः कर्तुं विषयगोचरे ।
ज्ञानेन हि निवर्तन्ते इन्द्रियाणि स्वगोचरे ॥ ६६ ॥

**बाला एव गतिपञ्चके भ्रमन्ति**

दुःखे सुखाभिसंसक्ता नित्यं बाला (ह्य)मेधसः ।
विपर्यया परिभ्रान्ता भ्रमन्ति गतिपञ्चके ॥ ६७ ॥

**कुत्र सुखं दुःखसदृशं भवति ?**

यदत्यन्तसुखं दृष्टं तत् सुखं सत्यमुच्यते ।
यत्र दुःखं विपाकं स्यात् तत् सुखं दुःखमेव तत् ॥ ६८ ॥

**पापस्याकरणमेव सुखम्**

अन्यागतस्य दुःखस्य प्रतिघातयते बुधः ।
पापस्य हेतुजं दुःखं पापस्याकरणं सुखम् ॥ ६९ ॥

॥ इति सुखवर्गो त्रयस्त्रिंशः ॥

## (३४) मित्रवर्गः

### कः पापान्निवारयति ?

तन्मित्रं [1]मित्रमित्युक्तं यन्मित्रं साम्परायिकम् ।
निवर्तयति यः पापाद् व्यसनाच्चापि रक्षति ॥ १ ॥

प्रवेशयति यन्नित्यं तद्धितं साम्परायिकम् ।
मित्रं भवति तन्नृणां न मित्रं पापकारकम् ॥ २ ॥

### संसर्गजा दोषगुणा भवन्ति

अपूतिः पूतिसंश्लेषात् पूतिरेवोपजायते ।
न पूतिः पूतसंश्लेषमपूर्ति कर्त्तुमर्हति ॥ ३ ॥

यादृशेन (हि) संश्लेषं कुरुते पुरुषः सदा ।
तद्दोषात् सदृशो दृष्टः शुभो वा यदि वाऽशुभः ॥ ४ ॥

### न शुभं दुःखकारकम्

शुभार्थी पुरुषः सर्वानशुभान्नैव सेवते ।
तेनासौ दुःखमाप्नोति न शुभं दुःखकारणम् ॥ ५ ॥

---

1. यैः यैः गुणैः जनाः जगद्वन्दनीया भवन्ति ते सर्वे भर्तृहरिणा स्वीये नीतिशतके लिखिता । यथा—

वाञ्छा सज्जनसङ्गमे परगुणे प्रीतिर्गुरौ नम्रता विद्यायां व्यसनं स्वयोषिति रतिः लोकापवादाद् भयम् । भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खलेष्वेते यत्र वसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः ।

—प्रतिग्राहकाभावेऽपि मैत्र्यादिवत् दातारं फलमुपगच्छति । मैत्रीभावस्यापि नास्ति कोपि प्रतिग्रहीता तथाऽपि तस्य फलं तद्भावसमापन्नस्य भवत्येव । इत्युक्तम् आचार्यवसुबन्धुना अभिधर्मकोशस्य कर्मनिर्देशे—

चैत्ये त्यागान्वयं पुण्यं मैत्र्यादिवत् अगृह्णाति ।
कुक्षेत्रेऽपीष्टफलता फलबीजाऽविपर्ययात् ॥

### गुणदोषयोर्लक्षणम्

संश्लेषजा गुणाः दृष्टा दोषाः संश्लेषजातयः ।
लक्षणं गुणदोषाणामिदमुक्तं स्वभावजम्[1] ॥ ६ ॥

यशसा युज्यते यो हि नित्यं साधुसमागमात् ।
असाधुऽसङ्गमाच्छीघ्रं प्रयाति पुरुषाधमः ॥ ७ ॥

### सत्सङ्गतिफलम्[2]

एतत् सारं सदा कार्यं यदसाधुविवर्जनम् ।
साधुभिश्च सदा वासो दुष्टाणां च विवर्जनम्[3] ॥ ८ ॥

दोषान् समुद्धरेद्धीमान् गुणवृद्धिं समाचरेत् ।
(साधु)मित्रं प्रकुर्वीत कौसीद्यविमुखो भवेत् ॥ ९ ॥

न मानिनं कुसीदं वा नित्यं सर्वानुशङ्किनम् ।
लिप्तपापमतिक्रूरं मित्रं कुर्यान्न पण्डितः ॥ १० ॥

उद्युक्तं मृदुजातीयं धर्मिष्ठं दोषवर्जितम् ।
सम्यग्दृष्टिरचपलं मित्रं सेवेत पण्डितः[१] ॥ ११ ॥

न पापकं भवेन्मित्रं भवेदुत्तमपौरुषः ।
उत्तमं भजमानस्य न दोषेभ्यो भयं भवेत् ॥ १२ ॥

---

1. पद्यमिदं तुलनीयम्—

यादृशो यस्य संसर्गो भवेत्तद्गुदोषभाक् ।
अयस्कान्तमणेर्योगादयोऽप्याकर्षको भवेत् ॥

—नीतिशतकम् ।

2. तुलनीयं पद्यमिदम्—

पापान्निवारयति योजयते हिताय गुह्यं निगूहति गुणान् प्रकटीकरोति ।
आपद्गतं च न जहाति ददाति काले सत्सङ्गतिः कथय किं न करोति पुंसाम् ॥

—भर्तृहरिशतकात् ।

3. पद्यमिदं तुलनीयम्—

सद्भिरेव सहासीतः सद्भिः कुर्वीत सङ्गतिम् ।
सद्भिर्विवादं मैत्रीञ्च नासद्भिः किञ्चिदाचरेत् ॥

—सूक्तिसौरभम् ।

---

१. न मनः–क, ख ।

**कः लघुतां याति ?**

रूपैश्वर्यकुलादीनि भिद्यन्ते ( यस्य ) देहिनः ।
भयप्रदं तं मातङ्गः प्रयान्तं नैव पश्यति ।। १३ ।।

उद्वृत्तः पुरुषो नित्यं प्रमादाकुलितेन्द्रियः ।
लघुतां याति लोकेऽस्मिन् प्रेत्यपापेषु पच्यते ।। १४ ।।

रूपैश्वर्यमदार्था ये ते नराः पापकारिणः ।
तेषां न सुशमं ( कर्म ) प्रेत्यपापेषु पच्यते ।। १५ ।।

रूपैश्वर्यकुलार्था ये न ते तत्त्वस्य भागिनः ।
अतत्त्वबुद्धयो बाला न तरन्ति भवार्णवम् ।। १६ ।।

**ज्ञानशीलावियुतं कुलं श्रेष्ठम्**

एतत्कुलं ये विभवा यच्चान्यत् सुखमिष्यते ।
सर्वाण्येतान्यनित्यानि तस्मात्तेषु न विश्रमेत् ।। १७ ।।

न ज्ञानशीलनिर्मुक्तं कुशलं यान्ति पण्डिताः ।
येषां ज्ञानं च शीलं च ते कुले महति स्थिताः ।। १८ ।।

चरितुं चामलं शीलं शीलमेव महाद्भुतम् ।
महाकुलप्रसूतास्ते ( पण्डिताः ) वशमानिनः ।। १९ ।।

दानशीलतपोध्यानसत्यैश्वर्यपराक्रमैः ।
संयुक्ता ये कुलीनास्ते ये न धर्मविवर्जिताः ।। २० ।।

नैश्वर्यज्ञानहीनस्य न कुलं नापि सङ्गतिः ।
तस्मात्कुलं ज्ञानमयं ज्ञानहीनं न तत् कुलम् ।। २१ ।।

।। इति मित्रवर्गश्चतुस्त्रिंशः ।।

# (३५) राजाववादवर्गः

## धार्मिको राजा स्वर्गं याति

भुवं परिजनो पश्यन् धर्मचारी जितेन्द्रियः ।
स राजा धार्मिको धीमान् स्वर्गलोकोपपत्तये ॥ १ ॥

## कः लोभनिर्मुक्तो राजा ?

नियतं यः करं काले धर्मेण परिभुज्यते ।
स राजा लोभनिर्मुक्तो यामानामधिपो भवेत् ॥ २ ॥

## राज्ञः स्वरूपम्

क्षमावान् प्रियवाक्यो यः क्रोधहर्षादिधारकः ।
स महीं पालयेत्त्वेनां लोके हि श्रेष्ठतां गतः ॥ ३ ॥

अपक्षपातिनः श्रद्धा मित्रेण च (वि)हन्यते ।
स राजन्यसभाजेता देवलोकाय कल्प्यते ॥ ४ ॥

बद्धदर्शी महात्मा यो गुरुपूजक एव च ।
अलोलो यो दृढमतिर्देवानामन्तिकं व्रजेत् ॥ ५ ॥

पूर्वं यत् पितृभिर्दत्तं देवानुपदिशन्ति च ।
न च हिंसति भूतानि स देवेषूपपद्यते ॥ ६ ॥

दानशीले सदा दक्षो धर्मवादी जितेन्द्रियः ।
स मत्वार्यां महीं कृत्स्नां देवलोकं महीयते ॥ ७ ॥

नाधार्मिकं धारयति धार्मिकेषु च रक्षति ।
स धर्मशीलसंशुद्धो देवानामन्तिकं व्रजेत् ॥ ८ ॥

न स्त्रीणां वशगो राजा साधूनां च वसेत् सदा ।
स निर्मलमतिर्धीरः सुरलोकोपपत्तये ॥ ९ ॥

न सर्वस्य वचोग्राही प्रियः साधुजनस्य तु ।
सोऽमृतस्तत्त्वदर्शीवा नाकृष्ट इव रोहति[१] ॥ १० ॥

---

१. हविष्यं–क, ख ।

**को यामानामधिपो ?**

यो धर्मलोभमायाति द्रविणं[1] नैव लप्स्यते ।
स लोभमलनिर्मुक्तो यामानामधिपो भवेत् ॥ ११ ॥

न मिथ्यादर्शनेनापि स्त्रीत्वदर्शनतत्परः ।
स शुद्ध एव विमलो यामानामधिपो भवेत् ॥ १२ ॥

**कः राजा देवप्रियो भवति ?**

प्राज्ञः शीले सदायुक्तो दानेनाभीक्ष्णतां गतः ।
प्रविजित्य महीं कृत्स्नां प्रेत्य देवप्रियो भवेत् ॥ १३ ॥

प्रियस्य तु भवेद् वाक्यं स्तोत्रोत्सवकरं परम् ।
आह्लादयित्वा वसुधामन्ते देवोपपत्तये ॥ १४ ॥

अविसंवादकं वाक्यं यस्य मेरुरिवाचलम् ।
सत्यसोपानमारुह्य देवानामन्तिके गतः ॥ १५ ॥

ह्रास-वृद्धी च भूतानामकस्मात् कुरुते हि यः ।
स राजा वै परो देवैर्देवलोके च तिष्ठति[2] ॥ १६ ॥

मनुष्यान्तरतत्त्वज्ञो यो वेत्ति हि बलाबलम्[3] ।
स धी-बलाभ्यां संयुक्तो यामानामधिपो भवेत् ॥ १७ ॥

त्रैधातुकपदं यच्च रत्नत्रयमिहोच्यते ।
यस्तत् पूजयते राजा स देवेषूपजायते ॥ १८ ॥

कालं नियतदर्शी यः प्रजानां च हिते रतः ।
सर्वतो भद्रकान्तारो देवानामधिपः स्मृतः ॥ १९ ॥

निन्दामलविनिर्मुक्तः सङ्गदोषविवर्जितः ।
ज्ञानगोचरसम्पूज्यो नियतं देव एव सः ॥ २० ॥

**कः स्वर्गं याति ?**

कौसीद्यदोषरहितो नित्यं दृढपराक्रमः ।
नाशयित्वा स दोषौघान् प्रेत्य स्वर्गेषु जायते ॥ २१ ॥

---

१. रोहकः—क, ख । २. तिष्ठेत्—ख । ३. बलेन—क,ख ।

**सन्मित्रैः परिवारितो राजा देवाधिपो भवति**

हितानि यस्य मित्राणि कर्मकर्तॄणि नित्यशः ।
स मित्रैः सम्परिवृतो नृपो देवाधिपो भवेत् ॥ २२ ॥

नानुसेवेत दुर्वृत्तान् वाक्क्षेपेण च वर्जितः ।
स सद्यो विषनिर्मुक्तः सुराणामधिपो भवेत् ॥ २३ ॥

क्रोधहर्षविघाताय न च पापेषु रक्ष्यते ।
स पापपङ्कनिर्धौतः सुरलोकाधिपः सदा ॥ २४ ॥

न शक्तः पानभोज्येषु संसक्तस्तु शुभे सदा ।
स शुद्धधर्मसन्दर्शी विबुधोऽधिकतां व्रजेत् ॥ २५ ॥

**कः पदमुत्तमं प्राप्नोति ?**

सुचिन्तितं चिन्तयति (यो) धर्मेषु च वर्तते ।
धर्मोदयेन दृष्टेन यथा याति त्रिविष्टपम् ॥ २६ ॥

संसाराद् दीर्घसूत्राद् यस्त्वरितं धर्ममाचरेत् ।
स दीर्घसूत्रनिर्मुक्तः प्रयाति पदमुत्तमम् ॥ २७ ॥

**धर्मेण प्रजापालकः स्वर्गसुखं याति**

धर्मेणैव प्रजा नित्यं प्रपालयति (यो) नृपः ।
स धार्मिकः प्रशस्तात्मा सुरलोके महीयते ॥ २८ ॥

दशेमे कुशला धर्मा इहोक्तास्तत्त्वदर्शिना[1] ।
यस्ते[2] प्रकुरुते धर्मान् स सुराधिपतां व्रजेत् ॥ २९ ॥

हेतुप्रत्ययसन्दर्शी मार्गामार्गौ तथैव च ।
स दृष्टिमलनिर्मुक्तो विबुधोऽधिकतां गतः ॥ ३० ॥

**कीदृशैर्गुणयुतः राजा देवानामधिपो भवति**

यो देवतां पूजयति यथा चाह्नि महीपतिः ।
स देवपूजितो भूयो देवानामधिपो भवेत् ॥ ३१ ॥

अनाविलेन मनसा प्रसन्नश्चाधिदारकः ।
स्वस्वदारैश्च सन्तुष्टो देवानामधिपो भवेत् ॥ ३२ ॥

---

१. घोषप्रोक्ता–क, ख ।    २. ते–क, ख ।

**कः शीलवान् ?**

ह्रीयते यो न विषयैः सर्वबालापहारिभिः ।
स शीलवान् दिवं याति नित्यं शीलेन रक्षितः ।। ३३ ।।

अविद्यावर्जकान्[1] नित्यं सेवते यः सुधार्मिकान् ।
सद्धर्मचिन्तकः सौख्यं कल्पते सुर(सं)सदि ।। ३४ ।।

(व्यापारैः स्वस्थचित्तो यः)पार्षदालापहारिभिः[2]।
स शीलवान् दिवं याति नित्यं शीलेन रक्षितः ।। ३५ ।।

**सद्धर्मी राजा एव वसुधाधिपतिः**

सद्व्यापाराद्धर्ममिमं पालयन् वसुधाधिपः ।
प्रशास्ति च महीं कृत्स्नां यामानामधिपो भवेत् ।। ३६ ।।

**सत्कर्मनिरतस्य राज्ञो भृत्योऽपि शोभते**

सत्कर्मनिरतो भृत्यो नृपे सद्गुणशालिनि ।
जनो निर्मलतां याति शरच्चन्द्र इवाम्बरे ।। ३७ ।।

**कः राजा देवतुल्यो भवति ?**

हेतुलक्ष्यविधिज्ञा[3] ये अविरुद्धाः परस्परम् ।
सम्यक्स्वाम्यर्थकर्त्तारः देवानां वशमागताः ।। ३८ ।।

।। इति राजाववादवर्गः पञ्चत्रिंशः ।।

---

१. अविनीत–ख । २. स्वदारेण–क, ख ।
३. लक्षे–क, ख ।

# (३६) स्तुतिवर्गः

**बुद्ध-स्तुतिः**

समसत्त्वाग्रवेदाय सर्वसत्त्वेषु बन्धवे ।
सन्मार्गसार्थवाहाय भवबन्धनभेदिने ॥ १ ॥

(ना)नादृष्टिविभेदाय सर्वसंशयमोचिने ।
सम्यग्दृष्टिनिवेशाय नमः सञ्ज्ञानचक्षुषे ॥ २ ॥

सर्वसङ्कटभेदाय त्रिदोषमलशोधिने ।
नमो नक्षत्रभूताय सर्वबीजफलोरुहे ॥ ३ ॥

सर्वप्रज्ञाकराग्राय सर्वध्यानाग्रवेदिने ।
सर्वरत्नोत्तमार्याय नमोऽग्लानाग्रदर्शिने ॥ ४ ॥

इयं सा लोकनाथस्य विप्रयुक्तस्य तापिनः ।
प्रतिमा दृश्यते शान्ता मोक्षमुद्‌घाट्यकारिका ॥ ५ ॥

समर्चतीमां नित्यं (यः) पुरुषः शान्तमानसः ।
स मुच्यते भवभयान्निर्वृत्तिं चाधिगच्छति ॥ ६ ॥

एतच्छान्तपदं रम्यमेतन्नैष्ठिकमुच्यते ।
यदयं भाषते धर्मं निर्वाणपुरदेशिकः ॥ ७ ॥

अस्य वाक्यं समालम्ब्य पुरुषाधीनविक्रमाः ।
आकर्षन्ति[१] पदं नित्यं यदनन्तसुखावहम् ॥ ८ ॥

एतत् पूर्वं समारुह्य पुरुषास्तत्त्वचिन्तकाः ।
त्रिलोकौघार्णवं घोरं तरन्ति भवसागरम् ॥ ९ ॥

अयं स चक्षुर्लोकस्य समन्ताद्धि विचक्षुषः ।
अयं ज्योतिः परं ज्योतिर्यज्ज्योतिःकाष्ठसम्भवम् ॥ १० ॥

कल्पान्तं प्राणिनां चित्ते नृणां रागादिभिर्मलैः ।
ज्ञानतोयेन महता शोधयत्येव वाङ्नृपः ॥ ११ ॥

यत्र दृष्टं पदं सर्वैस्तीर्थिकैर्ज्ञानपाणिभिः ।
तत्पदं विमलैर्वाक्यैस्त्वया नृणां प्रदर्शितम् ॥ १२ ॥

---

१. प्रापयन्ति—ख ।

प्रमादपरमोऽनाथो जनोऽयं तारितस्त्वया[१] ।
तीर्णः पारगतो नाथस्तारयत्यघनाशनात् ।। १३ ।।

हितार्थं सर्वजगतस्त्वमेवैको व्यवस्थितः ।
अहितानां हितायैव त्वमेव पुरुषोत्तमः ।। १४ ।।

अनादिमति संसारे नृणां क्लेशापहारकैः ।
त्वया विशोधितो वाक्यैस्तमः सूर्योदये यथा ।। १५ ।।

अक्षयः सर्वधर्माणां ज्ञानलोककरो महान् ।
त्वमेवैको जगन्नाथ [1]लोकोत्तरगुणार्णवः ।। १६ ।।

।। इति स्तुतिवर्गः षट्त्रिंशः ।।

पुण्य-देव-सुखैर्मित्र-राज-स्तुतिभिरन्विताः ।
सद्धर्मस्मृतिवैपुल्यै गृहीतोऽयं समुच्चयः ।।

## ।। इति चतुर्थम् उदानम् ।।

ये च धर्मा हेतुभवा तेषां तथागतोऽवदत् ।
तेषां च यो निरोधश्चैवंवादीमहाश्रमणः ।।

पुण्यमवाप्तमनन्त्रक्लेशं
विभिद्याजनवलाश्रीकम् ।
यावज्जगद्व्याकुलं तर्कनिष्ठैः
समाकुलं वेत्ति सत्यवचनैः ।।

**वैपुल्यमहागम्भीरोदधिसूत्रवराद्** भिक्षु(णा) अवलोकितसिंहेनोद्धृतमिति ।
**मोहाऽशिवादिरहितस्य** वाक्यविन्नस्य विपुलार्जनस्य **'धर्मसमुच्चयो' नाम धर्मपर्यायः समाप्तः ।**

।। इति शुभम् ।।

---

1. तत्क्षयाप्त्या क्षयज्ञानं अशैक्षोऽर्हन्नसौ तदा ।
लोकोत्तरेण वैराग्यं भवाग्रात् अन्यतो द्विधा ।।
लौकिकेनार्यं वैराग्ये विसंयोगाप्तयो द्विधा ।
केचित् लोकोत्तरेणाऽपि त्यक्ते क्लेशाऽसमन्वयात् ।।
—अभिधर्मकोशः–६।४५-४६ ।

---

१. भक्तारितस्तया--क, ख ।

## परिशिष्टम्–अ

# बौद्धधर्मस्य विकासक्रमः

अद्यप्रभृति २५०० वर्षप्राक्कपिलवस्तु-नामके नगरे महाराजशुद्धोदनस्य भवने बिम्बसारस्य (मगधः) राज्यकाले भगवान् बुद्धः आविर्बभूव। गौरवावहं यत् वैशाख-मासस्य पूर्णिमायां तिथौ बुद्धस्य लुम्बिनीवने ( रूमिनदेई ) प्रादुर्भावः, उरुबेलायाम् ( सारनाथे ) सम्बोधिप्राप्तिः तथा अस्यामेव तिथौ तेषां कुशीनगरे ( गोरक्षपुरे ) निर्वाणमभवत्। देशे विदेशेष्वपि तेषां प्रतिपादितस्य सदाचारसमन्वितस्य धर्मस्य कीदृशी स्थितिरासीत् तस्या ई० द्वादशशतकपूर्वं ( मन्ये अस्मिन्नेव समये 'धर्मसमुच्चयस्य' सङ्कलनं स्यात् ) संक्षिप्तं स्वरूपमुपस्थाप्यते—

**वि० पू०**

५०५—भगवतः बुद्धस्य प्रादुर्भावः।

४७१—सम्बोधिप्राप्तिः।

४२६—निर्वाणम्।

—भागवतः बुद्धस्य निर्वाणप्राप्त्यनन्तरं मगधराजधान्यां बौद्धानां प्रथमा सङ्गीतिः सञ्जाता।

—अस्यां सङ्गीतौ महाकाश्यपमहोदयस्य आध्यक्षे उपालि-आनन्दाभ्यां सुत्तपिटक–विनयपिटकयोः पाठस्य निर्धारणम्।

३८३—वैशालीति स्थाने बौद्धानां द्वितीया सङ्गीतिः। महासांघिक–स्थविरवाद-योर्मध्ये पार्थक्यम्।

—विनयपिटके समन्वयस्य प्रयत्नः।

२५०—तिस्समोगलिपुत्रेण 'कथावत्थु' इति ग्रन्थस्य निर्माणः।

२४७—पाटलिपुत्रे ( पटना ) तिस्समोगलिपुत्रस्य आध्यक्षे बौद्धानां तृतीया सङ्गीतिः।

—थेरवादस्य ( त्रिपिटकस्य ) सङ्ग्रहः, तस्योपरिबुद्धघोषद्वारा 'अट्ठकथा' व्याख्या।

**वि० पू०**

२४७—थेरवादिमहेन्द्रस्य (अशोकपुत्रस्य) अध्यक्षतायां श्रीलङ्कायाः अनुराधापुर-नामके स्थाने बौद्धानां प्रथमं सम्मेलनम् ।

२४६—महेन्द्रद्वारा सिंहलनामके स्थाने बौद्धधर्मस्य सर्वाधिकः प्रचारः ।

२१७—बौद्धधर्मस्य प्रचारार्थं बौद्धानां चीनदेशं गमनम् ।

१९९-१००—महायानधर्मस्य प्रादुर्भावः ।

—वैपुल्यसूत्राणां प्रणयनम् ।

१२५-९५—मिलिन्दपञ्हो इति ग्रन्थस्य निर्माणः ।

२९-१७—सिंहलीभाषायां त्रिपिटक-अट्ठकथा इतिग्रन्थयोः लिपिकरणम् ।

०२—राजायूचीद्वारा चीनदेशे बौद्धधर्मस्य प्रवेशः ।

**ई० सन्**

५०—अश्वघोषैः बुद्धचरित-वज्रसूचिकोपनिषद्-महायानश्रद्धोत्पादशास्त्र-इति ग्रन्थानां निर्माणः ।

५६—काश्यपमातङ्गै बौद्धग्रन्थानां चीनभाषायाम् अनुवादः ।

६४—चीनसम्राट् मिंगन्तीमहोदयानुसारं बौद्धग्रन्थानामन्वेषणार्थं विदुषां भारताऽऽगमनम् ।

१००—आचार्यवसुमित्रस्य अध्यक्षतायां कुण्डलवने ( कश्मीरे ) बौद्धानां चतुर्थं सम्मेलनम् ।

—सर्वास्तिवादिभिः समर्थनमस्य, किन्तु अस्य थेरवादिभिः बहिष्कारः ।

—सुत्त-विनय-अधिम्मेति विभाषापदवाच्यानां ग्रन्थानां संस्कृतभाषायाम् अनुवादः ।

१२०-२००—आचार्यनागार्जुनेन मध्यमकशास्त्र-विग्रहव्यावर्तिनी-शून्यतासप्तति-रत्नावलीति ग्रन्थानां निर्माणः ।

—प्रज्ञापारमिताशास्त्रस्य प्रणयनम् ।

१५०—धम्मपदस्य संस्कृतानुवादः ।

२१७—धम्मपदस्य चीनभाषायामनुवादः ।

२८६—सद्धर्मपुण्डरीकस्य चीनभाषायाम् अनुवादः ।

३२०—आचार्यमैत्रेयनाथैः अभिसमयालङ्कारस्य निर्माणः ।

ई० सन्

३५०—असङ्गमहोदयैः योगाचार-भूमिशास्त्र-महायानसमयालङ्कार-महायानोत्तर-तन्त्रनामाख्यानां ग्रन्थानां निर्माणः।

—आचार्यवसुबन्धुना अभिधर्मकोश-विज्ञप्तिमात्रतासिद्धिः-वादविधान इति ग्रन्थानां निर्माणः।

३७२- बौद्धधर्मस्य कोरियादेशे प्रवेशः।

४०१-४१३-आचार्यकुमारजीवैः मध्यमकशास्त्रस्य चीनभाषायामनुवादः।

४०५—प्रज्ञापारमिता-विभाषा इति ग्रन्थयोः चीनभाषायाम् अनुवादः।

४५०—आचार्यैः बुद्धघोषैः विनयपिटक-विसुद्धिमग्ग-अभिधम्मपिटकानां ग्रन्थानामुपरि भाष्यः।

४७५—आचार्यधर्मपालैः विसुद्धिमग्गोपरि भाष्यः।

४८०—आचार्यदिङ्नागैः प्रमाणसमुच्चय-आलम्बनपरीक्षयोः प्रणयनम्।

५३८—बौद्धधर्मस्य जापानदेशे प्रवेशः।

५५०—आचार्योद्योतकरैः न्यायवार्तिकस्य निर्माणः।

५६० -श्रीधर्मकीर्तिद्वारा प्रमाणवार्तिक-न्यायबिन्दु इति ग्रन्थयोः निर्माणः।

५६३-५६७ -आचार्यैः परमार्थैः अभिधर्मकोशस्य चीनभाषायामनुवादः।

६६०-६३५—आचार्यधर्मपालैः आलम्बनप्रत्ययस्य निर्माणः।

६४०—बौद्धधर्मस्य तिब्बतदेशे प्रवेशः।

६५० -श्रीदेवेन्द्रबुद्धिद्वाराप्रमाणवार्तिकपञ्जिकायाः संरचना।

६७५—आचार्यशान्तिदेवैः शिक्षासमुच्चय-बोधिचर्यावतार-सूत्रसमुच्चयानां ग्रन्थानां निर्माणः।

६९३-७१३—श्रीबोधिरुचिद्वारा त्रिपञ्चाशत् ( ५३ ) बौद्धग्रन्थानां चीनभाषायाम् अनुवादः।

७००—आचार्यविनीतदेवैः न्यायबिन्दु इति ग्रन्थोपरि समानान्तरसिद्धि-टीकायाः संरचना।

—श्रीजितेन्द्रबुद्धिद्वारा काशिकाविवरणपञ्जिका-प्रमाणसमुच्चयोः टीका।

ई० सन्

७४३–आचार्यशान्तिरक्षितैः तत्त्वसङ्ग्रहकारिकायाः संरचना ।

७७५–श्रीशङ्करानन्दैः सम्बन्धपरीक्षा-प्रमाणवार्तिकयोः स्ववृत्तिकटीका ।

८४७–आचार्यधर्मोत्तरैः न्यायबिन्दु-क्षणभङ्गसिद्धि-प्रमाणपरीक्षा इति ग्रन्थानाम् उपरि टीका ।

९७२–चीनभाषायामनुदितस्य धम्मपदस्य प्रथमं मुद्रणम् ।

९८०–आचार्यैः धर्मपालैः ( सुवर्णद्वितीयैः ) शिक्षासमुच्चयः समयालङ्कार इति ग्रन्थयोः टीका ।

९८२—आचार्यदीपङ्करश्रीज्ञानैः बोधिपाठप्रदीपस्य निर्माणः ।

१०००—श्रीरत्नकीर्तिद्वारा अपोहसिद्धिः–क्षणभङ्गसिद्धिः च ।

१०४०—आचार्यैः ज्ञानश्रीमित्रैः कार्यकारणभावसिद्धिः ।

११५३–११८६–श्रीलङ्कायां परपक्कमबाहुद्वारा अट्ठकथानां सङ्कलनम् इति ।

## परिशिष्टम्–आ

## DHARMASAMUCCAYA

It was in 1922 in the month of april that Pandit Siddha Harsa Vajracary a teacher of Buddhist and Nepalese works in tha school connected with the Katmandu state library told me of the discovery of an original manuscript written in an ancient Nepalese character and in the Sanskrit language. He had found it in the house of a Buddhist householder living in a noighbouring street of Katmandu the modern capital of Nepal. It was lying in a dark corner of the house and the Pandit had an occasion to go to the householder to see what books and manuscripts he had.

The name of the manuscript is distinctly stated at the colophon to be Dharmasamuccaya nama dharmaparyyaya or "the exposition of the law" the compendium of the law.

It means that work is a compilation or a collection of the materials which were obtained from the Dharma or the Tripitakadharma. It also signifies that the Ms. is a compendium of the Buddhist law as it embodies the principles of the doctrine as preached by Buddha and is a compilation giving a brief comprehensive summary of a larger work or even of Buddhism.

After paying homoge to the Teacher in one line the compiler mentions the texts from which he has quated.

Saddharmasmrtyupasthansutra-vaipulyasagarat,

Gatha samuddhrisyami loka locanatatpara.

[ opening verse ]

Vaipulyasaddharmayadahitasyasmrtyupasthite, Gatha-sutravaradhimayoddhrta [ colophon ] Again another line runs like this a Dharmasamuccaya nama Dharma-paryayahsamaptah Vaipulyamahagambhirodadhisutravarad Bhiksu Avalokitasimhenoddhrte iti. [ colophon ]

It is thus evident that Bhiksu Avalokitasimha was the compiler and that he had deduced the materials from the Saddharmasmrtyupasthanasutra and the Vaipulyasagara-sutra or the Vaipulyamahagambhirodedhisutra which I consider is the same as the just preceding one.

The Saddharmasmrtyupasthanasutra is undoubtedly a sacred work and belonge to the Sutra-pitaka, but we are sorry to say this Sutra is not available now for our perusal. That this Sutra was an independent one and existed in Nepal and India cannot de doubted the learned compiler has extracted much of his materials from the sutra, this is an admitted fact. It is enough to show that there existed at least one copy in Nepal

While referring to the fact that the sutra existed in India, we need only remind ourselves of the learned author of the Bodhicaryavatara and the Sutra-samuccaya. He is Shantideva, who according to an ancient Ms. found in Nepal, was the son of Raja Manju Varma and who become a Buddhist monk and master of the Tripitaka in the university of Nalanda. He was also called Bhusuka because he had become perfect in the practice of a Samadhi called 'Bhusuka-samadhi' when he held a controversy there he recollected his works which as the manuscript goes he had compiled previouslyar in his former birth. This shows they were earli-er works and had been written earlier than the seventh century A. D. The above reference is further supported by the fact that he has quated a passage from the Saddharma-smrtyupasthanasutra in the first chapter on Sraddha in

his Shikas-samuccaya. This is enough to show that the sutra existed earlier than the samuccaya by at least a few decades The latter work has been edited and also translated by Cecil Bendall. He says it is a work dealing with the future punisment of sins. But I belive that it must have been a work of for more importence, otherwise it would not have been possible for Bhiksu Avalokitasimha to get so much material for his Dharma-samuccya which as the following details will show, is a Voluminous work five times the size of the Pali Dhammapada as regards the number of verses:

The next important work that Bhiksu Avalokitasimha has referred to is the Vaipulyamahagambhirodadhisutra. This sutra too cannot be found in Napal at present. This must be a big and very important work giving an exhaustive interperetation of the higher doctrines of Buddhism as the name of the sutra implies, and as the Dharmasamuccaya itself testifies. The existence of this sutra in Nepal and the mention of some vaipulya works by the Baddhist pilgrims from China and the still popular classification of a certain work as Vaipulyasutras in Nepal are living evidences to show that there was a great Literature that was distinctly colled Vaipulyasutra or Sutras first in India and consequently in Nepal and the far east. The references in the commentary on the Sata-sastra Vaipulya drawn up by Dharmapala Bodhisattva of Kancipura. The ancient capital of Dravida those in Hiuen Tsangs account of India the quatation of the Mahavaipulyasutra in the Amitayurdhyanasutra and from the Jnaravaipulyasutra and the Arya sarvadharmavaipulyasangrahasutra in the Shiksa-samuccaya are sufficient evidences to prave the preceding fact.

The Dharmasamuccaya is written on Palm-leaves size 12 inches long and two and a quarter inches broad

in an ancient Bhujimo character which is the third of the thirteen or according to some fiften characters recognised in Nepal because manuscripts written in these characters were found there, The style of writting is uniform and exquisitely beautiful which few seribes of today con imitate.

The manuscript consists of 106 leaves carefully preserved 6 line in a page ( 63 letter in a line ) It is written on both sides. The leaves have been connected by means of a cord pierced through the middle–a system which prevailed centuries back when palm-leaf writing was in vogue. It is however very unfortunate to find that inspite of precautions taken to preserve the leaves infact leaves nos 49, 53–57, 66, 81 are missing. The appearance of the manuscript itself shows its freshness, though a few leaves are torn defaced and illegible. This must be due to the carelessness of the present owner.

Consequently the loss of a portion of the manuscript has affected some chapters as the compiler has distinctly written at the end that he saw the meaning of the Dharma explained here in a work of 2,684 slokas. The word here and the distinct number given above are enough to show that it is the number of stanzas containd in the Dharmasamuccaya and that it has nothing to he with the preceding line.

Becouse the Bhiksu or the Buddhist monk states thus—

Vaipulyamahagambhirodadhisutravarad Bhiksu Avalokitasimhenoddhrta iti.

Atra caturasitislokadhikasatsatottarasahasradvayaslokanam granthe drstamsphutarthaye–2684.

In the first line he says he had deduced ( the material ) from the Sutra already discussed namely the Vaipulyamahagambhirodadhisutra. Then just after that he says. Here I had for expanding the meaning seen (?) in a work of 2684 slokas Although it may seem confusing the number of the slokas repeated twice has been helpful in determining the fact.

The few leaves of the manuscript being lost the totel number of slokass available for our perusal comes to about 2200 only. Almost all the slokas are in a couplet form for each line on the average consists of 16 words. The Sanskrit language used is easy, comprehensive and simple. The technical words used are all found in the Buddhist Sanskrit Tripitaka.

As regards the main contents of the Dharmas amuccaya it is as told at the begining five times that of the Dhammapada written in Pali in the volume of details. The Dharmasamuccaya consists of 36 vargas or sections each giving a comprehensive delineation of a subject or principle of Buddhism. The following subjects form the main chapters of the Dharmasamuccaya.

| Name of the subject | | Its English interpretaion. |
|---|---|---|
| 1. Jita | varga | chapter on the victories. |
| 2. Dharmopadesa | ,, | ,, The preaching of the law. |
| 3. Kayajugupsa | ,, | ,, The abhorrence of the body. |
| 4. Parivarta | ,, | ,, Changefulness. |
| 5. Anityata | ,, | ,, The impermanence. |
| 6. Apramada | ,, | ,, The vigilance or lustless activity. |
| 7. Kamjagupsa | ,, | ,, The abhorrence or renunciation of sensual pleasures. |

| | | |
|---|---|---|
| 8. Trsna | varga | desire. |
| 9. Strijugupsa | ,, | , The abhorrence of the woman. |
| 10. Madyajugupsa | ,, | ,, The abhorrence of the intoxicating liquors. |
| 11. Citta | ,, | , The mind. |
| 12. Vak | ,, | ,, speech. |
| 13. Karma | ,, | ,, action. |
| 14. Samyojana | ,, | ,, wordly londage. |
| 15. Papa | ,, | ,, sin. |
| 16. Naraka | ,, | ,, hell. |
| 17. Preta | ,, | ,, preta or ghost. |
| 18. Tiryyak | ,, | ,, beast. |
| 19. Ksudha | ,, | ,, hunger. |
| 20. Kausidya | ,, | ,, indolence. |
| 21. Karuna | ,, | ,, mercy. |
| 22. Dana | , | ,, liberality. |
| 23. Shila | ,, | ,, moral practice. |
| 24. Ksanti | ,, | ,, patince. |
| 25. Viryya | ,, | ,, strenousness. |
| 26. Dhyana | ,, | ,, meditation. |
| 27. Prajna | ,, | ,, wisdom. |
| 28. Nirvan | ,, | ,, eternal freedom. |
| 29. Marga | ,, | , The way. |
| 30. Bhiksu | ,, | ,, The Buddhist monk. |
| 31. Punya | ,, | ,, righteousness |
| 32. Deva | , | ,, God. |
| 33. Sukha | ,, | ,, happiness. |
| 34. Mitra | ,, | ,, a friend. |
| 35. Rajavavada | ,, | ,, admonition to the king. |
| 36. Stuti | ,, | ,, entreaty. |

The above list of chapters contained in the Dharmasamuccaya will clearly show that the work is not a mere recension of the Pali or Sanskrit Dhamapada but an independent compilation based on the Saddharmasmrtyupasthana sutra and the Vaipulyagambhirodadhi sutra. Where the Samuccaya agrees with such work with reference to some vargas like the Anityata and Apramada vargas the details are more or less different amplified or modified. The Buddhitic technical works are of course the same throughout the Buddhist scriptures.

From various points of view it is clear that Dharmasamuccay is not a recension but an independent compilation and the greatest work of poetry of its kind in Buddhist literature particularly Sanskrit Buddhist literature Besides it is distinctly classified as belonging to the Dharmaparyaya ( धर्मपर्याय ), the learned compiler gives the name of the work as Dharmasamuccaya Nama Dharmaparyaya. It is this which makes it more clare that it has been compiled for interpreting Buddhism. The Scribe Bhiksu Sujita Srijnana of the Citra vihara who copied it for himself and for the good of others laya us under a great obligation for copying the name of the work intact thus revealing to us the fact that like the work of the Dhamapadaclass, there was a class of Buddhist literature distinctly known as the Dharmaparaye which has of coure been written specially for expounding the Dharma of the Buddha, under this class comes the Lalitavistara ( ललितविस्तर ) and the Arya Gandavyuha the eleventh sutra of the Aryavyuho Mahadharmaparyaya. This reference is given in the Arya Gandavyuhasutra which is also a work written with the principal object of describing the attainment of perfect enlightenment by one Sudhana as the prince of Kapilavastu has done. Full evidence are not forthcoming to illustrate the particular difference between the Vaipulyasutras and the

Dharmaparyaya as we find that the Lalitvistara is found to be classed as a work of the Dharamparyaya and also of the Vaipulyaclass.

The copyist a bhiksu put the following date as the time of his writing samvat 293 Vaisakhakrisnacaturthy. It name if was written in the samvat 293 which is of course the year of the Nepalese era, the work being copied in the reign of Raja Rudra Deva of Nepal. The Present year is the 1045th of the Nepalese era and the deed when it was copied by Bhiksu Sujita Srijanana of Citravihara, there fore is equivalent to 1173 A. D. So the manuscript was written and finished on the fourteenth dark fortnight day of vaisakha in the Christian era 1173.

This date is very importent to the student of the history of Nepal as it throws light on the state of Buddhism at least on the existence of the Bhiksu sangha in Nepal. The Camon belief amongst the Saiva brahmins and the present Gurkhas and Newars is that Shankaracarya (शङ्कराचार्य) and his successors had come to Nepal and destroyed the Buddhist religion and literature there. This is the main report which the non Buddhists in particular have been circulating for discouraging every. Buddhist activity up to date In fact we find from the gradual disappearance of the original Bhiksu and Bhiksuni sanghas of the original Buddhist scriptures of the Buddhist literary and manastic culture and of the state aid for Buddhist education. That there were same persecutions a thousant years back.

The names of two Bhiksus who compiled and copied the work respectively show that the Bhiksu-sangha was still existent and the Bhiksus were active. Preaching of the Buddhist. Law was still going on this is evident from the fact that Bhiksu Avalokita Simha had compiled the work especially with the object of enlightening the people and of showing

the true way to those who were busy with various religious disputes Moreover the work it self had the object of expounding the doctrine of Buddha to others.

Again the name of the king furnishes further evidence of Buddhist Predominance in Nepal. The Chronicle of Nepal shows that Raja Rudra Deva belonged to a Rajput dynasty a collateral branch of the solar dynasty of the former king Amsu Varma. Vamadeva was the first king of the Rajput dynasty and Mandeva was his great grandson who ruled 16 years and then abdicated in favour of his son Narasimha Deva. He then must have built a vihara which is still known as Mandeva samskrta vihara where he took ordination in the Bhiksusangha, remained in it and obtained salvation. The biographies of three Raja's are not given and then comes the name of Raja Mandeva's great grandson Raja Rudra Deva, who ruled only 7 years abdicated in favous of his son Mitra Deva and then took ordination. He remained in the old On kuli vihara which had been built by Raja Siva Deva Varma and which he had just repaired. This Raja although invited sent a statue of Dipankara Buddha in whose name the charity festival was celebrated to receive the offerings. He had also granted land and money with which the members of the vihara were to meet the necessary expenses. It is recorded that he remained to inform his great grandson Jayadeva Malla about the endowment. This shows that Rajas zealously worked for the promotion of the cause of Buddhism abdicated voluntarily for Nivana's sake repaired old Viharas and created new ones lived therein studying and practising Buddhist law to the end of their lives and the literary and monastic activities of the bhiksus were not marred by the intolerant policies of any interested sectarians at least 800 years ago.

As to the Citra vihara where the manuscript was written the great number of the Viharas all over Nepal does not allow any definite determination of the spot where it was located. Besides this the names of the Viharas appear to have under gone changes and the wants of a systematic chronology. and a detailed history of Napal are some of the obstacles.

The work will be published under the joint editorship of Dr. B. M. Barua of the Calcutta University and my-slef. It is a bigger Dhamapada an independent compilation of a Nepalese Bhiksu The materials were collected from now unknown works of Sanskrit Buddhist literature the chapters being more systematically, arranged than in any other works of the kind.

—By. Dharma Aditya Dharmacarya.

●

# परिशिष्टम्—इ

# धर्मसमुच्चयकोशः

## अ

**शब्दः** **पृष्ठाङ्कः**

**अकुशलधर्मः** ८०

सदैव अनिष्टफलोत्पादक। द्वेष, लोभ और मोह। अकुशल की दो महाभूमिकाएँ-आह्लीक्य ( कुकर्मों पर लज्जा न करना ) और अनपत्रपा ( दुष्कर्मों से भय न रखना ) इसकी वेदना कायिक होती है। विज्ञप्ति और अविज्ञप्ति अकुशल के दो भेद हैं। संप्रयोग काल में विज्ञप्ति एवं उस काल को छोड़कर अविज्ञप्ति होती है। ये दस हैं—प्राणातिपात ( हिंसा ), अदत्तादान ( चोरी ), मिथ्याचार ( व्यभिचार ), मृषावचन ( अनृत ), पिशुनवचन ( चुगली ), परुषवचन ( कटुवचन ), संप्रलाप (व्यर्थवचन ), अभिध्या (लोभ), व्यापाद (प्रतिहिंसा) और मिथ्यादृष्टि (असत्यज्ञान)। द्र०-आह्लीक्य एवं अनपत्रपा।

**अक्रोधः** ७

क्रोध का अभाव या निवारण। पुण्य। सामान्यधर्म के अन्तर्गत। अक्रोध से क्रोध पर विजय प्राप्त होती है। क्रोधजयी ही परमपद प्राप्त करता है। अक्रोधी दुःखरहित होता है।

**अदेशः** १८८

अवगुण। स्थानरहित। अस्तित्व के विना। देशस्थ देश है और देश में न रहने वाला अदेश।

**अद्वयम्** १९४

न द्वयम् अद्वयम्। सजातीय विजातीय स्वगतभेदशून्य परब्रह्म। सजातीय द्वितीयरहित। एकमात्र परमसत्ता। द्वयशून्य वस्तुमात्र। भगवान् बुद्ध। 'अद्वयमद्वैतं वदत्यवश्यम्' रामाश्रमी। माया। निर्वाण। तथागत न शून्य है, न अशून्य, न उभय और न न उभय—नागार्जुन। तत्त्व ( द्वयरहित ) का व्याख्यान। महायानधर्म 'अद्वयवाद' है।

असंग के अनुसार अद्वयवाद परमार्थ है। परमार्थ न सत् है न असत्, न तथा है न अन्यथा, न इसका उदय होता है न व्यय, न इसकी हानि होती है न वृद्धि और यह विशुद्ध नहीं होता है, पुनः विशुद्ध होता है।

**अद्वयगोचरः** २४३

बाह्य अर्थभाव से ज्ञानात्मक सभी वस्तुओं को स्वीकार करने वाला बौद्ध। एकमात्र परमसत्ता बुद्धत्व का प्रतिपादक। ध्यानपरायण। द्वय को न मानने वाला। विश्व और परमसत् बुद्ध के तादात्म्य का उपस्थापक। 'षडभिज्ञो दशबलोऽद्वयवादी बिनायकः' अमरकोशः १।१-१४। एकता एवं अनेकता रहित। अनास्रव धातुवत् बुद्ध देह रहित हैं। यथा पांशुवस्त्र कहीं रंगों से विचित्रित और कहीं अविचित्रित होता है, उसी प्रकार पूर्व प्रणिधानचर्या के बलाधान से बुद्धों की विमुक्ति में ज्ञान की विचित्रता होती है, किन्तु श्रावक प्रत्येक बुद्ध की विमुक्ति में अविचित्रता का दर्शक।

**अधर्मः** ७

विपरीतधर्म। धर्मविरोधी पाप और उसके कारणीभूत प्राणिहिंसादि। असद्धर्म। आस्रव काम-भव-दृष्टि और अविद्या ही अधर्म है। अधर्मवश जीव दुःखपङ्क में निमग्न रहता है। धर्म द्वारा ही अधर्म का नाश होता है। द्र०-धर्म।

**अनपत्रपा** १६५

धृष्ट। निर्लज्ज। 'अपत्रपाया अभावः अनपत्रपा' अर्थात् अपत्रपा (लज्जा) का अभाव। अपत्रपा लज्जा का ही एक भेद है, जो पिता आदि दूसरों से की जाती है। 'साऽपत्रपाऽन्यतः' अमरः १/७-२३। 'अकुशले त्वाह्रीक्यम् अनपत्रपा' व्या० १३१/३२। द्वितीय अकुशलधर्म।

**अनित्यम्** ३१

किसी भी वस्तु का नित्य न होना। 'सर्वम् अनित्यम्' अर्थात् संसार की सभी वस्तुएं अनित्य हैं। सर्वं क्षणिकम्। 'कारणानुसार उत्पन्न सभी वस्तुएं सब तरह से अनित्य हैं'—महापरिनिर्वाणसूत्र। 'अस्मिन् सति इदं भवति अस्मिन् असति इदं न भवति' इस प्रतीत्यसमुत्पाद सिद्धान्त से सांसारिक वस्तुओं की 'अनित्यता' एवं अनात्मता की सिद्धि। संस्कृत-धर्मचतुष्टय (जातिर्जरास्थितिरनित्यता) के अन्तर्गत—अभिधर्मकोशः २/४५। 'अनात्मता' में नञ् शब्द का अर्थ 'अभाव' है अर्थात् आत्मा (पञ्चस्कन्ध) को स्वीकार न करना। अनात्मवाद—पुद्गल, नैरात्म्य और सत्कायदृष्टि। बौद्धों का परम प्रचलित दार्शनिक सिद्धान्त।

